उत्तमानि तु चत्वारि गृहाणि गृहमेधिनाम्।
सौवर्णं राजतं ताम्रमायसं च प्रकीर्तितम्।।
सौवर्णं पुष्करं नाम राजतं श्रीभवं तथा।
ताम्रेण सूर्यमन्तं तु चण्डनाम तथायसम्।।
देवदानवगन्धर्वयक्षराक्षसकिन्नरैः।
द्वादशैते प्रकारास्तु गृहाणां नियताः स्मृताः।।
जातुषं त्वानिलं नाम त्रापुषं वारिबन्धकम्।
एवं जातिषु सर्वासु गृहाणि तु चतुर्दश।।

दारुकृतानां तु न विकल्पः। दारुकृतानाममीषां च सुवर्णादिकृतभित्तिविस्तारविकल्पो नास्त्येव, किं यद्भित्तिविस्तारमेव केवलं दारुसुवर्णादिरचितानां नेति; उत सर्व एव स्तम्भ-भूमिविभागा विकल्पा इति। अत्रोच्यते—सर्व एव विकल्पाः पक्वेष्टकाकृतानां क्रियन्ते, नान्येषाम्। दारुकृतादीनां तु पुनर्देवतानिवेशभोजनदेवागारमहानसादिनिवेशमात्रमेव क्रियते, नान्यदिति। तथा च तन्त्रान्तरे पठ्यते—

तत्र च विसस्यभूमेः परीक्षणं देवतानिवेशश्च।
तलकोच्छ्रायः कार्यो विधानतो वास्तुपुरुषस्य।।
शेषाणामपि च तथैव सन्निविष्टक्रिया समुद्दिष्टा।
भोजनशालासंस्थानलक्षणं चैषु सामान्यम्।।
नैषां नियमस्तलकोच्छ्रयेषु नायामविस्तरार्थेषु।
न द्वारेषु न दारुषु न पालिनाडीविभागेषु।।

इत्यलमतिप्रसङ्गेन प्रकृतमभिधीयत इति।।३९-४१।।

अधुनैकाशीतिपदस्य क्षेत्रस्य विभागप्रदर्शनार्थमाह—

**एकाशीतिविभागे दश दश पूर्वोत्तरायता रेखाः।**
**अन्तस्त्रयोदश सुरा द्वात्रिंशद्बाह्यकोष्ठस्थाः ।।४२।।**

इक्यासी पद के क्षेत्र बनाने के लिये दश रेखा पूर्वपरा और दश रेखा दक्षिणोत्तरा बनानी चाहिये, इस तरह रेखायें करने से ८१ कोष्ठ का क्षेत्र बन जायगा। उस कोष्ठ के बाहर तेरह और भीतर बत्तीस देवता होते हैं।।४२।।

एकाशीतिपदविभागार्थं क्षेत्रे दश रेखाः पूर्वापरायता दश दक्षिणोत्तरायताश्च कार्याः। एवं कृते एकाशीतिपदं क्षेत्रमुत्पद्यते। अस्य क्षेत्रस्यान्तर्मध्ये त्रयोदश सुराः देवाः स्थिताः। बाह्यकोष्ठस्था बहिष्कोष्ठेषु स्थिता द्वात्रिंशत्। एवं पञ्चचत्वारिंशत् सुरा अत्र क्षेत्र इति।।४२।।

तत्र द्वात्रिंशद्बाह्यकोष्ठस्थान् सुरानाह—

**शिखिपर्जन्यजयन्तेन्द्रसूर्यसत्या भृशोऽन्तरिक्षश्च।**
**ऐशान्यादिक्रमशो दक्षिणपूर्वेऽनिलः कोणे ।।४३।।**

**पूषा वितथबृहत्क्षतयमगन्धर्वाख्यभृङ्गराजमृगाः ।**
**पितृदौवारिकसुग्रीवकुसुमदन्ताम्बुपत्यसुराः ॥४४॥**

**शोषोऽथ पापयक्ष्मा रोगः कोणे ततोऽहिमुख्यौ च ।**
**भल्लाटसोमभुजगास्ततोऽदितिर्दितिरिति क्रमशः ॥४५॥**

पूर्वोक्त क्षेत्र में ईशान कोण से लेकर क्रम से शिखी, पर्जन्य, जयन्त, इन्द्र, सूर्य, सत्य, भृश और अन्तरिक्ष देवता हैं। अग्नि कोण से लेकर क्रम से अनिल, पूषा, वितथ, बृहत्क्षत, यम, गन्धर्व, भृङ्गराज और मृग देवता हैं। नैर्ऋत्य कोण से लेकर क्रम से पिता, दौवारिक, सुग्रीव, कुसुमदन्त, वरुण, असुर, शोष और पापयक्ष्मा देवता हैं। वायव्य कोण से लेकर क्रम से रोग, सर्प, मुख्य, भल्लाट, सोम, भुजग, अदिति और दिति देवता हैं।।४३-४५।।

ऐशानीं दिशमादितः कृत्वा क्रमशः क्रमेण कोष्ठकेषु शिख्याद्या देवा स्थिताः। तद्यथा—ऐशान्यां शिखी, केषाञ्चित् पक्षे शिखः। ततः परं तिर्यक्कृत्व द्वितीयकोष्ठके पर्जन्यः। ततो जयन्तः। तत इन्द्रः। ततः सूर्यः। ततः सत्यः। ततो भृशः। ततोऽन्तरिक्ष इति। दक्षिणपूर्वे कोणे आग्नेय्यां दिश्यनिलो वायुः केषाञ्चित् पक्षेऽनलोऽग्निः।

अनिलादनन्तरं क्रमेण दक्षिणस्यां दिशि पूषादयः स्थिताः। तद्यथा—पूषानन्तरं ततो वितथः। ततो बृहत्क्षतः, केषाञ्चित् पक्षे बृहत्क्षतिः। ततो यमः। ततो गन्धर्वाख्यः। ततो भृङ्गराजः। ततो मृगः। पित्रादयः पश्चिमायाम्। तद्यथा—पिता नैर्ऋतकोणे। ततोऽनन्तरं दौवारिकः। ततः सुग्रीवः। ततः कुसुमदन्तः। ततोऽम्बुपतिर्वरुणः। ततोऽसुरः।

ततः शोषः। अथानन्तरं पापयक्ष्मा। रोगः कोणे पश्चिमोत्तरे। तत उत्तरस्यां दिश्यहिः सर्पः। ततो मुख्यः। ततो भल्लाटः। ततः सोमः। ततो भुजगः। ततोऽदितिः। ततो दितिरित्यनेन प्रकारेण क्रमशः परिपाट्या देवाः स्थिता द्वात्रिंशत्।।४३-४५।।

अभ्यन्तरस्थितान् त्रयोदशाह—

**मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राच्याम् ।**
**एकान्तरात् प्रदक्षिणमस्मात् सविता विवस्वांश्च ॥४६॥**

**विबुधाधिपतिस्तस्मान्मित्रोऽन्यो राजयक्ष्मनामा च ।**
**पृथिवीधरापवत्सावित्येते ब्रह्मणः परिधौ ॥४७॥**

**आपो नामैशाने कोणे हौताशने च सावित्रः ।**
**जय इति च नैर्ऋते रुद्र आनिलेऽभ्यन्तरपदेषु ॥४८॥**

पूर्वोक्त क्षेत्र के अन्तर्गत ये देवता विराजमान हैं। जैसे मध्य के नव कोष्ठों में ब्रह्मा, ब्रह्मा से पूर्व अर्यमा, प्रदक्षिण क्रम से एक पद व्यवहित करके सविता, विवस्वान्, इन्द्र, मित्र, राजयक्ष्मा, पृथ्वीधर, आपवत्स—ये आठ देवता एकान्तर से ब्रह्माजी की परिधि

को व्याप्त करके विराजमान हैं। साथ ही ईशान कोण में पर्जन्य के नीचे आप, आग्नेय कोण में अन्तरिक्ष के नीचे सावित्र, नैर्ऋत्य कोण में दौवारिक के नीचे जय और वायव्य कोण में पापयक्ष्मा के नीचे रुद्र स्थित हैं।।४६-४८।।

मध्ये मध्यभागे ब्रह्मा पितामहो नवानां कोष्ठकानामधिपः स्वामी। अस्य ब्रह्मणः। अर्यमा प्राच्यां पूर्वस्यां दिशि स्थितः। अस्मादर्यम्ण एकान्तरादेकपदव्यवहितात् प्रदक्षिणं प्रादक्षिण्येन सवितृप्रभृतयः स्थिताः। तद्यथा—अर्यम्ण एकपदव्यवहितः सविता। तत एकपदव्यवहितो विवस्वान्।

ततोऽपि विबुधाधिपतिरिन्द्रः। तस्मादन्यो मित्रस्ततो राजयक्ष्मा नाम। ततः पृथिवीधरः। तत आपवत्स इत्येवं प्रकारा अष्टौ देवा एकान्तराद् ब्रह्मणः परिधिं व्याप्य स्थिताः।

ऐशाने कोणे पर्जन्याध आपो नाम स्थितः। हौताशने आग्नेये कोणे अन्तरिक्षस्याधः सावित्रः स्थितः। नैर्ऋते कोणे दौवारिकस्याधो जयः स्थितः। आनिले वायव्ये कोणे पापयक्ष्मणोऽधोभागे रुद्रः स्थितः। एते सुरा अभ्यन्तरपदेष्वैशानादिषु। यतो बाह्यपदेषु शिख्यादयः स्थिताः।।४६-४८।।

अथात्र स्थितानां देवतानां पदसंख्याप्रदर्शनार्थमाह—

**आपस्तथापवत्सः पर्जन्योऽग्निर्दितिश्च वर्गोऽयम्।**
**एवं कोणे कोणे पदिकाः स्युः पञ्च पञ्च सुराः ।।४९।।**

**बाह्या द्विपदाः शेषास्ते विबुधा विंशतिः समाख्याताः ।**
**शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्यास्ते ।।५०।।**

इस क्षेत्र के ईशान क़ोण में आप, आपवत्स, पर्जन्य, अग्नि, दिति—ये पाँच देवता एकपदिक ( एक-एक पद के स्वामी ) हैं। इसी तरह प्रत्येक कोण में पाँच-पाँच देवता एकपदिक हैं। जैसे—आग्नेय कोण में सविता, सवित्र, अनल या अनिल, अन्तरिक्ष, पूषा। नैर्ऋत्य कोण में इन्द्र, जय, दौवारिक, पिता, मृग और वायव्य कोण में राजयक्ष्मा, रुद्र, पापयक्ष्मा, रोग, नाग—ये पाँच देवता एकपदिक हैं। शेष बाह्य कोष्ठ में स्थित देवता द्विपदिक हैं, जो कुल बीस होते हैं। जैसे—पूर्व में जयन्त, इन्द्र, सूर्य, सत्य, भृश। दक्षिण में वितथ, बृहत्क्षत, यम, गन्धर्व, भृङ्गराज। पश्चिम में सुग्रीव, कुसुमदन्त, वरुण, असुर, शोष और उत्तर में मुख्य, भल्लाट, सोम, भुजग और अदिति—ये द्विपदिक देवता हैं। ब्रह्मा से पूर्व आदि दिशाओं में शेष अर्यमा आदि चार देवता ( अर्यमा, विवस्वान्, मित्र और पृथ्वीधर ) त्रिपदिक हैं।।४९-५०।।

आप एकः, आपवत्सो द्वितीयः, पर्जन्यस्तृतीयः, अग्निश्चतुर्थः, दितिः पञ्चमः। अयं वर्गः समूह एकपदिक एकैकस्मिन् पदे। एवमनेन क्रमेण कोणे कोणेऽश्यामश्यां पञ्च पञ्च सुरा देवाः पदिका एकपदस्वामिनः स्युर्भवेयुः। तद्यथा—आपः, आपवत्सः, पर्जन्यः, अग्निः, दितिरित्यैशानकोणे एकपदिकाः, सविता, सावित्रः, अर्यमा, अन्तरिक्षः, पूषा इति

पञ्चाग्नेयकोणे एकपदिकाः, विबुधाधिपतिः, जयः, दौवारिकः, पिता, मृग इति पञ्च नैर्ऋत-कोणे एकपदिकाः, राजयक्ष्मा, रुद्रः, पापयक्ष्मा, रोगः, अहिरिति वायवे कोणे पञ्चैकपदिकाः।

शेषा बाह्यकोष्ठेषु स्थिता विबुधा देवा द्विपदाः। पदद्वयस्वामिनस्ते च विंशतिः समाख्याताः। तद्यथा—जयन्तेन्द्रसूर्यसत्यभृशाः पूर्वस्यां दिशि द्विपदाः। वितथबृहत्क्षतयमगन्धर्वाख्यभृङ्गराजा दक्षिणस्यां द्विपदाः। सुग्रीवकुसुमदन्ताम्बुपत्यसुरशोषाः पश्चिमायां द्विपदाः। मुख्यभल्लाटसोमभुजगादितय उत्तरस्यां द्विपदाः। एवं विंशतिर्द्विपदाः। **शेषाश्चत्वारोऽन्ये त्रिपदा इति**। उक्तेभ्योऽन्ये शेषा ये चत्वारो विबुधा अर्यमाद्या दिक्षु प्रागाद्यासु ब्रह्मणः स्थितास्ते च त्रिपदास्त्रिषु पदेषु स्वामिनः। तद्यथा—अर्यमा विवस्वान् मित्रः पृथिवीधरश्चेत्येते त्रिपदाः स्वपदात् पार्श्वद्वये एतेषामन्यत्पदद्वयमिति। तथा च पराशरः—

'तत्र बहिर्देवताः प्राक्पर्जन्यकरग्रहमहेन्द्ररविसत्यभृशान्तरिक्षपवनाः। दक्षिणतः पूषावितथबृहत्क्षतयमभृङ्गगन्धर्वमृगपितरश्चेति। पश्चिमतो दौवारिकसुग्रीवपुष्पदन्तासुरवारुणयक्षरोगशोषाश्चेति। उदङ्नागराजमुख्यभल्लाटसोमादितिकुबेरनागहुतवहाः। तन्मध्ये ब्रह्मा तत्पुरतोऽर्यमा दक्षिणतो विवस्वान्मित्रः प्रत्युदक् पृथ्वीधर इति ब्राह्मपदानुषङ्गिणोऽष्टावन्ये। आपापवत्सावैशान्यां सावित्रसवितारावेवाग्नेय्यां जयेन्द्रौ नैर्ऋत्यां रुद्रवायू वायव्यामिति सर्वदेवताः पञ्चचत्वारिंशदिति। तथान्यैः सहैतेषां पदानामसादृश्यम्' इति। तथा च—

रुद्रा हुताशनश्चैव पिता चानल एव च।
एते कोणगता देवा एकाशीतिपदे स्थिताः।।
चतुःषष्टिपदेऽप्येवं पापयक्ष्मात्र न स्थितः।
एभ्योऽन्ये सदृशा ज्ञेयाः सुराः सर्वपदाश्रिताः।। इति।।४९-५०।।

अथास्य वास्तुनरस्याङ्गप्रविभागमाह—

**पूर्वोत्तरदिङ्मूर्धा पुरुषोऽयमवाङ्मुखोऽस्य शिरसि शिखी।**
**आपो मुखे स्तनेऽस्यार्यमा ह्युरस्यापवत्सश्च ।।५१।।**

**पर्जन्याऽद्या बाह्या दृक्श्रवणोरःस्थलांसगा देवाः।**
**सत्याद्याः पञ्च भुजे हस्ते सविता च सावित्रः ।।५२।।**

**वितथो बृहत्क्षतयुतः पार्श्वे जठरे स्थितो विवस्वांश्च।**
**ऊरू जानु च जङ्घे स्फिगिति यमाद्यैः परिगृहीताः ।।५३।।**

**एते दक्षिणपार्श्वे स्थानेष्वेवं च वामपार्श्वस्थाः।**
**मेढ्रे शक्रजयन्तो हृदये ब्रह्मा पिताऽङ्घ्रिगतः ।।५४।।**

यह वास्तु पुरुष ईशान कोण की ओर शिर करके अधोमुख होकर स्थित है। इसके शिर में अग्नि, मुख में आप, स्तन में अर्यमा और छाती में आपवत्स स्थित हैं। बाह्य कोष्ठस्थित पर्जन्य आदि देवता नेत्र, कान, छाती और कन्धे में स्थित हैं। जैसे—नेत्र में

पर्जन्य, कान में जयन्त, छाती में इन्द्र और कन्धे में सूर्य स्थित हैं। तथा भुजा में सत्य आदि पाँच देवता ( सत्य, भृश, अन्तरिक्ष, अनिल और पूषा ), हाथ में वितथ और बृहत्क्षत, पेट में विवस्वान्, ऊरु में यम, जानु में गन्धर्व, जंघा में भृङ्गराज और कुल्ले में मृग स्थित है। ये सब देवता दक्षिण अङ्ग के हैं। इसी तरह वाम पार्श्व के सभी अङ्गों में देवता हैं। जैसे कि वाम स्तन में पृथिवीधर, नेत्र में दिति, कान में अदिति, छाती में भुजग, कन्धे में सोम, बाहु में भल्लाट, मुख्य, अहि, रोग और पापयक्ष्मा, हाथ में रुद्र और राजयक्ष्मा, बगल में शोष और असुर, ऊरु में वरुण, जानु में कुसुमदन्त, जंघा में सुग्रीव तथा कुल्ले में दौवारिक स्थित है। इसी तरह लिङ्ग में शक्र और जयन्त, हृदय में ब्रह्मा और पाँव में पिता स्थित हैं। इस तरह इक्यासी पद में नगर, ग्राम, गृह आदि के सम्बन्ध में वास्तु पुरुष के अङ्गों का विभाग करना चाहिये।।५१-५४।।

अयं पुरुषो वास्तुनरः पूर्वोत्तरदिङ्मूर्धा। पूर्वोत्तरा ऐशानी दिक् तस्यामस्य शिरः। अवाङ्मुखोऽधोमुखः स्थितः। अस्य वास्तुनरस्य शिरसि मूर्धनि शिखी अग्निः स्थितः। आपो मुखे वदने। स्तने अस्यार्यमा स्थितः। उरसि वक्षसि आपवत्सः।

पर्जन्याद्याः पर्जन्यप्रभृतयो बाह्या बाह्यकोष्ठस्था यथाक्रमं दृक्श्रवणोरःस्थलांसगा देवाः स्थिताः। तद्यथा—पर्जन्यो दृशि चक्षुषि। जयन्तः श्रवणे कर्णे। इन्द्र उरःस्थले। सूर्योऽसे स्कन्धे। सत्याद्याः पञ्चके सत्यभृशान्तरिक्षानिलपूषणः। एते भुजे बाहौ स्थिताः। हस्ते पाणौ सविता तथा सावित्रश्च स्थितः।

वितथो बृहत्क्षतयुतः पार्श्वस्थितः। विवस्वानादित्यो जठरे उदरे। ऊर्वादयो यमाद्यैः परिगृहीता अधिष्ठिताः। तद्यथा—ऊरुप्रदेशे यमः। जानुनि गन्धर्वः। जङ्घायां भृङ्गराजः। स्फिजि मृगः।

एते यथोद्दिष्टा दक्षिणे पार्श्वे देवाः स्थिताः। एवमनेन प्रकारेणैतेषु स्थानेषु वामपार्श्वे स्थिताः। तद्यथा—वामे स्तने पृथिवीधरः। दितिर्दृशि। अदितिः श्रवणे। भुजग उरःस्थले। सोमोंऽसे। भल्लाटमुख्याहिरोगपापयक्ष्माणो भुजे। रुद्रराजयक्ष्माणौ हस्ते। शोषासुरौ पार्श्वे। ऊरुप्रदेशेऽम्बुपतिः। कुसुमदन्तो जानुनि। सुग्रीवो जङ्घायाम्। दौवारिकः स्फिजि। एवं वामपार्श्वे स्थिताः। मेढ्रे लिङ्गे शक्रजयन्तौ स्थितौ। ब्रह्मा हृदये। पिता अङ्घ्रिगतः पादाश्रितः। एवमेकाशीतिपदे नगरग्रामगृहवास्तुपुरुषे प्रविभागः।।५१-५४।।

अधुना चतुःषष्टिपदस्य वास्तुनरस्य प्रविभागप्रदर्शनार्थमाह—

**अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगास्तिर्यक् ।**
**ब्रह्मा चतुष्पदोऽस्मिन्नर्धपदा ब्रह्मकोणस्थाः ।।५५।।**

**अष्टौ च बहिष्कोणेष्वर्धपदास्तदुभयस्थिताः सार्धाः ।**
**उक्तेभ्यो ये शेषास्ते द्विपदा विंशतिस्ते हि ।।५६।।**

अथवा चौंसठ पद का क्षेत्र बनाना चाहिये ( नव पूर्वापरा और नव दक्षिणोत्तरा

रेखा खींचकर चौंसठ पद का क्षेत्र बनाना चाहिये )। फिर इसके चारो कोनों में कर्णाकार दो-दो रेखायें खींचने से यह क्षेत्र बन जाता है। इस क्षेत्र में चार पदों का स्वामी ब्रह्मा और ब्रह्मा के चारो कोनों में आठ देवता ( आप, आपवत्स, सविता, सवित्र, इन्द्र, जयन्त, राजयक्ष्मा और रुद्र ) और बाहर के चारो कोनों में आठ देवता ( शिखी, अन्तरिक्ष, अनिल अथवा अनल, मृग, पिता, पापयक्ष्मा, रोग और दिति ) अर्धपदीय हैं। इनके दोनों तरफ पर्जन्य, भृश, पूषा, भृङ्गराज, दौवारिक, शोष, नाग और अदिति सार्धपदीय ( डेढ़ पद के स्वामी ) हैं तथा शेष बीस देवता ( जयन्त, इन्द्र, सूर्य, सत्य, वितथ, बृहत्क्षत, यम, गन्धर्व, सुग्रीव, कुसुमदन्त, वरुण, असुर, मुख्य, भल्लाट, सोम, भुजग, अर्यमा, विवस्वान्, मित्र और पृथ्वीधर—ये बीस देवता ) द्विपदीय हैं।

**विशेष**—यहाँ पर केवल चतुरस्र क्षेत्र में वास्तु नर का प्रदर्शन किया गया है; किन्तु वृत्त, त्रिकोण, षट्कोण आदि आकृति वाले भी गृह, ग्राम, नगर आदि देखे जाते हैं। अतः वृत्त, त्रिभुज आदि में किस प्रकार वास्तु नर का स्थापन करना चाहिये, इसको ग्रन्थान्तरों में इस प्रकार कहा गया है—

**वृत्त में इक्यासी पद वाले वास्तु नर का स्थापन-क्रम**—इक्यासी पद वाले वृत्तक्षेत्र में पाँच वृत्त बनाकर उनमें बाहर के दो वृत्तों में बत्तीस-बत्तीस पद, तीसरे में बारह पद, चौथे में चार पद और पाँचवें में केवल एक पद बनाना चाहिये। यहाँ मध्य के पाँच पद में ब्रह्मा, बाहर के दोनों वृत्तों में दो-दो पद वाले शिखी आदि बत्तीस देवता और अर्यमा आदि चार देवता तीन-तीन पदों में लिखे जायेंगे। इस प्रकार वृत्तक्षेत्र में इक्यासी पद के वास्तु नर का स्थापन हो जाता है।।५५-५६।।

**त्रिभुज में इक्यासी पद वाले वास्तु नर का स्थापन-क्रम**—इक्यासी पद वाले त्रिभुजाकार वास्तु नर क्षेत्र में पाँच त्रिभुज बनाकर उसके प्रथम भाग में दोनों कोनों को छोड़ कर पूर्व दिशा की भुजा का आठ भाग करे और अन्य दो भुजाओं के बारह-बारह भाग करे। तीनों कोनों में दिति, वायु और वरुण का स्थापन करे। फिर प्रथम भाग के शेष पदों में शिखी आदि देवताओं का स्थापन करे। इसी तरह द्वितीय भाग में भी पूर्वोक्त शिखी आदि देवताओं का स्थापन करे तथा इस भाग के तीनों कोनों पर भी प्रथम कोण-स्थित देवताओं का स्थापन करे और शेष पदों में वास्तुकोष्ठस्थित शेष देवताओं का स्थापन करे। तृतीय भाग में तीनों दिशाओं में चार-चार पद बना कर उनमें प्रदक्षिणक्रम से अर्यमा, सवित्र, सविता, विवस्वान्, इन्द्र, मित्र, जय, हर, राजयक्ष्मा, भूमिधर, आप और आपवत्स का स्थापन करे। चतुर्थ ( मध्य ) भाग के पाँच पदों में ब्रह्मा का स्थापन करे। इस प्रकार त्रिभुज क्षेत्र में इक्यासी पद के वास्तु नर का स्थापन हो जाता है।

**वृत्त में चौंसठ पद वाले वास्तु नर का स्थापन-क्रम**—चौंसठ पद वाले वृत्ताकार

वास्तु नर क्षेत्र में समानान्तर चार वृत्त बनाकर प्रथम वृत्त के बत्तीस, द्वितीय के सोलह, तृतीय के बारह और चतुर्थ के चार भाग बनाने के पश्चात् प्रथम वृत्त में शिखी आदि बत्तीस देवता एकपदीय, द्वितीय वृत्त में अर्यमा आदि आठ देवता द्विपदीय, तृतीय वृत्त में आप आदि चार देवता त्रिपदीय और चतुर्थ वृत्त में ब्रह्मा चतुष्पदीय स्थापन बना चाहिये।।५५-५६।।

अथाष्टाष्टकपदं चतु:षष्टिपदं क्षेत्रं कारयेत्। एतदुक्तं भवति—नव नव पूर्वोत्तरायता रेखा: कृत्वा चतु:षष्टिपदानि भवन्ति। तत्र कोणगास्तिर्यक्चतस्रो रेखा: कृत्वा कोणचतुष्टये तिर्यग्रेखा: कोष्ठत्रये मध्यगता: कार्या इति। अस्मिंश्चतुष्षष्टिपदे क्षेत्रे मध्ये ब्रह्मा चतुष्पद:। ब्रह्मकोणस्था अष्टौ विबुधा अर्धपादा:। तद्यथा—आप: आपवत्स: सविता सावित्रो विबुधाधिपतिर्जयन्तो राजयक्ष्या रुद्रश्चेति बहिष्कोणेषु बाह्यकोणेष्वष्टौ स्थिता:। शिख्यन्तरिक्षानिलपितृपापयक्ष्मरोगादितय एते अर्धपदा:। तदित्यनेन शिख्यादीनां कोणगानां परामर्श:। तेषामुभयपार्श्वगा:। तद्यथा—पर्जन्यभृशभृङ्गराजदौवारिकशोषनागाधिपतय एते सार्धपदिका:। उक्तेभ्य: कथितेभ्यो ये शेषा: परिशिष्टा विंशतिस्ते द्विपदा:। तद्यथा—जयन्तेन्द्रसूर्यसत्यवितथबृहत्क्षतयमगन्धर्वकुसुमदन्ताम्बुपत्यसुरमुख्यभल्लाटसोमभुजगार्यमविवस्वन्मित्रपृथिवीधरा:। एते विंशतिर्द्विपदा:। एष चतु:षष्टिपदो वास्तुनर:। एतै: केचिद् बृहद्वास्तुनरमिच्छन्ति, तदपि न कश्चिद्दोष:। अनेन प्रविभागेण कोणस्थं द्वारं ज्ञायते नि:सन्दिग्धमिति। अत्राचार्येण चतुरस्रे क्षेत्रे वास्तुनर: प्रदर्शित:, न वृत्तषडश्र्यष्टादशाश्रिषोडशाश्रीणां क्षेत्राणाम्। लोके च गृहग्रामनगराणि दृश्यन्ते। तद्यथा अनेनैवाचार्येणोक्तम्—तत्र षडश्रिर्मेरु:। वृत्त: समुद्गनामा—इत्यादि। तथा भरतमुनिना त्र्यस्रं वृत्तं गृहमुक्तम्। तस्मादन्यशास्त्रादानीय प्रसङ्गा-दस्माभिरिह प्रदर्श्यते। तद्यथा—

एकाशीतिपदे क्षेत्रे कर्तव्यं वृत्तपञ्चकम्।
बाह्ये वृत्तद्वयं यत्तत्पदद्वात्रिंशता युतम्।।
तृतीयं द्वादशपदं चतुर्थं तु चतुष्पदम्।
केवलं पञ्चमं कार्यं ब्रह्मा पञ्चस्ववस्थित:।।
शिख्यादयस्तु द्विपदा बहिर्विष्कम्भसंस्थिता:।
अर्यमाद्या: सुरा: सर्वे पदिका: परिकीर्तिता:।।

इति वृत्तक्षेत्रे एकाशीतिपदे—

वृत्तानि चत्वारि समानि कृत्वा वास्तोश्चतु:षष्टिपदस्य सम्यक्।
अधस्तदर्धेन च सूर्यवेदैर्विभज्यते वृत्तचतुष्टयं च।।
शिख्यादयश्चैकपदे निविष्टा: पदद्वये चार्यमकादयश्च।
आपादयश्च त्रिपदा: प्रतिष्ठाश्चतुष्पदश्चात्र पितामह: स्यात्।।

## चतुरस्त्रे एकाशीतिपदो वास्तुनरः

ई पू अनलः आ

| शिखी | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्त-रिक्षः | अनिलः |
|---|---|---|---|---|---|---|---|---|
| दितिः | आपः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | सावित्रः | पूषा |
| अदितिः | अदितिः | आप-वत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | पृथिवी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | बृहक्षतः | बृहक्षतः |
| सोमः | सोमः | पृथिवी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | पृथिवी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राज-यक्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृङ्गराज | भृङ्गराज |
| नागः | रुद्रः | शोषः | असुर | वरुणः | कुसुम-दन्तः | सुग्रीवः | जयः | मृगः |
| रोगः | पाप-यक्ष्मा | शोषः | असुरः | वरुणः | कुसुम-दन्तः | सुग्रीव | दौवा-रिकः | पिता |

उ द

वा प नै

## चतुरस्त्रे चतुःषष्टिपदो वास्तुनरः

ई — पू — आ

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखी / दितिः | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्षः / अनिलः |
| अदितिः | पर्जन्यः / अदितिः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः / पूषा | पूषा |
| भुजगः | भुजगः | आपवत्सः / आपः | अर्यमा | अर्यमा | सविता / सावित्रः | वितथः | वितथः |
| सोमः | सोमः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | विवश्वान् | बृहक्षतः | बृहक्षतः |
| भल्लाटः | भल्लाटः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | विवश्वान् | यमः | यमः |
| मुख्यः | मुख्यः | रुद्रः / राजयक्ष्मा | मित्रः | मित्रः | इन्द्रः / जयः | गन्धर्वः | गन्धर्वः |
| नागः | नागः / शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | भृङ्गराजः / दौवारिकः | भृङ्गराजः |
| रोगः / पापयक्ष्मा | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिकः | मृगः / पिता |

उ (left) — द (right)

वा — प — नै

## वृत्ते एकाशीतिपदो वास्तुनरः

## वृत्ते चतुःषष्टिपदो वास्तुनरः

## त्र्यस्त्रे एकाशीतिपदो वास्तुनरः

इति वृत्तक्षेत्रे चतुःषष्टिपदे। एवमेव षडश्रिप्रभृतीनां विन्यासः कार्य। त्र्यस्रे क्षेत्रे च—

त्र्यस्राणि पञ्च क्षेत्राणि त्रिकोणे परिकल्पयेत्।
प्राची दिगष्टधा कार्या कोणवर्ज्या ततः परे।।
रविभागविभक्ते ते वास्तुद्वाराणि तानि तु।
दितिं वायुं जलपतिं कोणेषु त्रिषु विन्यसेत्।।
ततः शिख्यादिकान् सर्वान् शेषेषु विनिवेशयेत्।
द्वितीये पूर्ववद् भागाः षोडशद्विगुणास्ततः।।
तत्रापि कोणत्रितये पूर्वोक्तान् विबुधान् न्यसेत्।
शेषेषु वास्तुकोष्ठस्थान् सुरांश्च विनिवेशयेत्।।
क्षेत्रे तृतीये चत्वारि सर्वशाखासु कारयेत्।
प्राग्गतिर्यमसावित्रौ सविता च ततः परम्।।
विवस्वानिन्द्रमित्रा च जयश्चैव हरस्तथा।
राजयक्ष्मा भूमिधर आपो वत्सयुतः स च।।
चतुर्थे पञ्चभिर्भागैः कृत्वा तन्मध्यगस्तथा।
पितामहो विनिर्दिष्टस्त्र्यस्रक्षेत्रेऽप्ययं विधिः।। इति।

एवमेते सर्व एव स्वल्पधियां विन्यासेन द्वितीयपत्रे प्रदर्श्यन्ते।।५५-५६।।

अथात्र मर्मविभागप्रदर्शनार्थमाह—

**सम्पाता वंशानां मध्यानि समानि यानि च पदानाम्।**
**मर्माणि तानि विन्द्यान्न तानि परिपीडयेत् प्राज्ञः ।।५७।।**

पदों के ठीक-ठीक मध्य स्थान में वंशों ( कोण से कोणगत सूत्रों ) का परस्पर जो सम्पात हो, उसको 'मर्म स्थान' कहते हैं। बुद्धिमान् पुरुषों को उन मर्मस्थानों को पीड़ित नहीं करना चाहिये ( यहाँ पर आचार्य ने वंश और रज्जु का विभाग-प्रदर्शन नहीं किया है; अतः उनका ज्ञान भट्टोत्पलकृत विवृति में प्रदत्त विभाग-प्रदर्शक श्लोकों से करना चाहिये )।।५७।।

वंशानां कोणात् कोणगतानां सूत्राणां ये सम्पाताः परस्परमेकीभावाः, तथा च वक्ष्यति—

रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात्।
मुख्याद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम्।। इति।

अत्राचार्येण वंशानां रज्जूनां च विभागो नोक्तः, समासेन रोगाद्वायुमिति सूत्रलक्षणं कृतम्। तथा चास्मदीयवास्तुविद्यायाम्—

रोगाद्वायुं नयेत् सूत्रं पितृतोऽथ हुताशनम्।
एतत्सूत्रद्वयं प्रोक्तं मुनिभिर्वंशसंज्ञितम्।।

वितथाच्छोषकं चान्यद् भृशं मुख्यात्तथा नयेत्।
जयन्ताद् भृङ्गराजाख्यं सुग्रीवमदितेस्तथा।।
एतच्चतुष्टयं प्रोक्तं रज्जुसंज्ञं मनीषिभि:।

एवं वंशानां ये सम्पाता: पूर्वापराभि: सह तथा पदानां सर्वेषां यानि च समानि मध्यानि तानि च सर्वाणि मर्माणि विन्द्याज्जानीयात्। प्राज्ञो मेधावी तानि च न परिपीडयेत् तेषां च पीडनैरन्योन्यं दोषो भवति।।५७।।

तथाह—

**तान्यशुचिभाण्डकीलस्तम्भाद्यै: पीडितानि शल्यैश्च।**
**गृहभर्तुस्तत्तुल्ये पीडामङ्गे प्रयच्छन्ति।।५८।।**

ये मर्मस्थान अपवित्र भाण्ड आदि वस्तु, कील, खम्भा आदि ( पाषाण आदि ) और शस्त्रों से पीड़ित हों तो तत्तुल्य अङ्ग में गृहस्वामी को भी पीड़ा होती है, अर्थात् पीडित मर्मस्थान वास्तु नर के जिस अङ्ग मअवस्थित हो, तत्तुल्य अङ्ग में ही गृहस्वामी को भी पीड़ा होती है।।५८।।

तानि मर्माण्यशुचिभाण्डैरशुद्धैरुपकरणवस्तुभिस्तथा कीलकै: शङ्कुभि: स्तम्भैश्च, आदिग्रहणादन्यैरपि गुरुभि: पाषाणादिभि: शल्यैर्वा परिपीडितानि भवन्ति, तदा तत्तुल्येऽङ्गे तस्मिन्नेवावयवे गृहभर्तुर्वेशमस्वामिन: पीडां प्रयच्छन्ति।।५८।।

अधुना शल्यज्ञानमाह—

**कण्डूयते यदङ्गं गृहभर्तुर्यत्र वाऽमराहुत्याम्।**
**अशुभं भवेन्निमित्तं विकृतेर्वाग्नेः सशल्यं तत्।।५९।।**

हवनकाल या प्रश्नकाल में गृह का स्वामी अपने जिस अङ्ग को खुजलावे, वास्तु नर के उसी अङ्गस्थान में शल्य कहना चाहिये। अथवा जिस देवता की आहुति देने के समय अशुभ निमित्त ( छींक, रोना, चिल्लाना, अपान वायु-त्याग या अशुभ शब्द श्रवण ) हो या अग्नि में विकार ( विस्फुलिङ्ग, शब्द के साथ दुर्गन्ध ) उत्पन्न हो तो उस देवता के स्थान में शल्य कहना चाहिये।।५९।।

गृहभर्तुर्गृहस्वामिनो होमकाले पृच्छायां वा यदङ्गं कण्डूयते, तदेवाङ्गं वास्तुनरस्य सशल्यम्। वाऽमराहुत्यामशुभं भवेन्निमित्तम्, अमरा देवा: शिख्यादयस्तेषां होमकाले याऽऽहुतिस्तस्यां यद्यशुभं निमित्तं भवेत् क्षुतनिष्ठीवनरोदनाक्रोशनवातोत्सर्गानिष्टशब्दश्रवण-मग्नेर्विकृतिर्विकारो वा विस्फुलिङ्गसशब्ददुर्गन्धादि तत्स्थानममराधिष्ठितं सशल्यं शल्य-संयुतम्।।५९।।

अथ शल्यानां प्रविभागेण फलान्याह—

**धनहानिर्दारुमये पशुपीडा रुग्भयानि चास्थिकृते।**
**( लोहमये शस्त्रभयं कपालकेशेषु मृत्युः स्यात्।।**

**अङ्गारे स्तेनभयं भस्मनि च विनिर्दिशेत्सदाऽग्निभयम्।**
**शल्यं हि मर्मसंस्थं सुवर्णरजतादृतेऽत्यशुभम्॥**
**मर्मण्यमर्मगो वा निरुणद्ध्यर्थागमं तुषसमूहः।)**
**अपि नागदन्तको मर्मसंस्थितो दोषकृद् भवति॥६०॥**

उपर्युक्त शल्य यदि काष्ठ का हो तो धनहानि, हड्डी का हो तो पशुओं को पीड़ा और रोगभय, लोहे का हो तो शस्त्र का भय, कपाल या केश का हो तो मृत्यु, कोयले का हो तो चोरभय एवं भस्म का हो तो सदा अग्निभय होता है। साथ ही सोना और चाँदी के अतिरिक्त किसी भी प्रकार का शल्य वास्तु पुरुष के मर्मस्थान में स्थित हो तो अत्यन्त अशुभ होता है। यदि धान्यों की भूसी मर्मस्थान या किसी अन्य स्थान में स्थित हो तो वह धन के आगमन को अवरुद्ध करता है। इसी प्रकार नागदन्त यदि मर्मस्थान में अवस्थित हो तो दोष उत्पन्न करने वाला होता है; परन्तु वही नागदन्त यदि मर्मस्थान से अतिरिक्त स्थान में अवस्थित हो तो शुभ होता है।।६०।।

दारुमये काष्ठमये शल्ये धनहानिर्वित्तनाशो भवति। अस्थिकृते शल्ये पशूनां च पीडा व्यथा रुग्भयानि च भवन्ति। अपिशब्दः सम्भावनायां वर्तते। नागदन्तको हस्तिदन्तः शुभोऽपि मर्मसंस्थितो दोषकृदनिष्टदो भवति।।६०।।

अथ वंशरज्जुलक्षणं महामर्माणि च प्रदर्शयितुमाह—

**रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात्।**
**मुख्याद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम्॥६१॥**
**तत्सम्पाता नव ये तान्यतिमर्माणि सम्प्रदिष्टानि।**
**यश्च पदस्याष्टांशस्तत् प्रोक्तं मर्मपरिमाणम्॥६२॥**

रोग से वायु तक, पिता से शिखी तक, वितथ से शोष तक, मुख्य से भृश तक, जयन्त से भृङ्ग तक और अदिति से सुग्रीव तक सूत्र बाँधने पर इन सूत्रों के परस्पर नव सम्पात स्थान वास्तुपुरुष के अतिमर्म स्थान होते हैं। साथ ही एक पद में अष्टमांशतुल्य मर्मस्थान का परिमाण होता है।।६१-६२।।

रोगादारभ्य वायुमनिलं यावत्सूत्रं तिर्यक् सन्दद्यात्। एवं पितृतो हुताशनं शिखिनं यावत्। वितथात् सूत्रं शोषं यावन्नयेत्। मुख्याद् भृशं यावज्जयन्ताच्च भृङ्गं यावत्। अदितेश्च सुग्रीवं यावत्। **सम्पाता इति**। तदिति सूत्राणां परामर्शः। तेषां सूत्राणां ये परस्परं नव सम्पातास्तान्यतिमर्माणि महामर्माणि सम्प्रदिष्टान्युक्तानि। पदस्य यश्चाष्टांशोऽष्टमभागस्तन्मर्मपरिमाणं प्राक्कथितम्। एतदुक्तं भवति—क्षेत्रमेकाशीतिपदं विभक्तं कृत्वा यावत्प्रमाणं पदमुत्पद्यते तस्याष्टांशं मर्मपरिमाणमिति।।६१-६२।।

अथ वंशस्य च शिरायाश्च परिमाणज्ञानमाह—

**पदहस्तसंख्यया सम्मितानि वंशोऽङ्गुलानि विस्तीर्णः ।**
**वंशव्यासोऽध्यर्धः शिराप्रमाणं विनिर्दिष्टम् ॥६३॥**

पूर्वकथित ६ सूत्रों की 'वंश' संज्ञा है तथा वास्तु विभाग के लिये जो पूर्वापरा एवं दक्षिणोत्तरा दश-दश रेखायें की गई हैं, उनकी 'शिरा' संज्ञा होती है। वास्तु में एक पाद का विस्तार जितने हाथ का हो, उतने ही अङ्गुल एक वंश का विस्तार और विस्तार से ड्योढ़ा शिरा का विस्तार होता है।।६३।।

पदहस्तस्य संख्यया पदं यावत् ते हस्तो विस्तृतं भवति, तत्सम्मितानि तत्संख्याङ्गुलानि वंशो विस्तीर्णो भवति। रोगाद्वायुमित्यादिकं सूत्रषट्कं वंशशब्देनोच्यते। एवं वंशव्यासो वंशविस्तारोऽध्यर्धो दिवं प्रगुणितः शिराप्रमाणं विनिर्दिष्टं कथितम्। शिराशब्देन पूर्वापरायता दक्षिणोत्तरायताश्च दश दश रेखा ज्ञेयाः। तथा ताश्च शास्त्रान्तरे पठ्यन्ते—

शान्ता यशोवती कान्ता विशाला प्राणवाहिनी।
सती च सुमना नन्दा सुभद्रा सुरथा तथा।।
पूर्वापरा गता ह्येता उदग्याम्याश्रिताः शृणु।
हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया।।
जया काला विशोका च तथेन्द्रा दशमी स्मृता।
धन्या धरा विशाला च स्थिरा रूपा गदा निशा।
विभवा प्रभवा चान्याः सौम्ययाम्याश्रिताः शिराः।। इति।।६३।।

अत्रैव परिभाषार्थमाह—

**सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद् गृही गृहान्तःस्थम् ।**
**उच्छिष्टाद्युपघाताद् गृहपतिरुपतप्यते तस्मिन् ॥६४॥**

सुख की कामना करने वाले गृहस्वामी को चाहिये कि घर के मध्य में स्थित ब्रह्मा जी की यत्नपूर्वक रक्षा करे। उनके ऊपर उच्छिष्ट ( जूठन ) आदि ( अपवित्र वस्तु ) को रखने से गृहस्वामी को पीड़ा होती है।।६४।।

गृही गृहपतिः सुखमिच्छन् सुखमभिलषन् गृहान्तःस्थं गृहमध्यगतं ब्रह्माणं पितामहं यत्नात् सर्वप्रयत्नेन रक्षेत् पालयेत्। यतस्तस्य ब्रह्मण उच्छिष्टाद्युपघातात्। उच्छिष्टमशुचि। आदिग्रहणादमेध्याद्युपस्करणं भाण्डः। एतेषां तत्र स्थापनादुपघातो भवति, तस्मात् तस्मिन् गृहे गृहपतिर्वेश्मस्वामी उपतप्यते उपतापं प्राप्नोति।।६४।।

अथ विकले वास्तुनि दोषप्रदर्शनार्थमाह—

**दक्षिणभुजेन हीने वास्तुनरेऽर्थक्षयोऽङ्गनादोषाः ।**
**वामेऽर्थधान्यहानिः शिरसि गुणैर्हीयते सर्वैः ॥६५॥**

**स्त्रीदोषाः सुतमरणं प्रेष्यत्वं चापि चरणवैकल्ये।**
**अविकलपुरुषे वसतां मानार्थयुतानि सौख्यानि ।।६६।।**

यदि वास्तु पुरुष की दक्षिण भुजा हीन हो तो गृहस्वामी को धननाश और स्त्रीकृत दोष होता है। इसी प्रकार यदि वाम भुजा हीन हो तो गृहस्वामी के धन-धान्यों का नाश, शिर हीन हो तो धन, आरोग्य आदि सब गुणों का नाश तथा चरण हीन हो तो स्त्रीदोष, पुत्र की मृत्यु और दासत्व की प्राप्ति होती है। यदि वास्तु पुरुष के सभी अङ्ग पूर्ण हों तो उस स्थान में निवास करने वाले मनुष्य को मान और धन से समन्वित सुख की प्राप्ति होती है।।६५-६६।।

वास्तुनरे वास्तुपुरुषे दक्षिणेन सव्येन भुजेन बाहुना हीने रहितेऽर्थक्षयो वित्तनाशः, अङ्गनादोषाः स्त्रीकृता दोषा भवन्ति। वामेऽपसव्ये भुजे हीने वास्तुनरे अर्थानां धनानां धान्यानां च हानिर्विनाशो भवति। शिरसि मूर्धनि हीने वास्तुनरे सर्वैर्निःशेषैर्गुणैरारोग्यादिभिर्हीयते रहितो भवति।

चरणवैकल्ये पादभागहीने वास्तुनरे स्त्रीदोषा योषित्प्रभवा दोषाः सुतमरणं पुत्रविपत्तिः प्रेष्यत्वं दासत्वं चापि भवति। अविकलपुरुषे परिपूर्णावयवे वास्तुनरे वसतां पुंसां मानार्थयुतानि सौख्यानि भवन्ति।।६५-६६।।

न केवलं वास्तुनरस्यायं प्रविभागो यावन्नगरग्रामेष्वप्येवमेवेत्याह—

**गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिता देवाः।**
**तेषु च यथानुरूपं वर्णा विप्रादयो वास्याः ।।६७।।**

इसी प्रकार से गृह, नगर और ग्रामों में सभी देवगण विराजमान रहते हैं। उन नगर और ग्रामों में ब्राह्मण आदि वर्णों को भी यथाक्रम निवास करना चाहिये।।६७।।

एवमनेनैव प्रकारेण गृहे वेश्मनि नगरे पुरे ग्रामे चैतेष्वपि सर्वत्र सर्वस्मिन् देशे देवाः सुराः प्रतिष्ठिताः परिकल्पिताः। एतदुक्तं भवति—यथा गृहे वास्तुनरस्य परिकल्पना कृता तथैव नगरे ग्रामे च कार्या। तत्रापि च यानि मर्माणि तानि प्राग्वच्चिन्तनीयानि। तेषु नगर-ग्रामेषु विप्रादयो ब्राह्मणाद्या वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रा यथाक्रमं वास्या विवासनीयाः। यत्र दिग्भागे यस्योचितं तत्र वासयेदित्यर्थः।।६७।।

कथमिति तत्प्रतिपादयन्नाह—

**वासगृहाणि च विन्द्याद्विप्रादीनामुदग्दिगाद्यानि।**
**विशतां च यथा भवनं भवन्ति तान्येव दक्षिणतः ।।६८।।**

**ब्राह्मण आदि वर्ण को क्रम से उत्तर आदि दिशा में वासगृह बनाना चाहिये। जैसे ब्राह्मण को उत्तर में, क्षत्रिय को पूर्व में, वैश्य को दक्षिण में और शूद्र को पश्चिम में अपना निवासस्थान बनाना चाहिये। गृह इस प्रकार बनाना चाहिये, जिससे कि आङ्गन में प्रवेश करते समय वे गृह दक्षिण की ओर पड़ें। जैसे पूर्वमुख वाले गृह के आङ्गन का द्वार उत्तर**

में, दक्षिणमुख वाले गृह के आङ्गन का द्वार पूर्व में, पश्चिममुख वाले गृह के आङ्गन का द्वार दक्षिण में और उत्तरमुख वाले गृह के आङ्गन का द्वार पश्चिम में बनाना चाहिये।।६८।।

विन्द्याज्जानीयात्। गृहे चतु:शाले ग्रामे नगरे वा ब्राह्मणानामुत्तरस्यां दिशि वासगृहाणि कार्याणि, पूर्वस्यां क्षत्रियाणाम्, दक्षिणस्यां वैश्यानाम्, पश्चिमायां शूद्राणामिति। तथा च कार्याणि यथा भवनं गृहाभ्यन्तरमङ्गणं विशतां तान्येव वासगृहाणि दक्षिणस्यां दिशि भवन्ति। एतदुक्तं भवति—प्राङ्मुखस्य गृहस्याङ्गणद्वारमुत्तराभिमुखं कार्यम्, दक्षिणाभिमुखस्य प्राङ्-मुखम्, पश्चिमाभिमुखस्य दक्षिणाभिमुखम्, उत्तराभिमुखस्य पश्चिमाभिमुखमिति।।६८।।

अधुना यानि चतसृषु दिक्षु द्वात्रिंशद् द्वाराण्युक्तानि तेषां शुभाशुभफलं वक्ष्यामीत्याह—

**नवगुणसूत्रविभक्तान्यष्टगुणेनाथवा चतु:षष्टे: ।**
**द्वाराणि यानि तेषामनलादीनां फलोपनय: ।।६९।।**

इक्यासी पद में नवगुणित सूत्र से और चौंसठ पद में अष्टगुणित सूत्र से विभक्त होकर जो अनल आदि बत्तीस द्वार बनते हैं, अब यहाँ क्रम से उनके फल का प्रदर्शन कर रहे हैं।।६९।।

नवगुणेन सूत्रेण यानि विभक्तानि द्वात्रिंशद् द्वाराणि नवगुणेन सूत्रेणैकाशीतिपदे अष्ट-गुणेन चतु:षष्टेरिति करणाद् यानि द्वात्रिंशद् द्वाराण्यनलादीनि तेषामनलादीनां द्वाराणां क्रमेण परिपाट्या फलोपनय: फलकथनं क्रियत इति वाक्याध्याहार:।।६९।।

अधुना तदेवाह—

**अनिलभयं स्त्रीजननं प्रभूतधनता नरेन्द्रवाल्लभ्यम् ।**
**क्रोधपरतानृतत्वं क्रौर्यं चौर्यं च पूर्वेण ।।७०।।**

शिखी से लेकर अन्तरिक्ष तक आठ देवता पूर्व भाग में अवस्थित होते हैं, उनमें से शिखी के ऊपर द्वार हो तो गृहस्वामी को अग्निभय, पर्जन्य के ऊपर द्वार हो तो कन्याजन्म, जयन्त के ऊपर द्वार हो तो अत्यधिक धन की प्राप्ति, इन्द्र के ऊपर द्वार हो तो राजा की प्रसन्नता, सूर्य के ऊपर द्वार हो तो क्रोध का आधिक्य, सत्य के ऊपर द्वार हो तो असत्य भाषण, भृश के ऊपर द्वार हो तो क्रूरता और अन्तरिक्ष के ऊपर द्वार हो तो तस्करता आती है।।७०।।

शिखिसंज्ञे आग्नेयद्वारे अनिलभयं वायुभीतिर्भवति। एवं स्त्रीजननं कन्यकाजन्म पर्जन्ये। प्रभूतधनता बहुवित्तत्वं जयन्ते। नरेन्द्रवाल्लभ्यं नृपवल्लभत्वमिन्द्रे। क्रोधपरता क्रोधशीलता सूर्ये। अनृतत्वमसत्यभाषित्वं सत्ये। क्रौर्यं क्रूरता भृशे। चौर्यं तस्करत्वमन्तरिक्षे। एवं पूर्वेण पूर्वस्यां दिशि निर्देश:।।७०।।

अथ दक्षिण आह—

**अल्पसुतत्वं प्रैष्यं नीचत्वं भक्ष्यपानसुतवृद्धि: ।**
**रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ।।७१।।**

अनिल से लेकर मृग तक आठ देवता दक्षिण भाग में अवस्थित होते हैं। उनमें से अनिल के ऊपर द्वार हो तो अल्प पुत्रता, पौष्ण के ऊपर द्वार हो तो दासत्व, वितथ के ऊपर द्वार हो तो नीचता, बृहत्क्षत के ऊपर द्वार हो तो भोजन, पानवस्तु और पुत्रों की वृद्धि, याम्य के ऊपर द्वार हो तो अशुभ, गन्धर्व के ऊपर द्वार हो तो कृतघ्नता, भृङ्गराज के ऊपर द्वार हो तो निर्धनता और मृग के ऊपर द्वार हो तो पुत्र के बल का विनाश होता है।।७१।।

अनिले अल्पसुतत्वमल्पपुत्रता। पौष्णे प्रैष्यं दासत्वम्। वितथे नीचत्वं नीचता। बृहत्क्षते भक्ष्यपानसुतानां वृद्धिः। याम्ये रौद्रमशुभम्। गन्धर्वे कृतघ्नं कृतं हन्तीति। भृङ्गराजे अधनं धनवर्जितम्। मृगाख्ये सुतवीर्यघ्नं पुत्रबलनाशनम्। एवं याम्येन दक्षिणेन द्वारनिर्देशः।।७१।।

अथ पश्चिम आह—

**सुतपीडा रिपुवृद्धिर्न सुतधनाप्तिः सुतार्थफलसम्पत्।**
**धनसम्पन्नृपतिभयं धनक्षयो रोग इत्यपरे।।७२।।**

पिता से लेकर पापयक्ष्मा तक आठ देवता पश्चिम भाग में अवस्थित रहते हैं। उनमें से पिता के ऊपर द्वार हो तो पुत्रों की पीड़ा, दौवारिक के ऊपर द्वार हो तो शत्रु की वृद्धि, सुग्रीव के ऊपर द्वार हो तो पुत्र और धन का लाभ, कुसुमदन्त के ऊपर द्वार हो तो पुत्र और धन-सम्पत्ति की प्राप्ति, वारुण के ऊपर द्वार हो तो धन-सम्पत्ति का लाभ, असुर के ऊपर द्वार हो तो राजभय, शोष के ऊपर द्वार हो तो धननाश तथा पापयक्ष्मा के ऊपर द्वार हो तो रोग की प्राप्ति होती है।।७२।।

पित्र्ये सुतपीडा पुत्रव्यथा। दौवारिके रिपुवृद्धिः शत्रुबाहुल्यम्। सुग्रीवे सुतधनाप्तिः पुत्रधनावाप्तिः। कुसुमदन्ते सुतार्थफलसम्पत् पुत्रधनफलसम्पत्तिः। वारुणे धनसम्पद् धनानां सम्पत्। असुरे नृपतिभयं राजभीतिः। शोषे धनक्षयो वित्तनाशः। पापयक्ष्माख्ये रोगो गद इत्यपरे पश्चिमायां द्वारनिर्देशः।।७२।।

अथोत्तर आह—

**वधबन्धो रिपुवृद्धिः सुतधनलाभः समस्तगुणसम्पत्।**
**पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रिया नैःस्वम्।।७३।।**

रोग से लेकर दिति तक आठ देवता उत्तर भाग में अवस्थित होते हैं। उनमें से रोग के ऊपर द्वार हो तो मृत्यु और बन्धन, सर्प के ऊपर द्वार हो तो शत्रु की वृद्धि, मुख्य के ऊपर द्वार हो तो पुत्र और धन का लाभ, भल्लाट के ऊपर द्वार हो तो सम्पूर्ण शौर्यादि गुणों की सम्पत्ति, सोम के ऊपर द्वार हो तो पुत्र से द्वेष, अदिति के ऊपर द्वार हो तो स्त्री के द्वारा दोष तथा दिति के ऊपर द्वार हो तो निर्धनता होती है।।७३।।

रोगाख्ये वधबन्धः। सार्पे रिपुवृद्धिः। मुख्याख्ये सुतानां पुत्राणां धनस्य च लाभः। भल्लाटे समस्तानां निःशेषाणां शौर्यादीनां गुणानां सम्पत्तिः। सौम्ये पुत्रधनाप्तिः सुतवित्तलाभः।

भौजङ्गे वैरं द्वेष: सुतेन पुत्रेण सह। आदित्ये स्त्रिया दोषास्तदुत्था अशुभा:। दित्याख्ये नै:स्वं निर्धनत्वम्। एवमुत्तरतो द्वारनिर्देश:।

नन्वत्र नवगुणसूत्रविभक्तानीत्यत्र नृपादीनां वर्णानां चैकाशीतिपदेन नवगुणसूत्रविभक्तानि कार्याणि कुत एतन्निश्चीयते इति? उच्यते—अष्टगुणेनाथवा चतु:षष्टेरित्यस्मादेव विकल्पादवगम्यते। पूर्वाचार्यप्रणीतपक्षस्यायं विकल्प:। यस्माद्विश्वकर्मणा एकाशीतिपदगतचतु:-षष्टिपदान्युक्तानि। तेषु च प्रत्येकं विभङ्गान्यभिहितानि। तथा चाह—

राजवेश्मनि वेशश्च गृहादीनि च वर्णिनाम्।
एकाशीतिपदेनैव शक्रस्थानं च मापयेत्।।
प्रासादान् विविधान् छन्दांस्तथाऽऽद्यांश्चाष्टमण्डपान्।
एकाशीतिपदेनैव सर्वानेतान् प्रमापयेत्।।
नगरग्रामखेटादीन् शिबिराणि च भूभृताम्।
स्थपतिस्थान् शतपदप्रविभागेण मापयेत्।। इति।

तस्मान्नवगुणसूत्रविभक्तान्येकाशीतिपदे नृपादीनां कर्तव्यानि। अत्र केचिदनिश्चितबुद्धयो विकल्पांश्चोदयन्ति, यथा चतसृष्वपि दिक्षु नवगुणसूत्रविभक्तानि नव विभागा भवन्ति। अनिल-भयं स्त्रीजननमित्यादीन्यष्टाष्टद्वाराण्युक्तानि, योऽसौ नवमो भागस्तत्र प्रदेशे किं कर्तव्यमिति। अत्रोच्यते—प्रागेव वास्तुदेवतानां प्रविभागं कृत्वाऽनिलादीनां देवतानां पदेषु द्वाराणि प्रवि-कल्प्यानि, कल्पिते च द्वारभित्तिश्चिन्तनीया। तथा च नन्दी आह—

भित्तिश्चिन्त्या द्वारे सत्याचार्या व्यवस्यन्ति।

आचार्येण समाससंहितानिबन्धने स्पष्टतरं निबद्धम्। तथा आह—

पूर्वाण्यैशान्यां यान्याग्नेय्यां दक्षिणानि जानीयात्।
द्वाराणि नैर्ऋतात् पश्चिमान्युदक्स्थानि वायव्याम्।।
आग्नेयमग्निभयदं पार्जन्यं स्त्रीप्रसूतिदं द्वारम्।
प्रचुरधनदं जयन्तं नृपवल्लभकारि माहेन्द्रम्।।
सौर्ये क्रोध: प्रचुर: सत्येऽनृतवादितं भृशे क्रौर्यम्।
चौर्यं तथान्तरिक्षे प्राग् द्वाराणि प्रदिष्टानि।।
वायव्येऽल्पसुतत्वं प्रैष्यं पौष्णेऽथ नीचता वितथे।
बह्वन्नपानपुत्रं बृहत्क्षते याम्य अपि रौद्रम्।।
गान्धर्वे गन्धत्वं नृपचौरभयाय भृङ्गराजाख्यम्।
मृगमपि सुतवीर्यघ्नं दक्षिणतो द्वारनिर्देश:।।
पित्र्ये शरीरपीडा दौवारिकसंज्ञिते च रिपुवृद्धि:।
सुग्रीवे धनहानि: पुत्रधनाढ्यं कुसुमदन्तम्।।
वारुणमर्थनिचयदं नृपभयदं चासुरं विनिर्दिष्टम्।
शोषं धनहानिकरं बहुरोगं पापयक्ष्माख्यम्।।

रोगमुखं वधबन्धदमात्मजवैराभिवृद्धिदं नागम्।
मुख्यं धनसुतवृद्धिदमनेककल्याणदं च भल्लाटम्।।
सौम्यं धनपुत्रकरं भौजङ्गे पुत्रवैररिपुवृद्धिः।
अदितौ स्त्रीदोषाः स्युर्दितौ धनं संक्षयं याति।। इति।

तथा च भगवान् गर्गः—

पूर्वादिक्रमयोगेन हौताशेऽग्निभयं वदेत्।
पार्जन्ये प्रचुरा नार्यो जायन्ते बहुवित्तता।।
माहेन्द्रे नृपवाल्लभ्यं सौर्येऽतिक्रोधिता भवेत्।
सत्येऽनृतत्वं विज्ञेयं क्रूरत्वं तु भृशे भवेत्।।
अन्तरिक्षे तु विज्ञेयो नित्यं चौर्यसमागमः।
स्यात् पुत्रकामो वायव्ये पौष्णे प्रेष्यत्वमेव च।।
नीचत्वं वितथे ज्ञेयं स्याद् बृहाक्षे तु सन्ततिः।
क्षुद्रकर्मा भवेद्यामे गान्धर्वे कृतनाशनम्।।
पित्र्ये स्वल्पायुरधनं व्ययं दौवारिके महत्।
सुग्रीवे धननाशः स्यात् पुष्पदन्ते तु वर्धनम्।।
वरुणे मुख्यभोगित्वं नृपभङ्गस्तथासुरे।
नित्यातिरोगता शोषे पापाख्ये पापसञ्चयः।।
रोगे बन्धवधो नित्यं नागे रिपुभयं महत्।
मुख्ये धनसुतोत्पत्तिर्भल्लाटे विपुलाः श्रियः।।
सौम्ये तु धर्मशीलत्वं भौजङ्गे बहुवैरता।
अदितौ वनितादोषा दितौ तु धनसंक्षयः।।
पदे पदे कृतं श्रेष्ठं द्वारं सफलदायिकम्।
पदक्षये कृतं यच्च तद्व्यामिश्रफलप्रदम्।। इति।

अत्राचार्येण गृहाणां द्वाराणां च सामान्येन लक्षणमुक्तम्। अन्यैराचार्यैर्गृहाणामष्टौ वास्तुपुरुषाः कथिताः। तेषां च नक्षत्राण्युक्तानि, तथा द्वारद्वात्रिंशतो नक्षत्राण्युक्तानि। तत्र चन्द्रतारानुकूल्येन गृहाणां द्वाराणां च करणमुक्तम्, तच्च लोकतो दृश्यते; यतोऽस्माभिरन्यशास्त्राद्वास्तुनराणां नामान्यानीय नक्षत्राणि च यथाक्रमेण प्रदर्श्यन्ते। यद्यथा—

रिक्तो ध्वजश्च ध्वांक्षश्च सिंहः श्वा वृषभस्तथा।
वानरो भद्र इत्यष्टौ ज्ञेया वास्तुनरा बुधैः।।

अथैतेषामानयनम्—

गृहान्तरदिशां मानं सङ्गुण्य च परस्परम्।
वसुभिर्भागमाहृत्य शिष्टं वास्तुनरं वदेत्।।

अथवा—

बाह्वो: प्रबाह्वो: संयोगदलमन्योन्यताडितम्।
वसुभक्तं तत: शेषं सेव्यं वास्तुनरं वदेत्।।

एतच्चतुरस्रक्षेत्रे।

अथ वर्तुले—

व्यासं त्रिगुणितं कृत्वा विष्कम्भं तत् समादिशेत्।
व्यासार्द्धवर्गस्त्रिगुण: फलं स्यात् परिवर्तुले।।

अथ षडश्रिप्रभतिषु—

द्विर्न्यस्य परिधेर्वर्गमेकस्मादश्रिजार्धितात्।
लब्धं संशोध्य परतो भक्त्वा द्वादशभि: फलम्।।

अथ त्रिकोणे—

बाहुप्रबाहुसंयोगदलघातं त्रिकोणके।

एवं सर्वत्र क्षेत्रफलमानीय तस्याष्टाभिर्भागमपहृत्यावशेषो वास्तुनर:।

समशून्यगतो रिक्तो ध्वजश्चैकावशेषके।
द्वाभ्यां ध्वांक्षस्त्रिभि: सिंहश्चतुर्भि: श्वा प्रकीर्तित:।।
पञ्चभिर्वृष इत्याहु: षड्भिर्वानर उच्यते।
सप्तभिर्भद्र इत्येतदष्टानां लक्षणं स्मृतम्।।
रिक्ते सूर्यस्तथाश्लेषा ध्वजे सोमश्च कृतिका।
ध्वाङ्क्षे राहुश्च भरणी सिंहे भौमस्तथा मघा:।।
बुध: शुनि धनिष्ठा च वृषे जीवश्च रोहिणी।
भद्रे तु श्रवण: सौर: कपौ शुक्रश्च फाल्गुनी।।
चन्द्रतारानुकूल्येन कारयेत विचक्षण:।
विभुर्नश्यति रिक्तेन ध्वजेन विपुला: श्रिय:।।
ध्वांक्षेण नित्यमुद्वेग: सिंहेन जितशत्रुता।
अस्थैर्यं सारमेये स्याद्वृषे परितपो ध्रुव:।।
कपिना चापलं स्त्रीणां नित्यं भद्रेण निर्वृति:।।

अथ द्वारनक्षत्राणि—

कृत्तिकाभगमैन्द्रं च विशाखा च पुनर्वसु:।
तिष्यो हस्तस्तथाऽऽर्द्रा च क्रमात् पूर्वेषु निर्दिशेत्।।
चित्रा विशाखा पौष्णं च नैर्ऋतं यमदैवतम्।
वैश्वदेवाश्विनं मैत्रं क्रमाद् दक्षिणसंश्रितम्।।

पित्र्यं प्रोष्ठपदार्यम्णमाषाढं च द्विदैवतम्।
वारुणाश्विनसावित्रं क्रमात् पश्चिमसंश्रितम्।।
स्वात्याश्लेषाभिजित्सौम्यं वैष्णवं वासवं तथा।
याम्यं ब्राह्मं क्रमात् सौम्यद्वारेषु च विनिर्दिशेत्।। इति।।७३।।

अथ द्वारस्य वेधफलमाह—

**मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभदं द्वारम्।**
**उच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं न दोषाय।।७४।।**

यदि मार्ग, वृक्ष, दूसरे घर का कोना, कूप, खम्भा या भ्रम ( जल निकलने की मोरी ) से गृहद्वार विद्ध होता हो अर्थात् ये सब द्वार के सम्मुख हों तो अशुभ होते हैं। परन्तु गृहद्वार की जितनी ऊँचाई हो, उससे द्विगुणित भूमि को छोड़कर आगे वेध करते हुये भी इन मार्गादि का रहना दोषप्रद नहीं होता है।।७४।।

मार्गः पन्थाः, तरुर्वृक्षः, कोणोऽस्रिः, कूपस्तम्भौ प्रसिद्धौ, भ्रमो जलनिर्गमनप्रदेशः। एतैः सम्मुखैर्द्वारं विद्धमशुभदम्। कियति दूरे स्थितो वेधने न दुष्टफलदो भवतीत्याह—**उच्छ्रायाद् द्विगुणमितामिति**। द्वारोच्छ्रायाद् द्विगुणमितो यावान् द्वारस्योच्छ्राय उच्चत्वं तद् द्विगुणप्रमाणां भूमिमवनिं त्यक्त्वा विहाय बहिःस्थिता दोषायैवैते वेधा न भवन्ति। नन्वत्र सामान्येनोक्तमुच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं न दोषायेत्यत्र न ज्ञायते किं वा वेधोच्छ्रायद्विगुणां किं वा विन्ध्योच्छ्रायद्विगुणां भूमिं त्यक्त्वा न दोषाय भवतीति, अत्रोच्यते— आचार्येण समाससंहितानिबन्धे स्पष्टतरं निबद्धम्, तच्चाह—

स्तम्भतरुभ्रमकोणैर्विद्धं वेधश्च न शुभकरद्वारम्।
वेधोच्छ्रायाद् द्विगुणां भूमिं त्यक्त्वा न दोषाय।। इति।

तथा च भगवान् गर्गः—

द्वारोच्छ्रायद्विगुणितां त्यक्त्वा भूमिं बहिःस्थितः।
न दोषाय भवेद्वेधो गृहस्य गृहिणोऽथवा।। इति।।७४।।

अत्रैव विशेषफलान्याह—

**रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा।**
**पङ्कद्वारे शोको व्ययोऽम्बुनिःस्राविणि प्रोक्तः।।७५।।**

**कूपेनापस्मारो भवति विनाशश्च देवताविद्धे।**
**स्तम्भेन स्त्रीदोषाः कुलनाशो ब्राह्मणाभिमुखे।।७६।।**

यदि गृहद्वार मार्ग से वेधित हो तो गृहस्वामी की मृत्यु, वृक्ष से वेधित हो तो बालकों में दोष, पङ्क ( कीचड़ ) से वेधित हो तो शोक, मोरी से वेधित हो तो व्यर्थ खर्च, कूप से वेधित हो तो मृगी रोग की उत्पत्ति, देवता की प्रतिमा से वेधित हो तो

गृहस्वामी का नाश, स्तम्भ से वेधित हो तो स्त्रियों में दोष और ब्रह्मा के सम्मुख हो तो सम्पूर्ण कुल का ही नाश करता है।।७५-७६।।

रथ्याविद्धं मार्गेण विद्धं द्वारं नाशाय गृहस्वामिनो भवति। तरुणा वृक्षेण विद्धं कुमाराणां बालकानां दोषदं दोषं ददाति। पङ्कद्वारे कर्दमविद्धे नित्यं यस्याग्रतः कर्दमो भवति, तस्मिन् शोको भवति। अम्बुनिःस्राविणि जलनिर्गमनमार्गे विद्धे व्ययो धनव्ययो भवति।

कूपेन विद्धे द्वारे अपस्मारो भवति। अपस्मारो वायुर्दोषदः। देवताविद्धे देवता सुरप्रतिमा तया विद्धे विनाशः स्वामिनो भवति। स्तम्भेन विद्धे स्त्रीदोषा दौःशील्यादिका भवन्ति। ब्राह्मणाभिमुखे कुलनाशो वा भवति। किं वा बाह्ये ब्राह्मणाभिमुखे इति नावगम्यते, यमादुत्तम-मुत्तराभिमुखं पञ्चमं द्वारमिष्टमुक्तम्। तद् गृहमध्यगं भवतीत्याह—वधबन्धो रिपुवृद्धिर्धन-सुतलाभः समस्तगुणसम्पदित्यादि। अत्रोच्यते—बाह्यस्याभ्यन्तरस्य च ब्रह्मणोऽभिमुखद्वार-स्यानिष्टं फलं प्रत्येकदेवताविद्धस्य फलमिदमाह—

देवद्वारं विनाशाय शङ्करद्वारमेव च। इत्यादि।

तथा— ब्रह्मणा यच्च संविद्धं तद्द्वारं कुलनाशनम्।

अभ्यन्तरब्रह्मणो मुखस्य द्वारस्यानिष्टफलं विश्वकर्माह—

गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम्।
आवहेत् कलहं शोकं नारीर्वा सम्प्रदूषयेत्।।

तथा भारद्वाजः—

शिरा मर्माणि वंशाश्च नालमध्यं च सर्वशः।
विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत्।।

तथा च यम आह—

ब्रह्मस्थाने न विध्येत नागदन्तस्थलानि च।
मृद्दारुभिर्गवाक्षैश्च मानपानैस्तथैव च।।
द्वारैश्च भित्तिभिश्चैव शय्याभागैः कथञ्चन।
स्वामिनो मरणं तत्र महादुःखेन पार्थिव।।

एवं चेत्तदाऽऽचार्येण पूर्वापरविरुद्धेन निबन्धनं स्यात्? अत्रोच्यते—'सर्वेष्वेव वास्तुषु उत्सर्गापवादरूपेण विविधा व्याख्या च भवति। तथा च यात्राप्रकारे प्राच्यादिषु सप्त सप्त नक्षत्राण्यभिधाय पुनः सर्वद्वारिकसंज्ञं नक्षत्रचतुष्टयमाह। एवमत्रापि। तस्मादयमदोष' इति।।७५-७६।।

अन्यद् द्वारस्य विशेषमाह—

**उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः।**
**मानाधिके नृपभयं दस्युभयं व्यसनमेव नीचे च।।७७।।**

**द्वारं द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च ।**
**आव्यात्तं क्षुद्भयदं कुब्जं कुलनाशनं भवति ॥७८॥**

**पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय ।**
**बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा ॥७९॥**

जिस गृह के द्वार का किवाड़ विना खोले ही खुल जाय, उसमें रहने वाले उन्माद, अपने-आप बन्द हो जाय तो कुल का नाश, पूर्वकथित परिमाण से अधिक द्वार का परिमाण हो तो राजभय और प्रमाण से अल्प परिमाण वाला द्वार हो तो चोरभय एवं दुःख होता है। यदि एक घर के द्वार पर दूसरे खण्ड का द्वार पड़े तो शुभ नहीं होता। जिस द्वार की मोटाई अल्प हो, वह भी शुभ नहीं होता है। मृदङ्ग की आकृति वाला अति विपुल द्वार क्षुधा का भय करता है और कुबड़ा द्वार कुल का नाश करता है। यदि ऊपरी काष्ठ आदि के भार से दबा हुआ द्वार हो तो गृहस्वामी को पीड़ा देता है, भीतर की ओर झुका हुआ द्वार हो तो गृहस्वामी की मृत्यु कराता है, बाहर को झुका हुआ द्वार गृहस्वामी को प्रवासी बनाता है और दिग्भ्रान्त ( जिस दिशा का द्वार हो, उससे भिन्न दिशा को देखता ) हो तो गृहस्वामी को चोरों से पीड़ित कराता है।।७७-७९।।

स्वयमुद्घाटित आत्मनैवोद्घाटिते द्वारकपाटे उन्मादश्चित्तस्य भवति। स्वयं पिहिते निपीडिते कुलस्य वंशस्य विनाशः स्वयं भवति। मानाधिके उक्तस्वप्रमाणादभ्यधिके द्वारे नृपभयं राजभीतिर्भवति। नीचे प्रमाणादल्पे दस्युभयं चौरभीतिर्व्यसनं दुःखं च भवति।

द्वारस्योपरि यद्द्वारं तन्न शिवाय न श्रेयसे भवति। यच्च सङ्कटं पृथुत्वेनाल्पं तच्च न शिवायैव भवति। आव्यात्तमतिविपुलं मुरजाकारं क्षुद्भयं ददाति। कुब्जमस्पष्टं द्वारं कुलनाशनं वंशक्षयावहं भवति।

अतिपीडितमुदुम्बरेणातिपीडितं गृहस्वामिनः पीडां करोति। अन्तर्गृहाभ्यन्तरे विनतं द्वारमभावाय मरणाय स्वामिनो भवति। बाह्यविनते बहिर्गते द्वारे प्रवासो भवत्यन्यदेशनिवासः। दिग्भ्रान्ते दिक्स्थे अन्यां दिशं प्रेक्षमाणे दस्युभिश्चौरैः पीडा भवति।७७-७९।।

अत्रैव विशेषमाह—

**मूलद्वारं नान्यैर्द्वारैरभिसन्दधीत रूपर्द्ध्या ।**
**घटफलपत्रप्रमथादिभिश्च तन्मङ्गलैश्चिनुयात् ॥८०॥**

सुन्दरता को व्यक्त करने वाली जितनी सामग्रियों को एकत्र कर मूल द्वार की रचना की गई हो, उतनी सामग्रियों से अन्य द्वारों की रचना नहीं करनी चाहिये। साथ ही कलश, श्रीफल, पत्र, पुष्प आदि से उस मूल द्वार की शोभा बढ़ानी चाहिये।।८०।।

मूलद्वारं प्रधानमिति यावत्। तच्चान्यैरपरैर्द्वारैः रूपर्द्ध्या रूपसमृद्ध्या नाभिसन्दधीत न सन्धानं कुर्यात्। एतदुक्तं भवति—मूलद्वारस्य यादृशी रचना कृता, तादृशी नान्यद्वाराणां कार्येति। तच्च मूलद्वारं मङ्गलैः घटैः कलशैः फलैः श्रीफलादिभिः पत्रैः पत्रलतादिभिर्वा

प्रमथैर्गणैः, आदिग्रहणात् सिंहव्यालहंसजीवजीवकैश्चिनुयाद् उपचितं कुर्यात्।।८०।।

अथ कोणचतुष्टये गृहादीनां ये दोषा निवसन्ति तांस्तन्निवासिनां च फलमाह—

**ऐशान्यादिषु कोणेषु संस्थिता बाह्यतो गृहस्यैताः।**
**चरकी विदारिनामाऽथ पूतना राक्षसी चेति ॥८१॥**

**पुरभवनग्रामाणां ये कोणास्तेषु निवसतां दोषाः।**
**श्वपचादयोऽन्त्यजात्यास्तेष्वेव विवृद्धिमायान्ति ॥८२॥**

गृह के बाहर ईशान आदि चारो कोनों में क्रम से चरकी, विदारिका, पूतना और राक्षसी का निवास होता है। पुर, भवन और ग्रामों के जो कोने हों, उनमें निवास करने वाले को दोष होता है; किन्तु श्वपच ( चाण्डाल, डोम आदि ), अन्त्यज ( चमार आदि ) नीच जातियों के वहाँ ( कोने में ) निवास करने से गृहस्वामी की उन्नति होती है।।८१-८२।।

अथैशान्यां चरकी, आग्नेय्यां विदारिनामा, नैर्ऋते पूतना, वायव्ये राक्षसी चेत्येवं प्रकारा बहिष्कोणेषु निवसन्ति। शास्त्रान्तरेष्वष्टौ पठ्यन्ते—

स्कन्दोऽर्यमा जम्बुकाख्यः पिलिपिञ्चस्तथापरः।
प्राच्यादिदिक्चतुष्के तु निवसन्ति महाग्रहाः।।

कोणेष्वाचार्योक्ता एव।

ऐशान्यां चरकी प्रोक्ता स्कन्दः प्राग्भागसंस्थितः।
हौताशन्यां विदारी च याम्यां चैवार्यमा स्थितः।।
पूतना नैर्ऋते ज्ञेया जम्बुकः पश्चिमे स्थितः।
राक्षसी चानिले कोणे पिलिपिञ्चस्तथोत्तरे।।

इत्याचार्योक्तः पक्षः शोभनः।

**पुरभवनेति**। पुरं नगरम्। भवनं गृहम्। ग्रामः प्रसिद्धः। तेषां ये कोणाश्चत्वारस्तेषु निवसतां निवसमानानां दोषा भवन्ति। तेष्वेव कोणेषु श्वपचादयः, श्वपचा डोमाः। आदिग्रहणात् चण्डालपुक्कसप्रभृतयः। अन्त्यजात्याश्चर्मकारप्रभृतयः। एते निवसमाना विवृद्धिमायान्ति वृद्धिमाप्नुवन्ति, नान्य इति।।८१-८२।।

अथ दिक्षु शुभाशुभान् वृक्षानाह—

**याम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते।**
**उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्था ॥८३॥**

पाकर, वट, गूलर और पीपल—ये चार वृक्ष प्रदक्षिणक्रम से दक्षिण आदि दिशाओं में अशुभ और उत्तर आदि दिशाओं में शुभ होते हैं। जैसे—दक्षिण में पाकर, पश्चिम में वट, उत्तर में गूलर और पूर्व में पीपल का वृक्ष अशुभ तथा उत्तर में पाकर, पूर्व में वट, दक्षिण में गूलर और पश्चिम में पीपल का वृक्ष शुभ होता है।।८३।।

एते तरवो वृक्षा याम्यादिषु दक्षिणाद्यासु दिक्षु प्रदक्षिणेन जाता अशुभफलदाः। तद्यथा—प्लक्षो याम्यायां दक्षिणस्यामशुभः। वटः पश्चिमायाम्। उदुम्बर उत्तरस्याम्। अश्वत्थः पूर्वस्यामशुभ इति। एत एवोदगादिषूत्तराद्यासु दिक्षु प्लक्षवटोदुम्बराश्वत्थाः प्रशस्ताः। प्लक्ष उत्तरस्यां शुभः। वटः पूर्वस्याम्। उदुम्बरो दक्षिणस्याम्। अश्वत्थः पश्चिमायां शुभ इति। तथा च गर्गः—

वर्जयेत् पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा।
न्यग्रोधं पश्चिमे भागे उत्तरे चाप्युदुम्बरम्।।
अश्वत्थे तु भयं ब्रूयात् प्लक्षे ब्रूयात् पराभवम्।
न्यग्रोधे राजतः पीडा नेत्रामयमुदुम्बरे।।
वटः पुरस्ताद्धन्यः स्याद् दक्षिणे चाप्युदुम्बरः।
अश्वत्थः पश्चिमे भागे प्लक्षस्तूत्तरतो भवेत्।। इति।।८३।।

अधुनाऽरिष्टवृक्षद्वारेण गृहाणां पथिकान् वृक्षानाह—

**आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय।**
**फलिनः प्रजाक्षयकरा दारूण्यपि वर्जयेदेषाम्।।८४।।**

**छिन्द्याद्यदि न तरूंस्तान् तदन्तरे पूजितान् वपेदन्यान्।**
**पुन्नागाशोकारिष्टबकुलपनसान् शमीशालौ।।८५।।**

काँटेदार वृक्ष के गृह-समीप में रहने से गृहस्वामी को शत्रुभय होता है। दूध वाला वृक्ष गृह के समीप में रहने से धन का नाश होता है। फल वाले वृक्ष के गृह के समीप में रहने से सन्तति का नाश होता है। साथ ही इनके काष्ठों का गृह में प्रयोग करने से भी शुभ नहीं होता है। यदि उपर्युक्त काँटेदार आदि वृक्षों को काट कर उनकी जगह पुन्नाग, अशोक, अरिष्ट, वकुल, कटहल, शमी या शाल वृक्ष का रोपण किया जाय तो उपर्युक्त दोषों की प्राप्ति नहीं होती।।८४-८५।।

कण्टकिनः कण्टकिवृक्षाः खदिरप्रभृतय आसन्ना निकटवर्तिनो रिपुभयदाः शत्रुभीतिप्रदाः। क्षीरिणोऽर्कादय आसन्ना अर्थनाशाय भवन्ति। फलिनो वृक्षा आम्रप्रभृतयः प्रजाक्षयकराः प्रजानां क्षयं विनाशं कुर्वन्ति, न केवलमेते आसन्ना अशुभदा भवन्ति, यावदेषामपि दारूणि काष्ठानि गृहार्थं वर्जयेत्।

यदि तान् कण्टकिवृक्षप्रभृतींस्तरून् वृक्षान् न छिन्द्यात् तदन्तरे तेषां मध्ये अन्यान-परान् पूजितान् वृक्षान् वपेत्। कांस्तानित्याह—**पुन्नागेति**। पुन्नागाः, अशोकाः, अरिष्टाः, बकुलाः, पनसाः। एतास्तथा शमीशालौ। एतेषामन्यतमे तत्रस्थे तज्जा दोषा न बाधन्ते।

अथ प्रशस्तभूलक्षणमाह—

**शस्तौषधिद्रुमलता मधुरा सुगन्धा**
**स्निग्धा समा न सुषिरा च महीनराणाम्।**

**अप्यध्वनि श्रमविनोदमुपागतानां**
**धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ।।८६।।**

प्रशस्त औषधी वाली, द्रुम ( याज्ञिक वृक्ष = पलाश आदि ) वाली, लताओं से युत, मधुर मिट्टी वाली, सुगन्धि वाली, निर्मल, समान और छिद्ररहित भूमि मार्ग में गमन से उत्पन्न श्रम को हटाने की इच्छा से वहाँ पर थोड़ी देर के लिये बैठे मनुष्य को भी लक्ष्मी प्रदान करती है। फिर ऐसी भूमि जिनके घर के पास में ही सदा रहती हो, उनके सम्बन्ध में तो कहना ही क्या है? अर्थात् उनको तो अवश्य ही लक्ष्मी की प्राप्ति कराती है।।८६।।

एवंविधा भूर्नराणां पुरुषाणामध्वनि पथि श्रमविनोदमुपागतानां श्रमापनयनं प्राप्तानामपि क्षमाऽत्रावस्थिततत्वादपि श्रियं लक्ष्मीं धत्ते ददाति, किमुत शाश्वतमन्दिरेषु किं पुनर्ये शाश्वतं स्थिरं मन्दिरं गृहं कृत्वा तत्र निवसन्ति। शस्तौषधिद्रुमलता, शस्ता औषधयो जाया-जयन्ती-जीवन्ति-जीवपुत्रा एवमादिका यत्र। द्रुमा वृक्षा याज्ञिकाः पलाशपिप्पलप्रभृतयः। लताश्चूततततयश्च श्यामलताप्रभृतयश्च यस्याम्। या च भूर्मधुरा मृष्टस्वादा। सुगन्धा शोभन-गन्धा। स्निग्धा सस्नेहा। समा सर्वत्र तुल्या निम्नोत्तुङ्गैः रहिता। न सुषिरा अन्तःसारा।।८६।।

अन्यद् गृहे शुभफलं सन्निवेशवशेनाह—

**सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे ।**
**उद्वेगो देवकुले चतुष्पदे भवति चाकीर्तिः ।।८७।।**

**चैत्ये भयं ग्रहकृतं वल्मीकश्वभ्रसङ्कुले विपदः ।**
**गर्त्तायां तु पिपासा कूर्माकारे धनविनाशः ।।८८।।**

गृह के समीप में मन्त्री का घर हो तो धननाश, धूर्त का गृह हो तो पुत्रनाश, देवता का गृह हो तो चित्त में खेद, चौराहा हो तो अकीर्ति और चैत्य ( प्रधान ) वृक्ष हो तो ग्रहों का भय होता है। दीमक ( वाँबी = दिवाड़ ) युत या पोली भूमि गृह के समीप हो तो गृहस्वामी के ऊपर आपत्ति आती है। गृह के समीप गड्ढा हो तो प्यास का रोग और कछुये के समान आकृति वाली भूमि गृह के समीप हो तो गृहस्वामी के धन का नाश होता है।।८७-८८।।

सचिवालये मन्त्रिगृहे समीपस्थे निकटवर्तिनि अर्थनाशो धनविनाशः। धूर्तः परवञ्चना-दक्षः। धूर्तगृहे समीपस्थे सुतवधः पुत्रमरणम्। देवकुले सुरगृहे समीपस्थे उद्वेगश्चित्तखेदः। चतुष्पथे चत्वारः पन्थानो यत्र तस्मिंश्चाकीर्तिर्लोकापवादः।

चैत्य इत्यनेन चैत्यवृक्षाः परिगृह्यन्ते। चैत्यवृक्षे आसन्ने भयं ग्रहकृतं ग्रहोत्पन्ना भीति-र्गृहभर्तुर्भवति। ग्रहा भूतानि। तथा च बृहस्पतिराह—

चैत्यवृक्षेषु भूतेभ्यः कृच्छ्रावासः पुरा ह्ययम्।
अरतिस्त्वभिवर्धेत निविष्टैः कण्टकिद्रुमैः।। इति।

चैत्यवृक्षः कल्पवृक्षः। तथा च पुराणे—

मन्दरस्य गिरः शृङ्गे महावृक्षः स केतुराट्।
आलम्बशाखाशिखरः कदम्बश्चैत्यपादपः।। इति।

वल्मीकसङ्कुले वल्मीकावृते भूभागे। श्वभ्रसङ्कुले च श्वभ्रावृते समीपस्थे विपदो व्यापदो भवन्ति। गर्ता प्रसिद्धा चिता तस्यां समीपवर्तिन्यां पिपासा तृषा भवति। कूर्माकारे भूभागे समीपस्थे धनविनाशो वित्तक्षयो भवति।।८७-८८।।

अथापरं भूमिलक्षणमाह—

**उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव।**
**विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ।।८९।।**

उत्तर की ओर ढलान वाली भूमि ब्राह्मणों के लिये, पूर्व की ओर ढलान वाली भूमि क्षत्रियों के लिये, दक्षिण की ओर ढलान वाली भूमि वैश्यों के लिये और पश्चिम की ओर ढलान वाली भूमि शूद्रों के लिये शुभ होती है।

चारो ओर ढलान वाली भूमि में भी ब्राह्मण गृह का निर्माण करा सकता है; लेकिन शेष वर्णों के लिये अपनी-अपनी दिशा की ढलान वाली भूमि पर ही गृह-निर्माण कराना शुभदायक होता है।।८९।।

विप्रादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणामुदगादिप्लवं प्रदक्षिणेन भूभागेनेष्टं शुभम्। प्लवशब्देन निम्नत्वमुच्यते। तद्यथा—उदक्प्लवा भूर्ब्राह्मणानां प्रशस्ता। पूर्वप्लवा क्षत्रियाणाम्। दक्षिणप्लवा वैश्यानाम्। पश्चिमप्लवा शूद्राणाम्। विप्रो ब्राह्मणः सर्वत्र सर्वस्यां भूमौ वसेदुत्तर-पूर्वदक्षिणपश्चिमप्लवायामिति। अन्येषां क्षत्रियादीनामनुवर्णनमथेष्टं वर्णानुक्रमेण शोभनम्। तद्यथा—पूर्वप्लवा दक्षिणप्लवा पश्चिमप्लवा क्षत्रियाणाम्। दक्षिणप्लवा पश्चिमप्लवा वैश्यानाम्। पश्चिमप्लवा शूद्राणामेवेति।।८९।।

अथ भूमेर्विधानवशेन शुभाशुभमाह—

**गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम्।**
**यद्यूनमनिष्टं तत् समे समं धन्यमधिकं यत् ।।९०।।**

गृहकर्ता के हाथ से गृहमध्य में एक हाथ लम्बा, एक हाथ चौड़ा और एक हाथ गहरा गड्ढा खोदकर पुनः उस गड्ढे को उसी मिट्टी से भरे, यदि गड्ढे को भरने में गड्ढे से ही निकाली गई मिट्टी कम पड़ जाय तो अशुभ, पूरी तरह से गड्ढा भर जाय तो सम और गड्ढा भरकर मिट्टी ज्यादा हो जाय तो शुभ होता है।।९०।।

गृहमध्ये भवनान्तर्हस्तमितं समप्रमाणं श्वभ्रमवटं खात्वा समन्ततः परिवर्तुलं हस्तायतं हस्तमात्रगम्भीरं पुनर्भूयः परिपूरितं तयैव मृत्तिकया यद्यूनं भवति, तदानिष्टमशुभं समे समं, न शुभं नाप्यशुभमित्यर्थः। यदधिकं भवति तद्धन्यं शुभमित्यर्थः।।९०।।

अथ नैर्वाहिकद्वारलक्षणमाह—

**द्वारं च नैर्वाहिकमेकदेशे कार्यं शिलासञ्चितवारिमार्गम्।**
**कोशस्थितं निर्विवरं कपाटं कृत्वा ततः पांशुभिरावपेत्तम् ॥१२०॥**

वापी की एक तरफ जल निकलने के लिये पत्थरों से बन्धवाया हुआ एक मार्ग बनाना चाहिये। उस मार्ग को छिद्ररहित लकड़ी के तख्ते से ढककर मिट्टी से दृढ़ कर देना चाहिये।।१२०।।

एकदेशे एकस्मिन् स्थाने जलस्य नैर्वाहिकं द्वारं निर्गमनद्वारं कार्यम्। कीदृशम्? शिलासञ्चितवारिमार्गम्। शिलाभिः सञ्चितं पाषाणैश्चितं वारिमार्गं यत्र तत् तथाभूतम्। तच्च कोशस्थितं तले व्यवस्थितम्। तत्र च कपाटं निर्विवरं विवररहितं कृत्वा फलकमाच्छादनायोपरि दत्वा ततस्तं पांशुभिरावपेत्, मृत्तिकाभिः स्थगयेदित्यर्थः।।१२०।।

अधुना द्रव्ययोगमाह—

**अञ्जनमुस्तोशीरैः सराजकोशातकामलकचूर्णैः।**
**कतकफलसमायुक्तैर्योगः कूपे प्रदातव्यः ॥१२१॥**

अञ्जन, मोथा, खस, राजकोशातक, आँवला, कतक का फल—इन सबका चूर्ण कूप में डालना चाहिये।।१२१।।

अञ्जनं प्रसिद्धो वृक्षविशेषः। सौवीरक इति केचित्। मुस्ता अब्दाः। उशीरं प्रसिद्धम्। एतैः किम्भूतैः? सराजकोशातकामलकचूर्णैः सह राजकोशातकेन अमलकचूर्णेन च। एतैरपि कतकफलसमायुक्तैः कतकफलेन सहितैः। ईदृशैर्योगो द्रव्यसंयोगः। स च द्रव्यसमायोगश्चूर्णीकृतः कूपे प्रदातव्यो देयः।।१२१।।

अस्य गुणानाह—

**कलुषं कटुकं लवणं विरसं सलिलं यदि वा शुभगन्धि भवेत्।**
**तदनेन भवत्यमलं सुरसं सुसुगन्धि गुणैरपरैश्च युतम् ॥१२२॥**

जो जल गन्दला, कडुआ, खारा, बेस्वाद या दुर्गन्ध वाला हो, वह इन पूर्वोक्त औषधियों के डालने पर निर्मल, मधुर, सुन्दर गन्ध वाला और अनेक गुणों से युक्त हो जाता है।।१२२।।

यत् सलिलं जलं कलुषमनिर्मलम्, कटुकं तिक्तम्, लवणम्, विरसं विगतरसममृष्टम्, यदि वा अशुभगन्धि दुर्गन्धि भवेत् स्यात्? तत् सलिलमनलयोगेनामलं निर्मलम्, सुरसं मृष्टम्, सुसुगन्धि शोभनगन्धि भवति, तथा अपरैश्चान्यैर्गुणैर्युतम्, अकटुकालवणपरिणामकरैर्युतं संयुक्तं भवति।।१२२।।

अधुना नक्षत्राण्याह—

**हस्तो मघानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः।**
**शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥१२३॥**

हस्त, मघा, अनुराधा, पुष्य, धनिष्ठा, तीनों उत्तरा, रोहिणी, शतभिषा—इन नक्षत्रों में कूप का आरम्भ करना शुभ होता है।।१२३।।

हस्तः, मघा, अनुराधा, पुष्यः, धनिष्ठा, उत्तरास्तिस्र उत्तरफल्गुन्युत्तराषाढोत्तरभद्रपदा चेति एतानि, तथा रोहिण्यः, शतभिषक्शब्दो व्यवच्छेदाय। अयं भगणे नक्षत्रसमूहः कूपानामारम्भे शस्यते इष्यते।।१२३।।

अधुना प्रतिष्ठाविधानमाह—

**कृत्वा वरुणस्य बलिं वटवेतसकीलकं शिरास्थाने।**
**कुसुमैर्गन्धैर्धूपैः सम्पूज्य निधापयेत् प्रथमम्॥१२४॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां दकार्गलं**
**नाम चतुष्पञ्चाशत्तमोऽध्यायः॥५४॥**

वरुण को बलि देकर गन्ध, पुष्प, धूप आदि से बड़ या वेतस की लकड़ी की कील की पूजन करके पहले शिरास्थान में उसको स्थापित करना चाहिये।।१२४।।

वरुणस्यापाम्पतेर्बलिमुपहारं कृत्वा विधाय वटवेतसकीलकं वटकीलकं वेतसकीलकं च कुसुमैः पुष्पैर्गन्धैर्गन्धद्रव्यैर्धूपैर्गुग्गुलप्रभृतिभिः सम्पूज्याभ्यर्च्य प्रथममादौ शिरास्थाने शिराप्रदेशे विनिधापयेद् निखनेत् स्थिरं स्थापयेदिति।।१२४।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ दकार्गलं**
**नाम चतुष्पञ्चाशत्तमोऽध्यायः॥५४॥**

**( मेघोद्भवं प्रथममेव मया प्रदिष्टं**
**ज्येष्ठामतीत्य बलदेवमतादि दृष्ट्वा।**
**भौमं दकार्गलमिदं कथितं द्वितीयं**
**सम्यग्वराहमिहिरेण मुनिप्रसादात्॥**

ज्येष्ठ की पूर्णिमा के बाद में जिस प्रकार जल का ज्ञान होता है, उसको मैंने पहले ही कह दिया है। यहाँ बलदेव आदि आचार्यों का मत देखकर मुनियों की कृपा से मैंने जलज्ञान के लिये यह दूसरा 'दकार्गल' नामक अध्याय कहा है। )

**इति 'विमला' हिन्दीटीकायां दकार्गलाध्यायश्चतुष्पञ्चाशत्तमः॥५४॥**

# अथ वृक्षायुर्वेदाध्यायः

अथ वृक्षायुर्वेदाध्यायो व्याख्यायते। तत्रादावेव प्रयोजनप्रदर्शनार्थमाह—

**प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः।**
**यस्मादतो जलप्रान्तेष्वारामान् विनिवेशयेत् ॥१॥**

वापी, कूप, तालाब आदि जलाशयों के प्रान्त छायारहित हों तो सुन्दर नहीं होता; अतः जलाशयों के किनारे पर बागीचा लगाना चाहिये।।१।।

यस्माज्जलाशया उदकाधारा वापीकूपतडागाः, प्रान्तच्छायाविनिर्मुक्ताः पर्यन्तच्छायाविरहिता मनोज्ञाश्चित्ताह्लादका न भवन्ति। अतस्तस्माज्जलप्रान्तेषूदकपर्यन्तेष्वारामान् विशेषेण विनिवेशयेत् कारयेत्। आरमन्तेऽस्मिन्नित्यारामो वृक्षवाटिकेत्यर्थः।।१।।

अथ तत्र भूलक्षणमाह—

**मृद्वी भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत्।**
**पुष्पितांस्तांश्च मृद्नीयात् कर्मैतत् प्रथमं भुवः ॥२॥**

सभी वृक्षों के लिये कोमल भूमि अच्छी होती है। जिस भूमि में बागीचा लगाना हो, उसमें पहले तिल बोना चाहिये और जब वे तिल फूल जायँ तब उनको उसी भूमि में मर्दन कर देना चाहिये। यह भूमि का प्रथम कर्म है।।२।।

सर्ववृक्षाणां मृद्वी मधुरा कोमला भूः अवनिः हिता हितवहा शोभनेत्यर्थः। तस्यां भूमौ प्रथमं तिलान् वपेद् उप्यात्। तांस्तिलान् पुष्पितान् सञ्जातकुसुमान् मृद्नीयादुपमर्दयेत्। एतद्भुवो भूमेः प्रथममादौ कर्म कार्यम्। तथा च काश्यपः—

दूर्वावीरणसंयुक्ताः सानूपा मृदुमृत्तिकाः।
तत्र वाप्यः शुभा वृक्षाः सुगन्धिफलशाखिनः।। इति।।२।।

अधुना प्रथमरोप्यान् वृक्षानाह—

**अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः।**
**मङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥३॥**

पहले बागीचे या घर के समीप में शुभ करने वाले निम्ब, अशोक, पुन्नाग, शिरीष, प्रियङ्गु ( ककुनी = कौनी )—इन वृक्षों को लगाना चाहिये।।३।।

अरिष्टः, अशोकः, पुन्नागः, शिरीषः—एते वृक्षविशेषाः। किम्भूताः? सप्रियङ्गवः प्रियङ्गुवृक्षेण सहिताः, मङ्गल्याः प्रशस्ताः पूर्वं प्रथममारामे रोपणीयाः। गृहेषु वा पूर्वं प्रथमं गृहेषु रोपणीयाः। तथा च काश्यपः—

अशोकचम्पकारिष्टपुन्नागाश्च प्रियङ्गवः।
शिरीषोदुम्बराः श्रेष्ठाः पारिजातकमेव च।।
एते वृक्षाः शुभा ज्ञेयाः प्रथमं तांश्च रोपयेत्।
देवालये तथोद्याने गृहेषूपवनेषु च।। इति।।३।।

अधुना काण्डरोप्याणां विधानमाह—

**पनसाशोककदलीजम्बूलकुचदाडिमाः ।**
**द्राक्षापालीवताश्चैव बीजपूरातिमुक्तकाः ।।४।।**

**एते द्रुमाः काण्डरोप्या गोमयेन प्रलेपिताः ।**
**मूलोच्छेदेऽथवा स्कन्धे रोपणीयाः परं ततः ।।५।।**

कटहल, अशोक, केला, जामुन, बडहर, दाडिम, दाख, पालीवत, बिजौरा, अतिमुक्तक—इन वृक्षों की शाखाओं को लेकर गोबर से लीप कर कटे हुये विजातीय वृक्ष की मूल या शाखा पर लगाना चाहिये। यही कलम लगाने का प्रकार है।।४-५।।

पनसः। अशोकः। कदली। जम्बूः। लकुचः। दाडिमः। द्राक्षा। मृद्वी। पालीवतश्चोचः। बीजपूरो मातुलुङ्गः। अतिमुक्तकः—एते पनसादयो द्रुमा वृक्षाः काण्डरोप्याः। काण्डाः शाखास्तान् गोमयेन प्रलिप्य रोपयेत्। ततोऽनन्तरं परं प्रकृष्टं मूलोच्छेदे अथवा स्कन्धे रोपणीयाः। अन्यवृक्षस्य मूलोच्छेदं कृत्वा तस्य छिन्नमूलस्योपरि विजातीयो वृक्षो रोपणीयः। अथवा स्कन्धादर्द्धादन्यवृक्षं छित्त्वा तस्य स्कन्धमुत्कीर्य विजातीयो वृक्षो रोपणीयः। तत्र मृत्तिकाश्लेषं दापयेदिति। तथा च काश्यपः—

द्राक्षातिमुक्तको जम्बूबीजपूरकदाडिमाः।
कदलीबहुलाशोकाः काण्डरोप्याश्च वापयेत्।।
अन्येऽपि शाखिनो ये च पुष्पिताः फलितास्तथा।
गोमयेन प्रलिप्ताश्च रोपणीया विवृद्धये।। इति।।४-५।।

अथ वृक्षाणां कालनियमार्थमाह—

**अजातशाखान् शिशिरे जातशाखान् हिमागमे ।**
**वर्षागमे च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत् ।।६।।**

अजातशाखा अर्थात् कलमी से भिन्न वृक्षों को शिशिर ( माघ-फाल्गुन ) में, कलमी वृक्षों को हेमन्त ( मार्गशीर्ष-पौष ) में और लम्बी-लम्बी शाखा वाले वृक्षों को वर्षा ( श्रावण-भाद्र ) में लगाना चाहिये।।६।।

अजातशाखानजातलताङ्कुरान् वृक्षान् शिशिरे माघे फाल्गुने च रोपयेत्। जातशाखान् हिमागमे हेमन्ते मार्गशीर्षे पौषे च रोपयेत्। सुस्कन्धान् महाशाखायुक्तान् वर्षागमे प्रावृट्काले श्रावणे भाद्रपदे च रोपयेत्। केचित् 'जातशाखान् घनागमे वर्षागर्भे च सुस्कन्धान्' इति

पठन्ति। घनागमे वर्षाप्रारम्भे। वर्षागर्भे वर्षामध्यभागे इति। तांश्च यथादिक्स्थान् पूर्वमन्यस्थान-तस्तस्य तरोर्या पूर्वा दिगाशा साऽन्यत्र रोपितस्य पूर्वैव कार्या। एवं सर्वासां दिशामानुलोम्यं वाच्यम्। तथा च काश्यपः—

अजातशाखा ये वृक्षाः शिशिरे तांश्च रोपयेत्।
जातशाखाश्च हेमन्ते रोपणीया विधानतः।।
सुस्कन्धाः शाखिनो ये तान् प्रावृट्काले तु रोपयेत्।। इति।।६।।

अन्यदप्याह—

**घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः ।**
**आमूलस्कन्धलिप्तानां संक्रामणविरोपणम् ।।७।।**

घृत, खस, तिल, शहद, विडङ्ग ( वायविडङ्ग ), दूध, गोबर—इन सबों को पीसकर मूल से लेकर अग्रभागपर्यन्त लेप कर वृक्ष को एक स्थान से उठाकर दूसरे स्थान पर लगाना चाहिये।।७।।

घृतमाज्यम्, उशीरं प्रसिद्धम्, तिलाः, क्षौद्रं माक्षिकम्, विडङ्गः, क्षीरं गोक्षीरम्, गोमयं गोशकृद्—एतैर्घृतादिभिरामूलस्कन्धलिप्तानां मूलात् प्रभृति शाखान्तं यावद् लिप्तानां वृक्षाणां संक्रामणविरोपणम्। संक्रामणं देशान्तरनयनम्। अन्यदेशे नीत्वा रोपये-दित्यर्थः। तथा च—

घृतं क्षीरं तथा क्षौद्रमुशीरतिलगोमयैः।
विडङ्गलेपनं मूलात् संक्रामणविरोपणम्।।

संक्रामे रोपणं शुभमित्यर्थः।।७।।

अथ रोपणविधानमाह—

**शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः ।**
**रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते ।।८।।**

पवित्र होकर स्नान, चन्दन आदि से वृक्ष की पूजा करके उसे दूसरे स्थान पर लगाना चाहिये। इस तरह लगाने से अपने पूर्व पत्रों से युत वृक्ष ही लग जाता है, अर्थात् सूखता नहीं है।।८।।

शुचिः समाहितो भूत्वा तरोर्वृक्षस्य स्नानानुलेपनैः स्नानेनानुलेपनेन पूजामर्चां कृत्वा विधाय रोपयेत्। एवमनेन प्रकारेण रोपितश्च तैरेव पत्रैर्युक्तो रोपितस्तैः सह जायते न शुष्यति।।८।।

अधुना रोपितानां सेकविधानमाह—

**सायं प्रातश्च घर्मर्तौ शीतकाले दिनान्तरे ।**
**वर्षासु च भुवः शोषे सेक्तव्या रोपिता द्रुमाः ।।९।।**

उपर्युक्त प्रकार से लगाये गये वृक्षों को ग्रीष्म ऋतु में सायं और प्रात:, शीत काल में एक दिन के अन्तर से एवं वर्षा ऋतु में भूमि के सूखने पर सींचना चाहिये।।९।।

रोपिता द्रुमा वृक्षा घर्मर्तौ ग्रीष्मे सायं प्रातश्च सेक्तव्या:। सायमपराह्णे प्रात: पूर्वाह्णे। शीतकाले हेमन्ते शिशिरे च दिनान्तरे च। दिनं दिनमन्तरे मध्ये कृत्वा सेक्तव्या:। वर्षासु च वर्षासमये। भुव: शोषे यदा यदा भू: शुष्यति, तदा तदा च सेक्तव्या:।।९।।

अथानूपजान् वृक्षानाह—

**जम्बूवेतसवानीरकदम्बोदुम्बरार्जुना: ।**
**बीजपूरकमृद्वीकालकुचाश्च सदाडिमा: ।।१०।।**

**वञ्जुलो नक्तमालश्च तिलक: पनसस्तथा।**
**तिमिरोऽम्रातकश्चेति षोडशानूपजा: स्मृता: ।।११।।**

जामुन, वेंत, वानीर ( एक प्रकार का वेंत ), कदम्ब, गूलर, अर्जुन, बिजौरा, दाख, बडहर, दाडिम, वञ्जुल ( तेन्दुआ = तिनिस ), नक्तमाल ( करञ्ज ), तिलक, कटहल, तिमिर, अम्बाडा—ये सोलह वृक्ष अनूप ( बहुत जल वाले ) देश में पाये जाते हैं।।१०-११।।

जम्बू:, वेतस:, वानीर:, कदम्ब:, उदुम्बर:, अर्जुन:, बीजपूरको मातुलुङ्ग:, मृद्वीका द्राक्षा, लकुच:—एते सदाडिमा दाडिमेन सहिता:। वज्जुल:, नक्तमालश्च, तिलक:, पनस:। तथा तेनैव प्रकारेण तिमिर:, अम्रातक:। चशब्द: समुच्चये। इत्येवंप्रकारा: षोडश वृक्षा अनूपजा अनूपे बहूदके जायन्ते।।१०-११।।

अथ वृक्षाणां रोपितानां किं प्रमाणमन्तरं कार्यमित्येतत्प्रतिपादनायाह—

**उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम्।**
**स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ।।१२।।**

एक वृक्ष से दूसरा वृक्ष बीस हाथ की दूरी पर लगाना उत्तम, सोलह हाथ पर मध्यम और बारह हाथ पर लगाना अधम होता है।।१२।।

वृक्षाणां स्थानात् स्थानात् प्रदेशात् प्रदेशाद्यदन्तरं विंशतिर्हस्ता वृक्षस्य समन्ततस्तदुत्तमं प्रमाणम्, यच्चानन्तरं षोडशहस्तान्तरं तन्मध्यमम्, यदनन्तरं द्वादशहस्तान्तरं तदवरं निकृष्टमित्यर्थ:। एतदुक्तं भवति—यत्रैको वृक्षो रोपितस्तस्माद्विंशतिकेऽन्तरे षोडशके वा अन्यद्रोपणीयमिति। तथा च काश्यप:—

अन्तरं विंशतिर्हस्ता वृक्षाणामुत्तमं स्मृतम्।
मध्यमं षोडश ज्ञेयमधमं द्वादश स्मृतम्।। इति।।१२।।

किमिति तेषां मध्येऽन्तरं क्रियत इति तदर्थमाह—

**अभ्यासजातास्तरव: संस्पृशन्त: परस्परम्।**
**मिश्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीडिता: ।।१३।।**

यदि एक वृक्ष दूसरे वृक्ष के समीप हो, परस्पर स्पर्श करता हो या दोनों की जड़ें इकट्ठी हों तो वे वृक्ष पीड़ित होते हैं और अच्छी तरह फल नहीं देते।।१३।।

ये तरवो वृक्षा अभ्यासजाताः सन्निकर्षसम्भूताः परस्परमन्योन्यं संस्पृशन्तः, मिश्रैश्च परस्परं संलग्नैर्मूलैः पीडिता भवन्ति। अतस्ते सम्यक् फलं न यच्छन्ति न ददति।।१३।।

अथ तेषां रोगज्ञानमाह—

**शीतवातातपै रोगो जायते पाण्डुपत्रता।**
**अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः।।१४।।**

अधिक शीत, वायु और धूप लगने से वृक्षों को रोग हो जाता है। रोगी वृक्षों के पत्ते पीले पड़ जाते हैं। उनके अंकुर नहीं बढ़ते, डालियाँ सूख जाती हैं और उनसे रस टपकने लगता है।।१४।।

शीतेन वातेनातपेन च रोगस्तेषां जायत उत्पद्यते, तथा पाण्डुपत्रता पर्णानां पाण्डुत्वम्, प्रबालानामङ्कुराणामवृद्धिरसमृद्धिः, शाखानां शोषो नीरसता, रसस्य च स्रुतिः स्राव एतैश्चिह्नैस्तरुः सरोगो ज्ञेयः।।१४।।

अथैतेषां चिकित्सितमाह—

**चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम्।**
**विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा।।१५।।**

इन रोगी वृक्षों की चिकित्सा करनी चाहिये। पहले वृक्ष का जो अंग पूर्वोक्त विकार-युत हो, उसको शस्त्र से काट डालना चाहिये। फिर वायविडङ्ग, घृत और पङ्क ( कीचड़ = कीच ) को मिला कर वृक्षों में लेप करना चाहिये। बाद में दूधमिश्रित जल से उसे सींचना चाहिये।।१५।।

अथानन्तरमेतेषां वृक्षाणां चिकित्सितं भवति। आदौ प्रथमं शस्त्रेण व्रणादिविशोधनं कार्यम्। यद्विवर्णं क्लिन्नमवयवं तच्छस्त्रेण निवर्तयेत्। विडङ्गः, घृतमाज्यम्, पङ्कः कर्दमः— एतैरेकीकृतैः आक्तानत्यन्तं लिप्तान् कुर्यात्। ततः क्षीरवारिणा क्षीरसंयुक्तेन जलेन सेचयेत्। एवं कृते नीरुजा भवन्ति। तथा च काश्यपः—

शाखाविटपपत्रैश्च छायया विहिताश्च ये।
येऽपि पर्णफलैर्हीना रूक्षाः पत्रैश्च पाण्डुरैः।।
शीतोष्णवर्षवाताद्यैर्मूलैर्व्यामिश्रितैरपि।
शाखिनां तु भवेद्रोगो द्विपानां लेखनेन च।।
चिकित्सितेषु कर्तव्या ये च भूयः पुनर्नवाः।
शोधयेत् प्रथमं शस्त्रैः प्रलेपं दापयेत् ततः।।
कर्दमेन विडङ्गैश्च घृतमिश्रैश्च लेपयेत्।
क्षीरतोयेन सेकः स्याद् रोहणं सर्वशाखिनाम्।। इति।।१५।।

अथ फलनाशचिकित्सितमाह—

**फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवै: ।**
**श्रृतशीतपय:सेक: फलपुष्पसमृद्धये ॥१६॥**

वृक्ष में फल न लगें तो कुलथी, उड़द, मूँग, तिल, जौ—इन सबको दूध में डाल कर गर्म करने के पश्चात् उस दूध को ठण्ढ़ा करके उससे फल और फूलों की वृद्धि के लिये वृक्षों को सीचना चाहिये।।१६।।

वृक्षाणां यदा फलनाशो भवति, तदा कुलत्थैर्माषैर्मुद्गैस्तिलैर्यवै:। एतै: सह श्रृतशीतपय: श्रृतं क्वथितं तदेव पश्चाच्छीतं पय: क्षीरं कृत्वा तेन पयसा फलानां पुष्पाणां चातिवृद्धये सेक: कार्य इति।।१६।।

अथ वृद्ध्यर्थप्रयोगमाह—

**अविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् ।**
**सक्तुप्रस्थो जलद्रोणे गोमांसतुलया सह ॥१७॥**

**सप्तरात्रोषितैरेतै: सेक: कार्यो वनस्पते: ।**
**वल्मीगुल्मलतानां च फलपुष्पाय सर्वदा ॥१८॥**

भेड़ और बकरी की मेंगन ( भेड़ारी ) का चूर्ण दो आढ़क, तिल एक आढ़क, सत्तू ( सतुआ ) एक प्रस्थ, जल एक द्रोण, गौ का मांस एक तुला—इन सबको मिलाकर एक पात्र में सात रात तक रखने के पश्चात् फल, फूलों की वृद्धि के लिये उससे वृक्ष, गुल्म और लताओं को सींचना चाहिये।।१७-१८।।

अविका प्रसिद्धा मेषजाति:, अजश्छाग:, अविकाजयो: शकृत् पुरीष:, तच्चूर्णस्य द्वे आढके। अविकशकृच्चूर्णस्याढकमजशकृच्चूर्णस्याढकम्। आढकश्चतु:षष्टिपलानि, तिलानामाढकम्, सक्तुप्रस्थ:, प्रस्थ: षोडशपलानि, जलस्य द्रोण:, द्रोण: पलशतद्वयं षट्-पञ्चाशदधिकम्। एतत्सर्वं गोमांसतुलया सह। तुला पलशतम्। उक्तं च—

त्रियवं कृष्णलं निन्द्याद् माषल: पञ्चकृष्णल:।
ते स्युर्द्वादशलक्षाख्यं सुवर्णमथ षोडश।।
पञ्चलक्षैश्चतुर्भिस्तु सुवर्णैर्निष्क उच्यते।
चतुष्पलोऽथ कुडव: प्रस्थ: स्यात्तच्चतुष्टयम्।।
आढकस्तु चतुष्प्रस्थो द्रोणस्तु चतुराढक:।
मानिका तु चतुर्द्रोणा खारी स्यात्तच्चतुष्टयम्।।
तुला पलशतं ज्ञेयं भार: स्याद्विंशतिस्तुला:।
शुष्कद्रव्येषु संख्येयं चार्द्रेषु द्विगुणा भवेत्।।

एवं तन्मध्ये गोमांसस्य गोपिशितस्य तुला देया। पलशतमित्यर्थ:। एतै: सर्वैरेकीकृतै:

सप्तरात्रोषितैः सप्ताहमुषितैः। वनस्पतेर्वृक्षस्य वल्लीनां लतानां च फलानां चातिवृद्ध्यर्थं सर्वदा सर्वकालं सेकः कार्यः। एतत् प्रमाणमेकस्य वृक्षस्यानेनानुसारेण बहूनां कार्यम्। तथा च काश्यपः—

अजाविकानां द्वौ प्रस्थौ शकृच्चूर्णं च कारयेत्।
तिलानामाढकं दद्यात् सक्तूनां प्रस्थमेव च।।
गोमांसशतमेकं स्याद् द्वे सार्धे सलिलस्य च।
सताहमुषितैरेतैः सेकं दद्याद् वनस्पतेः।।
स भवेत् फलपुष्पैश्च पत्रैश्चाङ्कुरितैर्वृतः।। इति।।१७-१८।।

अधुना बीजानां वापनविधानमाह—

**वासराणि दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम्।**
**गोमयेन बहुशो विरूक्षितं क्रौडमार्गपिशितैश्च धूपितम्।।१९।।**

**मांससूकरवसासमन्वितं रोपितं च परिकर्मितावनौ।**
**क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत्।।२०।।**

किसी वृक्ष के बीज को घृत लगाये हुये हाथ से चुपड़ कर दूध में डाल दे। इसी प्रकार लगातार दश दिन तक करता रहे। बाद में उसको गोबर से अनेक बार मल कर रूखा करके सूकर और हिरण के मांस का धूप देने के बाद मांस और सूकर की चर्बी-सहित उस बीज को तिल बोकर शुद्ध की हुई भूमि में लगाकर दुग्धमिश्रित जल से सींचे तो निश्चित ही फूलयुत वृक्ष उत्पन्न होता है।।१९-२०।।

यस्य कस्यचिद् वृक्षस्य बीजं दश वासराणि दश दिनानि दुग्धभावितं दुग्धे सिक्तं कार्यम्। कीदृशम्? आज्ययुतहस्तयोजितम्, आज्ययुतेन घृतेनाभ्यक्तेन हस्तेन करेण योजितं क्षीरमध्ये क्षिप्तम्। पुनर्गृहीत्वा घृताभ्यक्तेन करेणैकीभूतं पृथक्कार्यम्। एवं प्रत्यहं कर्म कार्यम्। यावद्दश दिनानि। ततो गोमयेन गोशकृता बहुशो बहून् वारान् विरूक्षितं मर्दितम्। क्रोडः सूकरः। मृगो हरिणः। क्रोडस्येदं क्रौडम्। मृगस्येदं मार्गम्। क्रौडमार्ग-पिशितैर्मांसैर्धूपितम्, भाण्डान्तरस्थं धूपयेत्।

ततो मांसेनामिषेण सूकरवसया वराहमज्जया समन्वितं संयुतं परिकर्मितायामवनौ भूमौ रोपितम्। परिकर्मिता तिलवपनेन। ततः क्षीरसंयुतेन जलेनोदकेनावसेचितं सुतृप्तं तद्बीजम्। एवंकृते कुसुमयुक्तं पुष्पसंयुतमेव जायत उत्पद्यते।।१९-२०।।

अधुना तिन्तिडीविधानमाह—

**तिन्तिडीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः।**
**पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया।।२१।।**

सड़े हुए मांस से युत धान, उड़द, तिल—इनका चूर्ण और सत्तू—इन सबसे सींच

कर हल्दी का धूप देने से अत्यन्त कठोर इमली का बीज भी शीघ्र ही अंकुरित हो जाता है।।२१।।

अपिशब्द: सम्भावनायाम्। तिन्तिडीत्यपि वल्लरीं करोति, अभिनवाङ्कुरा सम्पद्यते; यत: सा अतिकठिना। कै:? व्रीहिमाषतिलचूर्णसक्तुभि:, व्रीहिचूर्णै: शालिचूर्णै:, माषचूर्णै:, तिलचूर्णै:, सक्तुभिश्च। कीदृशै:? पूतिमांससहितै: क्लिन्नमांसयुतै:। एतैश्च सेचिता सिक्ता सततं सर्वकालं हरिद्रया च धूपिता। एतदुक्तं भवति—तिन्तिडीबीजं व्रीहिचूर्णमाषचूर्ण-तिलचूर्णसक्तुभिरेकीकृतै: पूतिमांससहितै: सिक्तं कृत्वा हरिद्रया धूपयेत्। वल्लरीं करोति। अपिशब्दादन्यबीजस्य वल्लरीकरणे क: सन्देह:।।२१।।

अधुना कपित्थबीजरोपणमाह—

**कपित्थवल्लीकरणाय　मूलान्यास्फोतधात्रीधववासिकानाम्।**
**पलाशिनी　वेतससूर्यवल्ली　श्यामातिमुक्तै:　सहिताष्टमूली।।२२।।**

**क्षीरे श्रृते चाप्यनया सुशीते ताला शतं स्थाप्य कपित्थबीजम्।**
**दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम्।।२३।।**

**हस्तायतं तद्द्विगुणं गभीरं खात्वावटं प्रोक्तजलावपूर्णम्।**
**शुष्कं प्रदग्धं मधुसर्पिषा तत् प्रलेपयेद् भस्मसमन्वितेन।।२४।।**

**चूर्णीकृतैर्माषतिलैर्यवैश्च　प्रपूरयेद्　मृत्तिकयान्तरस्थै:।**
**मत्स्यामिषाम्भस्सहितं च हन्याद्यावद् घनत्वं समुपागतं तत्।।२५।।**

**उप्तं च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम्।**
**वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति।।२६।।**

कपित्थ ( कैथ ) के बीज की शीघ्र उत्पत्ति के लिये विष्णुक्रान्ता, आँवला, धव, वसा—इनकी जड़; पत्तों से युत वेंत और सूर्यमुखी तथा निसोत, अतिमुश्कक ( तेन्दुआ = तिनिस )—इनकी जड़; इन आठ मूलों को दूध में डालकर भरपूर गर्म करे। बाद में उस दूध को ठण्ढ़ा कर उसमें कैथ के बीज को डाल दे। दोनों हाथों से सौ बार ताली बजाने में जितना समय लगता है, उतनी देर तक उस बीज को दूध में रहने दे। बाद में उसको दूध से निकाल कर धूप में सुखा ले। इस तरह प्रतिदिन एक मास तक करता रहे और बाद में उस बीज को बो दे। एक हाथ व्यास वाला वृत्त के आकार का दो हाथ गहरा एक गड्ढा खोद कर उसको पूर्वकथित रीति से दूधमिश्रित जल से पूर्ण करे। जब वह सूख जाय तब उसको अग्नि से जला दे। बाद में शहद और घृत से युक्त भस्म से उस गड्ढे को लीप दे। फिर मृत्तिकायुत उड़द, तिल और जौ के चूर्ण से गड्ढे को भरकर मछली और मांसयुत जल से उसको ऊपर से तब तक ठोके, जब तक कि वह कठिन न हो जाय। इसके पश्चात् उस पर चार अंगुल नीचे पूर्व में सिद्ध किया हुआ कैथ का

बीज रोप कर मछली और मांस के जल से सींचे तो शीघ्र ही सुन्दर पत्तों से युत, मण्डप को ढकने वाली वल्ली उत्पन्न हो जाती है।।२२-२६।।

**कपित्थवल्लीकरणायेति**। कपित्थबीजस्य वल्लीकरणाय वल्लीजननाय मूलान्येतानि। केषाम्? आस्फोतधात्रीधववासिकानाम्, आस्फोतः सारिवा, धात्री आमलकी, धवो वृक्षः, वासिका प्रसिद्धा। एषां चतुर्णां चत्वारि च मूलानि, तथा वेतसो वृक्षः। वेतसस्य वृक्षस्य वल्ली व्रततिः समूला पलाशिनी पर्णयुक्ता। एवमेव सूर्यवल्ली। श्यामा प्रसिद्धा। केचित् त्रिवृदितीच्छन्ति। अतिमुक्तः स्यन्दनकः। एषां मूलैः सहिता, अष्टमूली भवति, अष्टानां मूलानां समाहारः अष्टमूली।

**क्षीरे शृते चेति**। अनया अष्टमूल्या सह क्षीरे शृते क्वथिते ततः सुशीते कृते तन्मध्ये कपित्थबीजं तालशतं संस्थाप्य। तालो हस्तशब्दः। एतावन्तं कालं संस्थाप्य ततो गृह्णीयात्। अनन्तरमर्कपादैः सूर्यरश्मिभिः शोषितं कार्यम्। एवं दिने दिने यावन्मासं त्रिंशद्दिनानि तावदेवं विधिः। ततोऽनन्तरमधिरोप्य रोपणीयम्।

**हस्तायतमिति**। अवटं गर्तं हस्तायतं हस्तप्रमाणमायतम्। समन्ततः समं वृत्तम्। तद् द्विगुणं गभीरं हस्तद्वितयं गम्भीरं तथाभूतं खात्वा तच्च प्रोक्तजलावपूर्णम्, प्रोक्तेन कथितेन जलेन क्षीरोदकेनावपूरितं कृत्वा ततस्तं शोषयेत्। ततः शुष्कमग्निना प्रदहेत्। शुष्कं प्रदग्धं च मधुसर्पिषा मधुना माक्षिकेण सर्पिषा घृतेन च भस्मसमन्वितेन भस्मना युक्तेन प्रलेपयेद् लिम्पेत्।

**चूर्णीकृतैरिति**। ततो माषैस्तिलैर्यवैश्चूर्णीकृतैः सच्चूर्णितैः प्रपूरयेत्; तमवटं मृत्तिकया पूरयित्वा ततोऽन्तरस्थैः, अन्तरे मध्ये स्थिता ये तैर्मृत्तिकयान्तरस्थैः। अयमर्थः— मृदाङ्गुलचतुष्कमात्रं पूरयित्वा ततो माषादिभिः पूरयेत्। पुनरपि तावन्मात्रं मृत्तिकया पूरयित्वा पुनरपि माषादिभिः पूरयेत्। ततस्तं मत्स्यामिषाम्भःसहितं च हन्यात्, मत्स्यामिषेण मत्स्यमांसेन युक्तं यदम्भो जलं तेन सहितं तदवटं हन्यात् पुनः पुनः क्षोदयेत्। यावत् तदवटं घनत्वं काठिन्यं समुपागतं प्राप्तम्।

**उप्तमिति**। ततस्तत्र चतुरङ्गुलाधश्चतुर्णामङ्गुलानामधस्तद्वृक्षबीजमुप्तं वापितं मत्स्याम्भसा मत्स्ययुक्तेन जलेन मांसयुक्तैर्जलैश्चोदकैः सिक्तं सेचितमाशु क्षिप्रमेव शुभप्रवाला शोभनपल्लवा वल्ली भवति सम्पद्यते। कीदृशी? विस्मापनी विस्मयजननी। मण्डपमाधारमावृणोति आच्छादयति।।२२-२६।।

अथान्येषां रोपणमाह—

**शतशोऽङ्कोलसम्भूतफलकल्केन भावितम्।**
**एतत्तैलेन वा बीजं श्लैष्मातकफलेन वा ॥२७॥**

**वापितं करकोन्मिश्रमृदि तत्क्षणजन्मकम्।**
**फलभारान्विता शाखा भवतीति किमद्भुतम् ॥२८॥**

अङ्कोल वृक्ष के फल के कल्क या तेल से अथवा श्लेष्मातक ( लसोड़े ) के फल, कल्क या तेल से सौ बार भावना देकर ओलों से भीगी हुई मिट्टी में जिस बीज को बोया जाता है, वह उसी क्षण उत्पन्न हो जाता है तथा उसकी शाखा फलों के भार से झुक जाती है। इसमें किसी प्रकार का आश्चर्य नहीं करना चाहिये अर्थात् ऐसा निश्चित ही होता है।।२७-२८।।

अङ्कोलो वृक्षस्तत्सम्भूतफलकल्केन, एतत्फलस्य य: कल्को द्रव्यभागो विज्जलारूपस्तेन यस्य कस्यचिद्वृक्षस्य बीजं शतश: शतवारं भावितं सिक्तम्। एतत्तैलेन वा अङ्कोलफलतैलेन वा शतशो भावितम्। तदेव बीजं श्लेष्मातकवृक्षफलेन वा तस्य कल्केन तैलेन वा शतशो भावितम्।

तच्च वापितं करकोन्मिश्रमृदि, करका अशनिपातस्तेनोन्मिश्रा च या मृत् तस्यां वापितमुप्तं तद्बीजं तत्क्षणजन्मकं यस्मिन्नेव क्षणे मुहूर्ते उप्तम्, तस्मिन्नेव जायते। शाखा लता फलभारान्विता फलान्येव भारस्तेनान्विता, आनता वा भवतीति किमद्भुतं किमाश्चर्यम्। अवश्यमेव तद्भवतीत्यर्थ:।।२७-२८।।

अथ श्लेष्मातकरोपणमाह—

**श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञ: ।**
**अङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्वैवम् ।।२९।।**

**माहिषगोमयघृष्टान्यस्य करीषे च तानि निक्षिप्य ।**
**करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि ।।३०।।**

बुद्धिमान् मनुष्य को चाहिये कि छिलका उतारे हुए लसोड़े के बीज को अङ्कोलफल के भीतर के जल से भावना देकर छाया में सुखाता जाय। इस तरह सात बार करने के पश्चात् उसको भैंस के गोबर से घिस कर भैंस के सूखे गोबर के ढेर पर रख दे। तत्पश्चात् ओलों से भींगी हुई मिट्टी में उन बीजों को बोने पर एक दिन में ही फलयुत पौधा लग जाता है।।२९-३०।।

प्राज्ञो मेधावी श्लेष्मातकस्य वृक्षस्य बीजानि निष्कुलीकृत्य कृत्रिमतुषमपास्य ततोऽङ्कोलफलानां या विज्जला: पिच्छिला आपस्ताभिरङ्कोलविज्जलाद्भिश्छायायां भावयेत्। एवमनेन प्रकारेण सप्तकृत्व: सप्तवारं भावयेत्। अङ्कोलविज्जलाद्भिर्भावयित्वा छायायां शोषयेत् पुनर्भावयित्वा शोषयेत् सप्तवारं यावत्।

ततस्तानि बीजानि माहिषगोमयेन महिषशकृता घृष्टानि शक्तानि, कृत्वा ततोऽस्य महिषस्य करीषे गोमयराशौ तानि बीजानि निक्षिप्य संस्थापयेत्, तत्र च तावत् स्थाप्यानि भाण्डान्तर्गतानि यावत् करकाजलेन युक्ता मृद्भवति करकाजलेनाशनिपातपानीयेन या युक्ता मृत् तया युक्ते स्थाने न्युप्तानि वापितानि अह्ना दिवसेन फलकराणि भवन्ति। एकेनैवाह्ना फलन्तीत्यर्थ:।।२९-३०।।

अथ वृक्षाणां रोपणनक्षत्राण्याह—

**ध्रुवमृदुमूलविशाखा गुरुभं श्रवणस्तथाश्विनी हस्तः ।**
**उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ।।३१।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां वृक्षायुर्वेदो**
**नाम पञ्चपञ्चाशत्तमोऽध्यायः ।।५५।।**

तीनों उत्तरा, रोहिणी, मृगशिरा, रेवती, चित्रा, अनुराधा, मूल, विशाखा, पुष्य, श्रवण, अश्विनी, हस्त—इन नक्षत्रों को दिव्य दृष्टि वाले मुनियों ने वृक्षों का रोपन करने के लिये उत्तम कहा है।।३१।।

**इति 'विमला'हिन्दीटीकायां वृक्षायुर्वेदाध्यायः पञ्चपञ्चाशत्तमः ।।५५।।**

त्र्युत्तरा रोहिणी चेति ध्रुवाणि, अनुराधाचित्रामृगशिरोरेवत्यश्चेति मृदूनि, मूलम्, विशाखा, तिष्यः, श्रवणः, अश्विनी, हस्तः—एतानि नक्षत्राणि पादपानां वृक्षाणां संरोपणे वपनकर्मणि दिव्यदृग्भिर्दिव्या सूक्ष्मार्थदर्शिनी दृग् येषां ते दिव्यदृशो मुनयो गर्गादयस्तैरुक्तानि कथितानि। केचिच्छस्तानि प्रशंसितानीति पठन्तीति।।३१।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वृक्षायुर्वेदो**
**नाम पञ्चपञ्चाशत्तमोऽध्यायः ।।५५।।**

## अथ प्रासादलक्षणाध्यायः

अथ प्रासादलक्षणं व्याख्यायते। तत्रादावेव प्रयोजनप्रदर्शनार्थमाह—

**कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च।**
**देवतायतनं कुर्याद् यशोधर्माभिवृद्धये ॥१॥**

बहुत जल वाले जलाशय बनाकर और बागीचा लगाकर यश और धर्म की वृद्धि के लिये देवता का मन्दिर बनाना चाहिये।।१।।

प्रभूतं पर्याप्तं सलिलं जलं कृत्वा तत्र चारामान् वृक्षवाटिकान् विनिवेश्य वेशयित्वा यशोधर्माभिवृद्धये यशसः कीर्तेः धर्मस्य चाभिवृद्ध्यर्थं देवतायतनं देवतागृहं कुर्याद् विदध्यात्।

अत्रैव प्रशंसनार्थमाह—

**इष्टापूर्तेन लभ्यन्ते ये लोकास्तान् बुभूषता।**
**देवानामालयः कार्यो द्वयमप्यत्र दृश्यते ॥२॥**

इष्ट ( यज्ञ आदि ) करने से, पूर्त ( वापी, कूप, तडाग आदि ) बनाने से जो लोक मिलते हैं, उन दोनों को चाहने वाले मनुष्य को देवालय का निर्माण कराना चाहिये; क्योंकि इसमें दोनों लोक दिखाई देते हैं।।२।।

इष्टं यज्ञादिकम्, पूर्तं वापीकूपतडागादिकम्। तथा चोक्तम्—

इष्टं यज्ञेषु यद्दानं ततोऽन्यत् पूर्त्तमिष्यते।
इष्टाभिः पशुबन्धैश्च चातुर्मास्यैर्यजेद् द्विजः।।
अग्निष्टोमादिभिर्यज्ञैर्यो यजेत स इष्टवान्।
वापीकूपतडागादिदेवतायतनानि च।।
अन्नप्रदानमाचार्यैः पूर्त इत्यभिधीयते।

इष्टापूर्तेन ये लोकाः पुण्यस्थानानि लभ्यन्ते प्राप्यन्ते, तान् बुभूषता भवितुमिच्छता प्राप्तुमिच्छतेत्यर्थः। देवानां सुराणामालयः कार्यः, गृहं देवानां कर्तव्यमित्यर्थः। यतोऽत्र देवालये द्वयमपि दृश्यते। इष्टापूर्तेषु यत् फलं तदत्र दृश्यते प्राप्यत इत्यर्थः। तथा च काश्यपः—

इष्टापूर्तादिभिर्यज्ञैर्यावत् कुर्वन्ति मानवाः।
अग्निष्टोमादिपशुभिरिष्टं यज्ञं प्रकीर्तितम्।।
वापीकूपतडागादिदेवतायतनानि च।
स्वर्गस्थितिं सदा कुर्यात्तद्दानं पूर्तसंज्ञितम्।।
देवानामालयः कार्यो द्वयमप्यत्र लभ्यते।। इति।।२।।

कीदृशेषु स्थानेषु सुरा रज्यन्त इत्याह—

**सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च।**
**स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः ॥३॥**

कृत्रिम अथवा अकृत्रिम जल और उपवन से समन्वित स्थान के समीप में देवताओं का आगमन होता है।।३।।

सलिलयुक्तेषु जलसंयुतेषु, उद्यानयुक्तेषूपवनसहितेषु च स्थानेषु। कृतेषु निष्पादितेषु, अकृतकेषु स्वयं निष्पन्नेषु। एतेषु स्थानेषु देवताः सान्निध्यं सन्निहितत्वमुपगच्छन्ति यान्ति।।३।।

अन्यच्च कीदृशेष्वित्याह—

**सरःसु नलिनीछत्रनिरस्तरविरश्मिषु।**
**हंसांसाक्षिप्तकह्लारवीथीविमलवारिषु ॥४॥**

**हंसकारण्डवक्रौञ्चचक्रवाकविराविषु।**
**पर्यन्तनिचुलच्छायाविश्रान्तजलचारिषु ॥५॥**

जिस सरोवर में कमलरूप छत्र से सूर्यकिरण दूर किये गये हों; हंसों के कन्धों से प्रेरित श्वेत कमलों से बने मार्गों में निर्मल जल हो; जहाँ हंस, कारण्डव, क्रौञ्च और चक्रवाक शब्द कर रहे हों और जहाँ पर तट में स्थित निचुल वृक्षों की छाया में जीव विश्राम करते हों, ऐसे सरोवर में देवगण सदा निवास तथा विहार करते हैं।।४-५।।

एवंविधेषु सरःसु नित्यं सर्वकालं देवता देवविशेषा रमन्ते क्रीडन्ति। कीदृशेषु? नलिनीछत्रनिरस्तरविरश्मिषु, नलिनी पद्मिनी सैव छत्रं तेन नलिनीछत्रेण पद्मिन्यातपत्रेण निरस्ता निराकृता रविरश्मयः सूर्यकिरणा येषु। हंसाः पक्षिविशेषास्तेषामंसाः स्कन्धास्तेभ्य आक्षिप्ता दूरे प्रेरितास्ते कह्लाराः पुष्पविशेषाः सितोत्पलास्तेषामाक्षेपणाय या वीथी मार्गस्तत्र यद्विमलं निर्मलं वारि जलं येषु।

हंसाः, कारण्डवाः, क्रौञ्चाः, चक्रवाकाः—एते सर्व एव पक्षिविशेषाः। एषां विरावः शब्दो येषु सरःसु, तथा पर्यन्तेषूपान्तेषु ये निचुला वृक्षविशेषास्तेषां याश्छायास्तासु छायासु विश्रान्ता जलचारिणो जलप्राणिनो येषु सरःसु तेषु नित्यं देवता रमन्ते।।४-५।।

अन्यत्कीदृशेष्वित्याह—

**क्रौञ्चकाञ्चीकलापाश्च कलहंसकलस्वराः।**
**नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः ॥६॥**

**फुल्लतीरद्रुमोत्तंसाः सङ्गमश्रोणिमण्डलाः।**
**पुलिनाभ्युन्नतोरस्या हंसवासाश्च निम्नगाः ॥७॥**

जिसका क्रौञ्च पक्षीरूप काञ्ची-कलाप, कलहंसों का मधुर शब्दरूप शब्द, तट में

स्थित फूले हुये वृक्षरूप कर्णपूर, जल और थल का संयोगरूप श्रोणीमण्डल, पुलिन-रूप उठे हुये स्तन और हंसरूप हास्य है, ऐसी नीचे को बहने वाली नदियों के समीप में देवता निवास करते हैं।।६-७।।

यत्र यस्मिन् स्थाने एवंविधा नद्यः सरितस्तत्र नित्यं देवता रमन्ते। कीदृश्यः? क्रौञ्चाः पक्षिविशेषास्त एव सशब्दत्वात् काञ्चीकलापो रशनाविस्तारो यासाम्। कलहंसा राजहंसास्तेषां यः कलो मधुरः स्वरः शब्दः सम्भाषणं यासाम्। तोयं जलं तदेवांशुकमम्बरं यासाम्। शफर्यः सूक्ष्ममत्स्यास्ता एव कृता मेखला याभिः। मेखला वस्त्रस्योपरि वध्यते। नीवीति लोकप्रसिद्धा। तथा च—

नीविराग्रन्थने नार्या जघनस्थस्य वाससः।। इति।

**फुल्लतीरेति**। यत्र ईदृश्यो निम्नगा नद्यस्तत्र नित्यं देवता रमन्ते। फुल्लाः पुष्पिता-स्तीरेषु प्रान्तेषु ये द्रुमा वृक्षास्त एवोत्तंसाः कर्णपुष्पाणि मुण्डमाला वा यासाम्। पुलिनेषु तीरेषु ये अभ्युन्नता उच्चाः प्रदेशास्त एवोरस्या उरसि भवाः स्तना यासाम्। हंसाः पक्षि-विशेषास्त एव शुक्लत्वाद्वासो वसनं यासाम्। तास्तथाभूताः। तासु देवता रमन्ते।।६-७।।

अन्यत्कीदृशेषु स्थानेषु रमन्त इत्याह—

**वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु ।**
**रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च ॥८॥**

वन, नदी, पर्वत और झरनों के समीप में तथा उपवनों से युत नगरों में देवता विहार करते हैं।।८।।

वनोपान्तेषु वनोपकण्ठेषु। उपान्तशब्दः प्रत्येकमभिसम्बध्यते। नदीषु सरित्सु। शैलेषु पर्वतेषु। निर्झरोपान्तभूमिषु, निर्झरेण प्रपातपानीयेन ये युक्ता उपान्ता नदीप्रभृतीनां समीपास्तेषु भूमिषु। नियतं झरन्ति स्रवन्तीति निर्झराः। तेषु नित्यं सर्वकालं देवता रमन्ते क्रीडन्ते। पुरेषु नगरेषु, उद्यानवत्सु येषूद्यानान्युपवनानि विद्यन्ते तेषु नित्यं रमन्त इति। तथा च काश्यपः—

हरितोज्ज्वलतोयाढ्या वाप्यः पक्षिभिरावृताः।
वनोपवनमालिन्यो नित्यमुत्फुल्लितद्रुमाः।।
हंसकारण्डवाकीर्णाः कोकिलालापनादिताः।
षट्पदागीतमधुरा नृत्यद्भिः शिखिभिर्युताः।।
तत्र देवा रतिं यान्ति सान्निध्यान्नित्यसंस्थिताः।। इति।।८।।

अधुना प्रतिष्ठाकरणे भूमिगुणानाह—

**भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ।**
**ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥९॥**

पहले ब्राह्मण आदि वर्णों को गृह बनाने के लिये जिस प्रकार की भूमि शुभ कही गई है; देवालय बनाने के लिये भी उन वर्णों के लिये वैसी ही भूमि श्रेष्ठ होती है।।९।।

ब्राह्मणादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणां या भूमयो वास्तुकर्मणि प्रोक्ताः कथिताः। तद्यथा—

सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः।
गन्धश्च भवति यस्यां घृतरुधिरान्नाद्यमद्यसमः।।
कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही।
अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च।।

इत्यादिना ज्ञेयाः। विप्रादीनां ता एव भूमयो देवताप्रासादेषु शस्यन्ते शोभन्त इति।

अधुना देवतागृहे वास्तुपुरुषलक्षणं द्वारप्रविभागं चाह—

**चतुःषष्टिपदं कार्यं देवतायतनं सदा।**
**द्वारं च मध्यमं तस्मिन् समदिक्स्थं प्रशस्यते ॥१०॥**

देवालय में सदा पूर्वोक्त चौंसठ पद का वास्तु बनाना चाहिये तथा मध्यम द्वार सब दिशाओं में स्थित हो तो श्रेष्ठ होता है।।१०।।

सदा सर्वकालं देवतायतनं सुरगृहं चतुःषष्टिपदं कार्यम्। 'अष्टाष्टकपदमथवा' इति पूर्वमेव प्रदर्शितम्। तस्मिन् देवतायतने मध्यमं द्वारं मध्यवर्तिनं समदिक्स्थं समायां दिशि यथा तिष्ठति, तथा प्रशस्यत इष्यते।।१०।।

अथ प्रासादानां विधानमाह—

**यो विस्तारो भवेद् यस्य द्विगुणा तत्समुन्नतिः।**
**उच्छ्रायाद् यस्तृतीयांशस्तेन तुल्या कटिः स्मृता ॥११॥**

**विस्तारार्धं भवेद् गर्भो भित्तयोऽन्याः समन्ततः।**
**गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥१२॥**

**उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुदुम्बरः।**
**विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥१३॥**

**त्रिपञ्चसप्तनवभिः शाखाभिस्तत् प्रशस्यते।**
**अधः शाखाचतुर्भागे प्रतीहारौ निवेशयेत् ॥१४॥**

**शेषं मङ्गल्यविहगैः श्रीवृक्षैः स्वस्तिकैर्घटैः।**
**मिथुनैः पत्रवल्लीभिः प्रमथैश्चोपशोभयेत् ॥१५॥**

**द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका।**
**द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका ॥१६॥**

देवालय का जितना विस्तार हो, उससे दूनी ऊँचाई और ऊँचाई की तिहाई कटि होती है। सीढ़ी के ऊपर जहाँ से देवालय का प्रारम्भ होता है उसको 'कटि' कहते हैं। विस्तार के आधा गर्भ शेष सब दिशाओं में भीत बनती है। गर्भ के चौथाई के समान द्वार का विस्तार और द्विगुणित विस्तारतुल्य द्वार की ऊँचाई होती है। द्वार की ऊँचाई तुल्य शाखा ( चौखट का बाजू ) और उदुम्बर ( चौखट के ऊपर की लकड़ी ) की चौड़ाई होती है तथा शाखा की चौथाई की चौथाई के तुल्य शाखाओं की मोटाई होती है। शाखाओं की चौड़ाई के बीच में तीन, पाँच, सात या नव शाखायें होने से द्वार श्रेष्ठ होता है। दोनों शाखाओं के नीचे की चौथाई में दो प्रतिहार ( नन्दी, दण्ड आदि ) की मूर्ति खुदवानी चाहिये। शाखाओं के तीन-चौथाई भागों को हंस आदि शुभ पक्षी, बेल, स्वस्तिक ( चिह्नविशेष ), कलश, स्त्री-पुरुष का जोड़ा, पत्ते और लताओं से शोभित करना चाहिये। द्वार की ऊँचाई में उसका अष्टमांश घटा कर जो शेष बचे, उतनी पिण्डिका ( देवतास्थापन की पीठिका ) को लेकर देवप्रतिमा की ऊँचाई होती है। पीठिकासहित प्रतिमा की ऊँचाई का तीन भाग करके दो भाग के बराबर ऊँची प्रतिमा और एक भाग के समान पीठिका बनानी चाहिये। यह प्रमाण समस्त प्रासादों में जानना चाहिये।।११-१६।।

**यो विस्तार इति**। तस्य देवगृहस्य यो विस्तारो विष्कम्भो भवेत् स्यात् तद्द्विगुणा विस्ताराद् द्विगुणा समुन्नतिरुच्छ्रायो भवति। यथा मेरुप्रासादस्य द्वात्रिंशद्विस्तारः। विस्ताराद् द्विगुणा समुन्नतिश्चतुःषष्टिर्हस्ताः। उच्छ्रायाद् यस्तृतीयांशस्तृतीयभागस्तेन च तुल्या तत्समा देवगृहस्य कटिः स्मृतोक्ता। यथा मेरोश्चतुःषष्टिर्हस्ता उच्छ्रायः। तस्मात् त्रिभाग एकविंशतिर्हस्ता अष्टावङ्गुलानि। अनेन प्रमाणेन कटिर्भवति। सोपानोपरि यतो देवगृहस्य प्रारम्भः सा कटि-रुच्यते।

**विस्तारार्धमिति**। देवगृहस्य यो विस्तार उक्तस्तदर्धं गर्भो भवति। यथा मेरोर्हस्ताद् द्वात्रिंशद्विस्तारः। तदर्धं षोडश। अनेन प्रमाणेन मेरोर्गर्भः। अन्याः समन्ततः सर्वासु दिक्षु विदिक्षु भित्तयो भवन्ति। हस्तमात्रं भ्रमणाय सर्वासु दिक्ष्वनावृतं स्थापयित्वा शेषं हस्तत्रयं भित्त्यवष्टब्धं कुर्यात्। गर्भस्य यः पादश्चतुर्थांशस्तेन मानेन विस्तीर्णं द्वारं भवति। यथा मेरोर्गर्भः षोडशहस्ताः। तस्य चतुर्भागश्चत्वारो हस्ताः। एष द्वारस्य विस्तारः। विस्ताराद् द्विगुणमुच्छ्रितं कार्यम्। एवमष्टौ हस्ता मेरुद्वारोच्छ्रायः कार्यः।

**उच्छ्रायादिति**। द्वारस्य य उच्छ्रायस्तस्य यः पादश्चतुर्भागस्तेन मानेन विस्तीर्णा शाखा द्वारिका कार्या। यथा मेरुद्वारस्योच्छ्रायोऽष्टौ हस्ताः। अस्य चतुर्भागो द्वौ हस्तौ। एष शाखाया विस्तारः। तद्वदुदुम्बरस्तद्वत् तेनैव प्रकारेणोदुम्बरः कार्यः। शाखयोरुपरि यत् काष्ठं दीयते यच्चाधः स उदुम्बर इत्युच्यते। तद्वदुदुम्बराविति केचित् पठन्ति। **विस्तार-पादप्रतिममिति**। शाखाया यो विस्तारस्तस्य यः पादश्चतुर्भागस्तत्प्रतिमं तत्तुल्यं शाखायो-र्बाहुल्यं घनत्वं स्मृतमुक्तम्। यथा मेरुद्वारशाखाविस्तारो द्वौ हस्तौ। विस्तारपादो द्वादशाङ्गुलानि। एतद् घनत्वम्।

**त्रिपञ्चसप्तनवभिरिति**। तद्द्वारं तिसृभिः पञ्चभिर्नवभिश्च शाखाभिर्द्वारिकाभिः प्रशस्यते इष्यते। शाखाविस्तारस्तिसृभिर्यदि न पूर्यते, तदा पञ्चभिः पूरणीयः, ताभिरपि न पूर्यते, तदा नवभिः पूरणीय इति। शाखयोर्योऽधस्तलस्य चतुर्भागस्तुर्यांशस्तस्मिन् प्रतीहारौ नन्दिदण्डादिकौ निवेशयेत् कारयेत्।

**शेषमिति**। शेषं भागत्रयं मङ्गल्यविहगैर्मङ्गल्यवद्भिः पक्षिभिः हंसकारण्डवचक्रवाक-जीवकप्रभृतिभिः। श्रीवृक्षैः, स्वस्तिकश्चिह्नविशेषैः। स्वस्तिकस्य वास्तुनरस्य सदृशैर्घटैः कलशैः। मिथुनैर्युग्मैः। पत्रवल्लीभिः पत्रलताभिः। प्रमथैर्गणैश्चोपशोभयेत् शोभामुत्पादयेत्।

**द्वारमानाष्टभागोनेति**। द्वारस्य यन्मानं प्रमाणमुच्छ्रायस्तस्य योऽष्टभागोऽष्टांशस्तेन द्वारप्रमाणादूना प्रतिमार्चा सपिण्डिका पीठसहिता कार्या। तत्र च द्वौ भागौ प्रतिमा कार्या तृतीयांशस्तृतीयो भागः पिण्डिका पीठिका कार्येति। यथा मेरुप्रासादस्य द्वारोच्छ्रायोऽष्टौ हस्ताः। अस्याष्टभाग एको हस्तः। अनेनोनं द्वारमानं सप्त हस्ताः। एतत् सपिण्डिकं कार्यमिति। अस्माद्भागद्वयं चत्वारो हस्ताः षोडशाङ्गुलानि। एतत् प्रतिमायाः प्रमाणम्। तृतीयो भागो हस्तद्वयमष्टावङ्गुलानि। एतत् पिण्डिकायाः प्रमाणमिति। एवं सर्वप्रासादेषूह्यम्। तथा च काश्यपः—

पुरानुसारप्रासादाः कर्तव्याः शुभलक्षणाः।
नात्युच्चा नातिनीचाश्च समदिक्सूत्रसूत्रिताः।।
चतुःषष्टिं कोष्ठकानां मध्ये च तत्र विन्यसेत्।
द्वारं च मध्यमं श्रेष्ठं समदिक्स्थं प्रशस्यते।।
विस्तारद्विगुणोत्सेधः कटिरंशे तृतीयके।
विस्तारार्धेन तद्गर्भो भित्तयोऽन्यास्तथान्तरे।।
गर्भाच्चतुर्थभागे च द्वारं तद्द्विगुणोच्छ्रितम्।
द्वारोच्छ्रायचतुर्भागो विस्तारः शाखयोः स्मृतः।।
उदुम्बरस्तथैवोक्तः शाखामानेन नित्यशः।
घनत्वं पादमानेन शााखयोश्च प्रकीर्तितम्।।
एकशाखास्त्रिशाखा वा पञ्च सप्त नवापि वा।
द्वारिकास्तत्र शस्यन्ते द्वारिभिर्या अकुण्ठिकाः।।
शाखाचतुर्थभागेऽत्र प्रतीहारौ तु कारयेत्।
प्रमथैर्विहगैश्चैव जीवजीवजलोद्भवैः।।
श्रीवृक्षस्वस्तिकैः पद्मैर्हंसैश्चैव मनोरमैः।
पत्रान्तरे लताशुभैर्ग्रहैर्वैनायकादिभिः।।
देवं सपिण्डिकं स्थाप्यं द्वाराष्टं शोभितं शुभम्।
द्वौ भागौ प्रतिमा कार्या तृतीयश्चैव पिण्डिका।।
स्रवणद्रोणिकाभागो वामे पार्श्वे विधीयते।
निर्माल्यञ्च निवेद्यं च बलिपूजापमार्जनम्।। इति।।११-१६।।

अधुना प्रासादानां नामान्याह—

**मेरुमन्दरकैलासविमानच्छन्दनन्दनाः ।**
**समुद्गपद्मगरुडनन्दिवर्धनकुञ्जराः ॥१७॥**

**गुहराजो वृषो हंसः सर्वतोभद्रको घटः ।**
**सिंहो वृत्तश्चतुष्कोणः षोडशाष्टाश्रयस्तथा ॥१८॥**

**इत्येते विंशतिः प्रोक्ताः प्रासादाः संज्ञया मया ।**
**यथोक्तानुक्रमेणैव लक्षणानि वदाम्यतः ॥१९॥**

मेरु, मन्दर, कैलाश, विमानच्छद, नन्दन, समुद्ग, पद्म, गरुड़, नन्दिवर्धन, कुञ्जर, गुहराज, वृष, हंस, सर्वतोभद्र, घट, सिंह, वृत्त, चतुष्कोण, षोडशाश्रि और अष्टाश्रि—ये बीस प्रासादों के नाम मैंने ( वराहमिहिर ने ) कहे हैं। अब क्रमशः इन प्रासादों के लक्षण कहते हैं।।१७-१९।।

मेर्वाद्या यथापाठक्रमेण विंशतिः संज्ञाः प्रासादानाम्। मेरुः, मन्दरः, कैलासः, विमानच्छन्दः, नन्दनः, समुद्गः, पद्मः, गरुडः, नन्दिवर्धनः, कुञ्जरः, गुहराजः, वृषः, हंसः, सर्वतोभद्रकः, घटः, सिंहः, वृत्तः, चतुष्कोणः, षोडशाश्रिः, अष्टाश्रिः—इत्येवंप्रकारा एते विंशतिः प्रासादा मया संज्ञया प्रोक्ताः कथिताः। अतोऽस्मादनन्तरं यथानुक्रमेण। येनैवानुक्रमेणोक्ताः कथितास्तेनैवानुक्रमेण लक्षणानि वदामि कथयामि।।१७-१९।।

तत्रादावेव मेरुप्रासादस्य लक्षणमाह—

**तत्र षडश्रिर्मेरुर्द्वादशभौमो विचित्रकुहरश्च ।**
**द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः ॥२०॥**

'मेरु' नामक प्रासाद में छः कोण, बारह भूमि, अनेक प्रकार की खिड़कियाँ, चारो दिशाओं में चार द्वार और बत्तीस हाथ के बराबर विस्तार होता है।।२०।।

तत्र तस्मिन् प्रासादलक्षणे मेरुर्नाम प्रासादः। षडश्रिः षड् अश्रयः कोणा यस्य। द्वादशभौमः, उपर्युपरि तस्य द्वादश भूमिका भवन्तीत्यर्थः। विचित्रकुहरः, विचित्रा नानाप्रकाराः कुहरा अभ्यन्तरगवाक्षास्तत्र भवन्ति। चतुर्भिर्द्वारैर्युतः, चतसृषु दिक्षु तस्मिन् द्वाराणि भवन्ति। द्वात्रिंशद्धस्तविस्तीर्णः, विष्कम्भाद् अर्थादेव चतुःषष्टिर्हस्तास्तस्यौच्च्यम्। तथा च काश्यपः—

द्वात्रिंशद्धस्तविस्तीर्णं चतुर्द्वारं षडश्रिकम्।
भूमिकास्तत्र कर्तव्या विचित्रकुहरान्विताः।।
द्वादशोपर्युपरिगा वर्तुलाण्डैः समायुताः।
प्रासादो मेरुसंज्ञः स्याद् निर्दिष्टो विश्वकर्मणा।। इति।।२०।।

अथ मन्दरकैलासयोर्लक्षणमाह—

**त्रिंशद्धस्तायामो दशभौमो मन्दरः शिखरयुक्तः।**
**कैलासोऽपि शिखरवानष्टाविंशोऽष्टभौमश्च ॥२१॥**

'मन्दर' नामक प्रासाद छः कोण वाला, तीस हाथ तुल्य विस्तार वाला, दश भूमि वाला और शिखरों से युक्त होता है। 'कैलाश' नामक प्रासाद शिखरों से युक्त, अट्ठाईस हाथ विस्तार वाला, आठ भूमि वाला और छः कोण वाला होता है।।२१।।

तत्र षडश्रिरित्येतत् सर्वत्रानुवर्तते नन्दनलक्षणं यावत्। मन्दरसंज्ञः प्रासादस्त्रिंशद्धस्तायामस्त्रिंशत् करा विस्तीर्णः। विष्कम्भात् षष्टिर्हस्तास्तस्यौच्च्यम्। षडश्रिश्च। दशभौमो दशभिर्भूमिकाभिर्युक्तः शिखरैर्युक्तः। तथा च काश्यपः—

त्रिंशद्धस्तास्तु विस्तीर्णः प्रासादोऽयं द्वितीयकः।

**कैलासोऽपीति**। अपिशब्दः सम्भावनायाम्। कैलासोऽपि षडश्रिः। शिखरवान् शिखरैर्युक्तः। अष्टाविंशः, अष्टाविंशतिर्हस्ता विस्तीर्णः। विष्कम्भात् षट्पञ्चाशद्धस्तास्तस्यौच्च्यम्। अष्टभौमोऽष्टाभिर्भूमिकाभिर्युक्तः। तथा च काश्यपः—

अष्टभौमश्च कैलासो हस्ताष्टाविंशतिः स्मृतः।
षडश्रिः शिखरोपेतः प्रासादस्तु तृतीयकः।। इति।।२१।।

अथ विमाननन्दनयोर्लक्षणमाह—

**जालगवाक्षकयुक्तो विमानसंज्ञस्त्रिसप्तकायामः।**
**नन्दन इति षड्भौमो द्वात्रिंशः षोडशाण्डयुतः ॥२२॥**

'विमान' नामक प्रासाद जालीदार खिड़कियों से युक्त, इक्कीस हाथ विस्तार वाला, आठ भूमि वाला और छः कोण वाला होता है। 'नन्दन' नामक प्रासाद छः कोण वाला, छः भूमि वाला, बत्तीस हाथ तुल्य विस्तार वाला और सोलह अण्डों ( शिखरों ) से युक्त होता है।।२२।।

विमानच्छन्दसंज्ञः षडश्रिः। जालगवाक्षकयुक्तः, जालकोपलक्षितैर्गवाक्षकैश्च शारिकाभिर्युक्तः। त्रिसप्तकायामः एकविंशतिर्हस्तो आयामो विस्तीर्णः। विष्कम्भात्, अर्थादेव द्वाचत्वारिंशद्धस्तस्तस्यौच्च्यम्। अष्टभूमिकश्च। तथा च काश्यपः—

गवाक्षजालसंयुक्तो विमानश्चैकविंशतिः।
षडश्रिरष्टभौमश्च प्रासादः स्याच्चतुर्थकः।।

**नन्दन इति**। नन्दनसंज्ञः षडश्रिः। षड्भौमः षड्भिर्भूमिकाभिर्युक्तः। द्वात्रिंशो द्वात्रिंशद्धस्तो विस्तीर्णः। विष्कम्भात् चतुःषष्टिर्हस्तास्तस्यौच्च्यम्। षोडशभिरण्डैर्युक्तः। अण्डः प्रासादस्योपरि भवति। तथा च काश्यपः—

नन्दनस्तु षडश्रिः स्याद् द्वात्रिंशद्धस्तविस्तृतः।
षड्भौमः षोडशाण्डस्तु प्रासादः पञ्चमो मतः।। इति।।२२।।

अथ समुद्रपद्मयोर्लक्षणमाह—

**वृत्तः समुद्रनामा पद्मः पद्माकृतिः शया अष्टौ।**
**शृङ्गेणैकेन भवेदेकैव च भूमिका तस्य ॥२३॥**

'समुद्ग' नामक प्रासाद गोल और 'पद्म' नामक प्रासाद कमल की आकृति वाला होता है तथा दोनों एक शृङ्ग तथा एक ही भूमि वाले होते हैं।।२३।।

समुद्रनामा वृत्तः परिवर्तुलः, मुद्राकारः। पद्मः पद्माकृतिः कमलाकारः। अष्टभिर्दलैर्युक्तः। एतौ द्वावपि प्रासादावष्टौ शयाः अष्टौ हस्ता विस्तीर्णः। विष्कम्भात् षोडशहस्तास्तस्यौच्च्यम्। शृङ्गेणैकेन भवेत् स्यात्। एकेन शृङ्गेणैकेनाण्डेनोपलक्षितौ द्वावप्येतौ। तस्य च प्रासाद-द्वयस्यैकैव भूमिका भवति। तथा च काश्यपः—

वर्तुलस्तु समुद्रः स्यात् पद्मः पद्माकृतिस्तथा।
हस्ताष्टकं तु विस्तीर्णो भूमिका शृङ्गभूषिता।। इति।।२३।।

अथ गरुडनन्दिवर्धनयोर्लक्षणमाह—

**गरुडाकृतिश्च गरुडो नन्दीति च षट्चतुष्कविस्तीर्णः।**
**कार्यस्तु सप्तभौमो विभूषितोऽण्डैस्तु विंशत्या ॥२४॥**

'गरुड़' नामक प्रासाद गरुड़ की आकृति का होता है। 'नन्दिवर्धन' नामक प्रासाद भी गरुड़ की आकृति का होता है; किन्तु पंख तथा पूँछ से रहित होता है तथा ये दोनों ही प्रासाद चौबीस हाथ विस्तार वाले, सात भूमि वाले और चौबीस शिखरों से विभूषित होते हैं।।२४।।

गरुडसंज्ञो गरुडाकृतिर्गरुडाकारः पक्षी पक्षपुच्छयुक्तः। नन्दीति च। चशब्दः समुच्चये। नन्दिवर्धनसंज्ञश्च गरुडाकार एव, किन्तु पक्षपुच्छरहितः। षट्चतुष्कविस्तीर्णः, गरुडो नन्दि-वर्धनश्च षट्चतुष्कश्चतुर्विंशतिर्हस्ता विस्तीर्णः। अष्टचत्वारिंशद्धस्तास्तस्यौच्च्यम्। तथा सप्तभौमः, सप्तभिर्भूमिकाभिर्युक्तः। अण्डानां विंशत्या विभूषितो गरुडो नन्दिवर्धनश्च। तथा च काश्यपः—

गरुडो गरुडाकारः पक्षपुच्छविभूषितः।
नन्दी तथाकृतिर्ज्ञेयः पक्षादिरहितः पुनः।।
कराणां षट्चतुष्कास्तु विस्तीर्णौ सप्तभूमिकौ।
दशभिर्द्विगुणैरण्डैर्भूषितौ कारयेत्तु तौ।। इति।।२४।।

अथ कुञ्जरगुहराजयोर्लक्षणमाह—

**कुञ्जर इति गजपृष्ठः षोडशहस्तः समन्ततो मूलात्।**
**गुहराजः षोडशकस्त्रिचन्द्रशाला भवेद् वलभी ॥२५॥**

'कुञ्जर' प्रासाद हाथी की पीठ के समान आकृति वाला और मूल से चारो तरफ

सोलह हाथ विस्तार वाला होता है। 'गुहराज' प्रासाद गुह की आकृति वाला और सोलह हाथ विस्तार वाला होता है तथा इन दोनों ही प्रासादों का बलभी तीन चन्द्रशालाओं से समन्वित होता है।।२५।।

कुञ्जरसंज्ञो गजपृष्ठो हस्तिपृष्ठाकारः। षोडशहस्तः समन्ततो मूलात्, मूलात् षोडश-हस्तः समन्ततश्चतुर्दिक्कं षोडश हस्ता विष्कम्भः अन्येषां पाठः षोडशहस्तः सुविस्तरो मूलात्। एवं द्वात्रिंशद्धस्तास्तस्यौच्च्यम्। उत्थितगजाकार एकभूमिकः। गुहराजो गुहाकारः। षोडशकः षोडश हस्ता विस्तीर्णो द्वात्रिंशद्धस्तास्तस्यौच्च्यम्। एकभूमिकश्च। अनयोर्द्वयोरपि वलभी कुहरैस्त्रिचन्द्रशाला भवेत् स्यात्। तिसृभिश्चन्द्रशालाभिर्युक्ता इत्यर्थः। तथा च काश्यपः—

कुञ्जरो गजपृष्ठाभो हस्ताः षोडश विस्तृतः।
गुहराजो गुहाकारो विष्कम्भात् षोडश स्मृतः।।
त्रिचन्द्रशाला वलभी तयोः कार्या सुलक्षणा।
दशमैकादशावेतौ प्रासादौ द्वौ प्रकीर्तितौ।। इति।।२५।।

अधुना वृषहंसघटानां लक्षणमाह—

**वृष एकभूमिश्रृङ्गो द्वादशहस्तः समन्ततो वृत्तः।**
**हंसो हंसाकारो घटोऽष्टहस्तः कलशरूपः ।।२६।।**

'वृष' नामक प्रासाद एक भूमि वाला, एक श्रृङ्ग वाला, बारह हाथ विस्तार वाला और चारो तरफ से वृत्ताकार होता है। 'हंस' प्रासाद हंस पक्षी की आकृति वाला, बारह हाथ विस्तार वाला, एक भूमि और एक श्रृङ्ग वाला होता है। 'घट' नामक प्रासाद कलश की आकृति वाला, आठ हाथ विस्तार वाला, एक श्रृङ्ग और एक भूमि वाला होता है।।२६।।

वृषसंज्ञ एकभूमिश्रृङ्गः, एकया भूमिकयैकेन श्रृङ्गेण शिखरेण युक्तः। द्वादशहस्तो द्वादश हस्तो विस्तीर्णः। विष्कम्भाच्चतुर्विंशतिर्हस्तास्तस्यौच्च्यम्। समन्ततः सर्वासु दिक्षु वृत्तः परिवर्तुलः। हंसो हंसाकारो हंससदृशः। चञ्चुपक्षपुच्छयुक्तः। द्वादशहस्तविस्तीर्णः। चतुर्विंशतिर्हस्तास्तस्यौच्च्यम्। एकभूमिकश्च। घटसंज्ञः कलशरूपः कलशाकारः। अष्टहस्तो विस्तीर्णः। विष्कम्भात् षोडशहस्तास्तस्यौच्च्यम्। एकभूमिकश्च सर्व एकश्रृङ्गाः। तथा च काश्यपः—

वृषो द्वादशहस्तस्तु समवृत्तैकभूमिकः।
श्रृङ्गेणैकेन संयुक्तः प्रासादः परिकीर्तितः।।
हंसो हंसाकृतिर्ज्ञेयो हस्तो द्वादश विस्तृतः।
एकभूमिकया युक्तः पक्षपुच्छाद्यलंकृतः।।
घटः कलशरूपस्तु विस्तीर्णोऽष्टकरः स्मृतः।। इति।।२६।।

अधुना सर्वतोभद्रस्य लक्षणमाह—

**द्वारैर्युतश्चतुर्भिर्बहुशिखरो भवति सर्वतोभद्रः ।**
**बहुरुचिरचन्द्रशालः षड्विंशः पञ्चभौमश्च ॥२७॥**

'सर्वतोभद्र' नामक प्रासाद चारो दिशाओं में चार द्वारों से युत, अनेक शिखरों से शोभित, अनेक संख्यक सुन्दर चन्द्रशालाओं से शोभित, छब्बीस हाथ विस्तार वाला, चतुष्कोण और पाँच भूमियों से युत होता है।।२७।।

सर्वतोभद्रसंज्ञ: प्रासादश्चतुर्भिर्द्वारैर्युक्त:। चतसृष्वपि दिक्षु तस्मिन् द्वाराणि भवन्तीत्यर्थ:। बहुशिखरो भवति, बहूनि प्रभूतानि तस्मिन् शिखराणि भवन्ति। बहुरुचिरचन्द्रशाल:, बह्वीभि: प्रभूताभी रुचिराभि: सुशोभनाभिश्चन्द्रशालाभिर्युक्त:। षड्विंश:, षड्विंशतिर्हस्ता विस्तीर्ण:। विष्कम्भाद् अर्थादेव द्वापञ्चाशद्धस्तास्तस्यौच्च्यम्। पञ्चभौम: पञ्चभिर्भूमिकाभिर्युक्त:। चतुरस्र:। तथा च काश्यप:—

शिखरैर्बहुभिर्युक्तश्चतुर्द्वारविभूषित: ।
रुचिरैश्चन्द्रशालैश्च बहुभि: परिवारित:।।
चतुरस्र: पञ्चभौम: षड्विंशद्धस्तविस्तृत:।
सर्वतोभद्र इत्युक्त: प्रासादो दशपञ्चम:।। इति।।२७।।

अथ सिंहवृत्तचतुष्कोणषोडशाश्र्यष्टाश्रीणां लक्षणमाह—

**सिंहः सिंहाक्रान्तो द्वादशकोणोऽष्टहस्तविस्तीर्णः ।**
**चत्वारोऽञ्जनरूपाः पञ्चाण्डयुतस्तु चतुरस्रः ॥२८॥**

'सिंह' नामक प्रासाद सिंह की प्रतिमाओं से शोभित, द्वादशास्र और आठ हाथ विस्तार वाला होता है। शेष चार प्रासाद ( वृत्त, चतुष्कोण, षोडशाश्रि और अष्टाश्रि ) अपने नाम के समान ही आकार वाले और काले होते हैं अर्थात् इनके अन्दर अन्धकार रहता है।।२८।।

सिंह: सिंहाक्रान्त: सिंहालङ्कृत:। द्वादशकोणो द्वादशाश्रि:। अष्टहस्तो विस्तीर्ण:। अन्ये चत्वार: सर्व एव वृत्तचतुष्कोणषोडशाष्टाश्रय: संज्ञासदृशाकृतय:। वृत्त: परिवर्तुल:। चतुष्कोणश्चतुरस्र:। षोडशाश्रि: षोडशकोण:। अष्टाश्रिरष्टकोण:। एते अञ्जनरूपा अव्यक्तरूपा: सान्धकारा इत्यर्थ:। बाह्यप्राकाश्यं तेषु न प्रविशत्ययमर्थ:। देवप्रासादस्य सन्निकृष्टाश्चतसृष्वपि दिक्षु भित्ती: कृत्वा प्रासादस्य पश्चिमभागे द्वारं कार्यम्। ताश्च भित्तय ऊर्ध्वभागे तथा छेदनीया यथा प्रासादोत्पन्ना एव लक्ष्यन्ते, न पृथक्स्था:। तत्र बहिर्द्वारात् प्रविश्य प्रासादस्य वामभागेनागत्य पुरत: प्रासादस्य द्वारं कार्यम्। तत्र मणिमयी प्रतिमा तत्कान्त्या यत्र प्राकाश्यमुत्पद्यते। एते सर्व एवैकभूमिका: कार्या एकाण्डाश्च। चतुरस्र: पुन: पञ्चाण्डयुत: कार्य:। पञ्चभिरण्डै: संयुक्त:। तथा च काश्यप:—

सिंह: सिंहसमाक्रान्त: कोणैर्द्वादशभिर्युत:।
विष्कम्भादष्टहस्त: स्यादेका तस्य च भूमिका।।

वृत्तो वृत्ताकृति: कार्या: संज्ञातुल्यास्तथापरे।
सान्धकारास्तु सर्वे ते भूमिकैका: समावृता:।।
एकाण्डरूपिता सर्वे पञ्चभिश्चतुरस्रक:।। इति।।२८।।

अथ मयविश्वकर्मणोर्मतेन भूमिकाप्रमाणमाह—

**भूमिकाङ्गुलमानेन मयस्याष्टोत्तरं शतम्।**
**सार्द्धं हस्तत्रयं चैव कथितं विश्वकर्मणा ।।२९।।**

एक भूमि का प्रमाण मय के मतानुसार एक सौ आठ अंगुल और विश्वकर्मा के मतानुसार साढ़े तीन हाथ कहा गया है।।२९।।

मयस्य मतेनाष्टोत्तरशतमङ्गुलानां मानेन भूमिका भवति। तथा च मय:—

प्रासादभूमिकामानं शतमष्टोत्तरं स्मृतम्।
.................................................अङ्गुलानाम्।। इति।

विश्वकर्मणा सार्धं हस्तत्रयं भूमिकामानं कथितमुक्तम्। चतुरशीत्यङ्गुलानीत्यर्थ:। तथा च विश्वकर्म्मा—

चतुर्भिरधिकाशीतिरङ्गुलानां तु भूमिका।। इति।।२९।।

अत्रापि परमतेनैकवाक्यतां दर्शयितुमाह—

**प्राहुः स्थपतयश्चात्र मतमेकं विपश्चितः।**
**कपोतपालिसंयुक्ता न्यूना गच्छन्ति तुल्यताम् ।।३०।।**

बुद्धिमान् कारीगर मय और विश्वकर्मा—इन दोनों के मतों को एक ही कहते हैं। उनका कहना है कि विश्वकर्मा ने भूमि का प्रमाण कपोतपालिका को छोड़कर कहा है; अत: उसमें कपोतपालिका के प्रमाण चौबीस अंगुल जोड़ देने से मय के प्रमाणतुल्य ही विश्वकर्मा की भी भूमि का प्रमाण हो जाता है।।३०।।

अत्रास्मिन्नर्थे विपश्चित: पण्डिता: स्थपतयो वार्धकिन: प्रतिष्ठातन्त्रज्ञा मयविश्वकर्मणो-रेकमतं प्राहुरुक्तवन्त:। विश्वकर्मणो मतेन या न्यूना: प्रमाणहीना भूमयस्ता: कपोतपालिसंयुक्ता मयमतेन तुल्यतां गच्छन्ति समत्वं यान्ति। कपोतपालिग्रहणेन बहिर्निर्गतानि सिंहमुखानि काष्ठान्युच्यन्ते। तथा चोक्तम्—

कपोतपालिं ब्रुवते विटङ्कं च बहुश्रुता:।

तथा च तन्त्रान्तरे पठ्यते—

कपोतपालिरहितं मानं चतुरशीतिकम्।
भूमिकानां सह तया शतमष्टोत्तरं स्मृतम्।।
अङ्गुलानामत: साम्यं भूमिकासु प्रकीर्तितम्।

एवं तुल्यता भवतीति।।३०।।

अथोपसंहारार्थमाह—

**प्रासादलक्षणमिदं कथितं समासाद्**
**गर्गेण यद्विरचितं तदिहास्ति सर्वम्।**
**मन्वादिभिर्विरचितानि पृथूनि यानि**
**तत्संस्पृशन् प्रति मयात्र कृतोऽधिकारः ॥३१॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां प्रासादलक्षणं नाम षट्पञ्चाशत्तमोऽध्यायः ॥५६॥**

मैंने संक्षेप से यह प्रासादों का लक्षण कहा है; किन्तु गर्ग मुनि ने इस प्रकरण में जो कुछ कहा है, वे सभी विषय इसमें समाहित हैं। साथ ही मनु आदि ( वसिष्ठ, मय और नग्नजित् ) आचार्यों ने जो विस्तारपूर्वक कहे हैं, उनकी स्मृति के लिये मैंने यह अधिकार बनाया है।।३१।।

**इति 'विमला'हिन्दीटीकायां प्रासादलक्षणाध्यायः षट्पञ्चाशत्तमः ॥५६॥**

इदं मया प्रासादलक्षणं समासात् संक्षेपात् कथितमुक्तम्। गर्गेण मुनिना विरचितं कृतं तत्सर्वं निरवशेषमिहास्मिन्नस्ति विद्यते। यानि च पृथूनि विस्तीर्णानि मन्वादिभिर्मनुवसिष्ठ-मयनग्नजिद्भिर्विरचितानि कृतानि प्रासादलक्षणानि तानि प्रति मया द्वारमानाष्टभागोनेत्यादि-लक्षणलक्षितानि संस्पृशन्नत्राधिकारः कृतः। प्रासादलक्षणं कृतमित्यर्थः। अथवा तत्सं-स्पृशंस्तानि सर्वाणि लक्षणानि प्रतिसंस्पृशन् परामृशन् मयाधिकारः कृत इति।।३१।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ प्रासादलक्षणं नाम षट्पञ्चाशत्तमोऽध्यायः ॥५६॥**

# अथ वज्रलेपलक्षणाध्यायः

अथ वज्रलेपलक्षणं व्याख्यायते। तत्रादावेव वज्रलेपमाह—

**आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः ।**
**बीजानि शल्लकीनां धन्वनवल्को वचा चेति ॥१॥**

**एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च ।**
**अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥२॥**

**श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः ।**
**अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥३॥**

तेन्दू के कच्चे फल, कैथ के कच्चे फल, सेमल के फूल, शल्लकी ( सालई ) वृक्ष के बीज, धन्वन वृक्ष की छाल और वच—इन सबको एक द्रोणतुल्य जल में मिलाकर काढ़ा बनाते हुये जब अष्टमांश शेष रह जाय तब उसको उतार ले। बाद में उसमें श्रीवासक ( सरल ) वृक्ष का गोंद, बोल, गूगल, भिलावा, कुन्दरूक ( देवदारु वृक्ष का गोंद ), सर्ज ( सखुआ ) का गोंद, अलसी, बेल की गिरी—इन सबको पीसकर मिला देने पर 'वज्रलेप' नामक काढा बन जाता है।।१-३।।

तिन्दुकं तिन्दुकफलम्। आममपक्वम्। कपित्थकं कपित्थकफलमाममेव। शाल्मल्याः शाल्मलिवृक्षस्य च पुष्पम्। शल्लकीनां शल्लकीवृक्षाणां बीजानि। धन्वनवल्को धन्वन-वृक्षस्य वल्कस्त्वक्। वचा च। इत्येवंप्रकारः।

एतैर्द्रव्यैः सह सलिलद्रोणः क्वाथयितव्यः। द्रोणः पलशतद्वयं षट्पञ्चाशदधिकम्। यावदष्टभागावशेषो भवति द्वात्रिंशत् पलानि अवशिष्यन्त इत्यर्थः। ततोऽष्टभागावशेषोऽव-तार्योऽवतारणीयो ग्राह्य इत्यर्थः। अस्य चाष्टभागशेषस्यैतद्द्रव्यैर्वक्ष्यमाणैः कल्कश्चूर्णः समनुयोज्यो विधातव्यः। तच्चूर्णसंयुक्तः कार्य इत्यर्थः।

कैरित्याह—**श्रीवासकेति**। श्रीवासकः प्रसिद्धो वृक्षनिर्यासः। रसो बोलः। गुग्गुलुः प्रसिद्धः। भल्लातकः प्रसिद्ध एव। कुन्दुरूको देवदारुवृक्षनिर्यासः। सर्जरसः सर्जरसकवृक्ष-निर्यासः—एतैः तथा अतसी प्रसिद्धा, बिल्वं श्रीफलम्—एतैश्च युतः समवेतः। अयं कल्को वज्रलेपाख्यः, वज्रलेपेत्याख्या नाम यस्य।।१-३।।

अथास्य गुणानाह—

**प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु ।**
**सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥४॥**

गरम किये हुये वज्रलेप को देवप्रासाद, हवेली, वलभी, शिवलिङ्ग, देवप्रतिमा, भीत और कूप में यदि लगाया जाय तो यह एक करोड़ वर्ष तक नहीं छूटता है।।४।।

प्रासादो देवप्रासादः। हर्म्यम्, वलभी वातायनम्, लिङ्गं शिवलिङ्गम्, प्रतिमार्चा। एतासु तथा कुड्येषु भित्तिषु। कूपेषूदकोद्गारेषु। सन्तप्तोऽत्युष्णो दातव्यो देयः। वर्षसहस्रायुतस्थायी भवति, वर्षाणां सहस्रायुतं वर्षकोटिं तिष्ठतीत्यर्थः।।४।।

अथान्यद्वज्रलेपमाह—

**लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि ।**
**नागफलनिम्बतिन्दुकमदनफलमधूकमञ्जिष्ठाः ।।५।।**

**सर्जरसरसामलकानि चेति कल्कः कृतो द्वितीयोऽयम् ।**
**वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु ।।६।।**

पूर्व से सिद्ध किये गये क्वाथ में लाख, कुन्दरूक ( देवदारु वृक्ष का गोंद ), गूगल, घर के धुयें का जाला, कैथ का फल, बेल की गिरी, नागबला का फल, महुये का फल, मञ्जीठ, राल, बोल, आँवला—इन सबको पीस कर डाले तो प्रथम वज्रलेप के गुणों से युत पूर्वोक्त कामों के लिये ही एक दूसरा वज्रलेप तैयार हो जाता है।।५-६।।

लाक्षा प्रसिद्धा वृक्षनिर्यासः। कुन्दुरुर्देवदारुवृक्षनिर्यासः। गुग्गुलुः प्रसिद्धः। गृहधूमोऽगारधूमः श्यामेति प्रसिद्धः। कपित्थः कपित्थवृक्षफलम्। बिल्वमध्यम् एतानि, तथा नागफलम्। निम्बः प्रसिद्धः। तिन्दुकं तिन्दुकफलम्। केचिन्नागबलाफलतिन्दुकमदनफलेति पठन्ति। नागबलाफलं तिन्दुकफलं मदनफलं मधूकफलं मञ्जिष्ठा प्रसिद्धा।

सर्जरसः सर्जवृक्षनिर्यासः, रसो बोलः, आमलकं धात्रीफलम्—एतानि च। इत्येवं प्रकारो द्वितीयः कल्कः कृतो वज्राख्यो वज्रलेपसंज्ञः। प्रथमगुणैः पूर्वोक्तैर्गुणैरेतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्चेति, तथा सन्तप्तो दातव्य इति। अयमपि वज्रलेपस्तेष्वेव प्रागुक्तेषु कार्येषु प्रासादादिषु। स च वर्षसहस्रायुतं स्थायी भवति।।५-६।।

अन्यदप्याह—

**गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च ।**
**निम्बकपित्थरसैः सह वज्रतलो नाम कल्कोऽन्यः ।।७।।**

पूर्व में सिद्ध किये हुये काढ़े में गौ, भैंस, बकरा—इनका सींग; गदहे का बाल, भैंस का चमड़ा, गव्य ( गोबर ), नीम का फल, कैथ का फल, बोल—इन सबको पीसकर मिलाने पर पूर्वकथित गुणों से युत पूर्वोक्त कार्यों के लिये ही तीसरा लेप सिद्ध हो जाता है, इसका नाम 'वज्रतल' कहा गया है।।७।।

गोमहिषौ प्रसिद्धौ, अजश्छागः, एषां सर्वेषां विषाणानि शृङ्गाणि तैः, तथा खररोम्णा गर्दभरोमभिः। महिषचर्मणा गव्यैश्च निम्बकपित्थरसैः सह निम्बः कपित्थफलम्। रसो बोलः।

एतैः सहान्यः कल्कः प्राग्वत् कृतः। एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभाग-शेषश्चेत्यादि। वज्रतलो नाम अयमपि प्रथमगुणैस्तेष्वेव कार्येष्विति।।७।।

अन्यदप्याह—

**अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः ।**
**मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः ।।८।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां वज्रलेपलक्षणं नाम सप्तपञ्चाशत्तमोऽध्यायः ।।५७।।**

आठ भाग सीसा, दो भाग कांसा, एक भाग पीतल—इन सबको एक जगह गलाने से मयकथित 'वज्रसङ्घात' नामक चौथा लेप सिद्ध होता है।।८।।

**इति 'विमला'हिन्दीटीकायां वज्रलेपाध्यायः सप्तपञ्चाशत्तमः ।।५७।।**

अष्टौ भागाः सीसकस्य। कांसस्य द्वौ भागौ। रीतिकाभाग एकः। अयं योगो वज्र-सङ्घातो नाम। मयकथितो मयेनोक्तो विज्ञेयो ज्ञातव्यः। अयमपि प्रथमगुणैस्तेष्वेव कार्येष्विति। अत्र प्रमाणानुसारेण नामपरिकल्पनोक्ता। अन्ये सममात्राः कार्या इत्यागमः। तथा च मयः—

संगृह्याष्टौ सीसभागान् कांसस्य द्वौ तथांशकम्।
रीतिकायास्तु सन्तप्तो वज्राख्यः परिकीर्तितः।। इति।।८।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वज्रलेपलक्षणं नाम सप्तपञ्चाशत्तमोऽध्यायः ।।५७।।**

# अथ प्रतिमालक्षणाध्यायः

अथ प्रतिमालक्षणं व्याख्यायते। तत्रादावेव परमाणुप्रमाणार्थमाह—

**जालान्तरगे भानौ यदणुतरं दर्शनं रजो याति।**
**तद्विन्द्यात् परमाणुं प्रथमं तद्धि प्रमाणानाम्॥१॥**

जालान्तरगत सूर्यकिरण में जो धूलि दिखाई देती है, उसको 'परमाणु' जानना चाहिये। यह सब प्रमाणों में पहला प्रमाण होता है॥१॥

भानावादित्ये जालान्तरगे गवाक्षस्थलकमध्यवर्तिनि यद्रजो धूलिरणुतरं सूक्ष्मतरं दर्शनं याति दृष्टिपथमायाति तत् परमाणुं नाम प्रमाणं विन्द्याज्जानीयात्। हिर्यस्मादर्थे। प्रमाणानां सर्वेषां तत्प्रथममाद्यं प्रमाणं परमाणुसंज्ञम्॥१॥

अथ परमाणौ ज्ञातेऽङ्गुलप्रमाणज्ञानमाह—

**परमाणुरजो बालाग्रलिक्षयूकं यवोऽङ्गुलं चेति।**
**अष्टगुणानि यथोत्तरमङ्गुलमेकं भवति संख्या॥२॥**

आठ परमाणु का रज, आठ रज का बालाग्र, आठ बालाग्र की लिक्षा, आठ लिक्षा का यूक, आठ यूक का यव और आठ यव का एक अंगुल होता है तथा एक अंगुल की संख्या होती है॥२॥

एतानि परमाण्वादीनि यथोत्तरमष्टगुणान्यङ्गुलमेकं भवति। तद्यथा—अष्टभिः परमाणुभी रजो भवति। अष्टभी रजोभिर्बालाग्रम्, अष्टभिर्बालाग्रैर्लिक्षा, अष्टभिर्लिक्षाभिर्यूका, अष्टभिर्यूकाभिर्यवः, अष्टभिर्यवैरङ्गुलम्। एवं यथोत्तरं परमाण्वादीन्यष्टगुणान्यङ्गुलं संख्या भवति। तथा च—

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणानां परमाणुं प्रचक्षते॥
तस्माद्रजः कचाग्रं च लिक्षा यूका यवोऽङ्गुलम्।
क्रमादष्टगुणं ज्ञेयं जिनसंख्याङ्गुलैः करैः॥ इति॥२॥

अथ समस्तायाः प्रतिमायाः प्रमाणमाह—

**देवागारद्वारस्याष्टांशोनस्य यस्तृतीयोंऽशः।**
**तत्पिण्डिकाप्रमाणं प्रतिमा तद्द्विगुणपरिमाणा॥३॥**

देवालय के द्वार की अष्टमांशोन ऊँचाई की तिहाई, तुल्य पिण्डिका ( पीठिका ) और द्विगुणित पीठिकातुल्य प्रतिमा होती है॥३॥

देवागारे देवगृहे यद्द्वारं तस्य य उच्छ्रायस्तस्य योऽष्टांशोऽष्टभागस्तेन हीनस्य यः तृतीयोंऽशस्तृतीयभागः, तत्पिण्डिकाप्रमाणं पीठिकापरिमाणम्, तद्द्विगुणपरिमाणा पीठिकाद् द्विगुणप्रमाणा प्रतिमा च भवति।।३।।

अथ प्रतिमाया अवयवप्रमाणमाह—

**स्वैरङ्गुलप्रमाणैर्द्वादश विस्तीर्णमायतं च मुखम्।**
**नग्नजिता तु चतुर्दश दैर्घ्येण द्राविडं कथितम्।।४।।**

प्रतिमा की ऊँचाई को बारह भाग करके फिर प्रत्येक भाग के नव-नव भाग करे। इस तरह एक-एक अंगुल का भाग बन जायगा; क्योंकि समस्त प्रतिमायें अपने-अपने अंगुलप्रमाण से १०८ अंगुल की होती हैं। अपने अंगुलप्रमाण से प्रतिमा का मुख बारह अंगुल चौड़ा और चौदह अंगुल लम्बा बनाना चाहिये। यह द्रविड देश का मान कहा गया है।।४।।

यस्मात् काष्ठात् पाषाणादिकाद्वा प्रतिमा क्रियते तद्दैर्घ्यं पीठप्रमाणविवर्जितं द्वादशभागविभक्तं कृत्वा तत्रैको भागो नवधा कार्यः, सोऽङ्गुलसंज्ञा भवति। यस्मादष्टाधिकमङ्गुलशतं प्रतिमाप्रमाणं वक्ष्यति—**स्वैरङ्गुलप्रमाणैरिति।** प्रतिमायाः स्वैरात्मीयैरङ्गुलप्रमाणैर्मुखं वदनं द्वादशाङ्गुलानि विस्तीर्णं विपुलमायतं च दीर्घं कार्यम्। नग्नजिता मुनिना द्वादशाङ्गुलानि विस्तीर्णं मुखं कथितं दैर्घ्येण च चतुर्दशाङ्गुलानि। एतद् द्राविडं द्रविडदेशजं मानम्। तथा च नग्नजित्—

विस्तीर्णं द्वादश मुखं दैर्घ्येण च चतुर्दश।
अङ्गुलानि तथा कार्यं तन्मानं द्राविडं स्मृतम्।। इति।।४।।

अन्यदप्याह—

**नासाललाटचिबुकग्रीवाश्चतुराङ्गुलास्तथा कर्णौ।**
**द्वे अङ्गुले च हनुनी चिबुकं च द्व्यङ्गुलं विततम्।।५।।**

प्रतिमा की नासिका, ललाट, ठोढ़ी, गरदन और कान चार-चार अंगुल लम्बे तथा हनु और चिबुक ( ठोढ़ी ) दो-दो अंगुल विस्तार वाला होना चाहिये।।५।।

नासा चतुरङ्गुला दैर्घ्येण कार्या। ललाटं मुखपृष्ठं चतुरङ्गुलमेव। चिबुकं चतुरङ्गुलमेव। चिबुकग्रहणेन नासायाश्चतुरङ्गुलो भाग उच्यते। ग्रीवा चतुरङ्गुला दीर्घा, तथा कर्णौ श्रोत्रौ चतुरङ्गुलौ दीर्घौ। हनुनी द्वे द्वे अङ्गुले च विस्तृते। मुखगलसन्धी हनुनी, चिबुकं च द्व्यङ्गुलं विततं विस्तीर्णं कार्यम्। चिबुकशब्देनात्र मुखस्याधोभाग उच्यते।।५।।

अन्यदप्याह—

**अष्टाङ्गुलं ललाटं विस्ताराद् द्व्यङ्गुलात् परे शङ्खौ।**
**चतुरङ्गुलौ तु शङ्खौ कर्णौ तु द्व्यङ्गुलौ पृथुलौ।।६।।**

माथे की चौड़ाई आठ अंगुल, दोनों तरफ कनपटी की चौड़ाई दो-दो अंगुल और लम्बाई चार-चार अंगुल तथा दोनों कानों की चौड़ाई दो-दो अंगुल बनानी चाहिये।।६।।

ललाटं विस्तारादष्टाङ्गुलं कार्यम्, तस्मात् परे भागे उभयतो द्व्यङ्गुलप्रमाणौ शङ्खौ कार्यौ, ललाटात् परतः कार्यावित्यर्थः। शङ्खौ चतुरङ्गुलावधोभागौ दीर्घौ कार्यौ, यतः शङ्खाधो गण्डभाग उच्यते। कर्णौ तु द्व्यङ्गुलौ पृथुलौ विस्तीर्णौ कार्यौ।।६।।

अन्यदप्याह—

**कर्णोपान्तः कार्योऽर्धपञ्चमे भ्रूसमेन सूत्रेण।**
**कर्णस्त्रोतः सुकुमारकं च नेत्रप्रबन्धसमम्।।७।।**

नेत्र के प्रान्तभाग से भ्रू के समानान्तर सूत्र में साढे चार अंगुल पर कान का अग्रभाग बनाना चाहिये तथा कान के छेद और सुकुमारक ( कान के छेद के समीप का उन्नत मार्ग ) को नेत्र-प्रबन्ध ( प्रदूषिका ) के समान बनाना चाहिये।।७।।

अर्द्धपञ्चमे अर्धपञ्चममङ्गुलं यस्मिन् भागे। सार्धानि चत्वार्यङ्गुलानि नेत्रान्तादारभ्य तस्मिन् भ्रूसमेन सूत्रेण नेत्रमध्यगेन कर्णोपान्तः कार्यः। कर्णस्योपान्तः समीपः, कर्णाग्रमित्यर्थः। कर्णस्त्रोतः कर्णच्छिद्रं सुकुमारकं च कर्णस्त्रोतःसमीपे उन्नतो मार्गस्तन्नेत्रप्रबन्धसमम्। नेत्रप्रबन्धशब्देन प्रदूषिकोच्यते। तत्समं तत्तुल्यं कार्यम्। अङ्गुलप्रमाणमित्यर्थः।।७।।

अन्यदप्याह—

**चतुरङ्गुलं वसिष्ठः कथयति नेत्रान्तकर्णयोर्विवरम्।**
**अधरोऽङ्गुलप्रमाणस्तस्यार्धेनोत्तरोष्ठश्च ।।८।।**

वसिष्ठ मुनि कहते हैं कि आँख और कान का अन्तर चार अंगुल, नीचे का ओंठ एक अंगुल और ऊपर का आधा अंगुल बनाना चाहिये।।८।।

वसिष्ठमुनिर्नेत्रान्तकर्णयोर्विवरमन्तरं चतुरङ्गुलं कथयति। तथा च वसिष्ठः—

कर्णनेत्रान्तरं यच्च तद्विन्द्यात् चतुरङ्गुलम्।

अधरोष्ठोऽङ्गुलप्रमाणेन विस्तीर्णः कार्यः, उत्तरोष्ठश्च तस्यार्धेनाधरोष्ठस्यार्धेनार्धाङ्गुलविस्तीर्णः कार्यः।।८।।

अन्यदप्याह—

**अर्धाङ्गुला तु गोच्छा वक्त्रं चतुरङ्गुलायतं कार्यम्।**
**विपुलं तु सार्धमङ्गुलमव्यात्तं त्र्यङ्गुलं व्यात्तम्।।९।।**

आधा अंगुल विस्तार गोच्छा और चार अंगुल दैर्घ्य मुख बनाना चाहिये। साथ ही डेढ़ अंगुल विस्तार अव्यात्त ( अविस्तृत ) मुख और तीन अंगुल विस्तार व्यात्त ( नृसिंह आदि देवताओं का विस्तृत ) मुख बनाना चाहिये।।९।।

गोच्छा अर्धाङ्गुलविस्तीर्णा कार्या। वक्त्रं चतुरङ्गुलायतं कार्यम्। तथा सार्धमङ्गुलं विपुलं विस्तीर्णं कार्यम्, यदव्यात्तमविकसितम्, व्यात्तं विकसितं मर्त्यसिंहादेस्त्र्यङ्गुलं विस्तीर्णं कार्यम्।।९।।

अन्यदप्याह—

**द्व्यङ्गुलतुल्यौ नासापुटौ च नासा पुटाग्रतो ज्ञेया।**
**स्याद् द्व्यङ्गुलमुच्छ्रायश्चतुरङ्गुलमन्तरं चाक्ष्णोः ।।१०।।**

नासिका के दोनों पुट दो-दो अंगुल, पुटों के अग्रभाग से नासिका चार अंगुल, नासिका की ऊँचाई दो अंगुल और दोनों नेत्रों का अन्तर चार अंगुल जानना चाहिये।।१०।।

नासापुटौ द्व्यङ्गुलतुल्यौ द्व्यङ्गुलप्रमाणौ कार्यौ। तथा नासा पुटाग्रतो द्व्यङ्गुलतुल्यैव ज्ञेया ज्ञातव्या। नासाया द्व्यङ्गुलमुच्छ्राय औच्च्यं स्याद्भवेत्। अक्ष्णोर्नेत्रयोर्द्वयोर्मध्यं चतुरङ्गुल-प्रमाणं भवति। एतदनुक्तमपि ज्ञायते।।१०।।

अन्यदप्याह—

**द्व्यङ्गुलमितोऽक्षिकोशो द्वे नेत्रे तत्त्रिभागिका तारा।**
**दृक्तारा पञ्चांशो नेत्रविकाशोऽङ्गुलं भवति ।।११।।**

नेत्र का कोश दो-दो अंगुल, नेत्र के तृतीयांशसम तारा, नेत्र के पञ्चम अंश के बराबर दृक्तारा ( नेत्र और तारा का मध्यवर्ती भाग ) और नेत्रों का विकाश एक अंगुल होता है।।११।।

अक्षिकोशोऽक्षिपुटो द्व्यङ्गुलमितो द्व्यङ्गुलप्रमाणः। द्वे अङ्गुले नेत्रे नयने। तत्त्रिभागिका तारा। अङ्गुलद्वयत्रिभागप्रमाणा तारा नेत्रमध्ये कृष्णो भागः। दृक्तारा मध्यवर्तिनी कुमारी अङ्गुलद्वयपञ्चांशः पञ्चांशभागः। नेत्रविकाशो नयनवैपुल्यमङ्गुलं भवति।।११।।

अन्यदप्याह—

**पर्यन्तात् पर्यन्तं दश भ्रुवोऽर्धाङ्गुलं भ्रुवोर्लेखा।**
**भ्रूमध्यं द्व्यङ्गुलकं भ्रूर्दैर्घ्येणाङ्गुलचतुष्कम् ।।१२।।**

एक भौं के अन्तभाग से दूसरे भौं के अन्तभाग तक दश अंगुल, भौं की चौड़ाई आधा अंगुल, भौं के मध्यभाग दो अंगुल और प्रत्येक भौं की लम्बाई चार अंगुल बनानी चाहिये।।१२।।

भ्रुवोः पर्यन्तात् पर्यन्तं दशाङ्गुलानि प्रमाणम्। वामभ्रूपर्यन्ताद् दक्षिणभ्रूपर्यन्तं यावद् दशाङ्गुलानि। भ्रुवो लेखा भ्रूलेखा अर्धाङ्गुलं विस्तीर्णा। भ्रूमध्यं भ्रुवोरन्तरं द्व्यङ्गुलकं द्व्यङ्गुलप्रमाणविस्तीर्णं कार्यम्। भ्रूर्दैर्घ्येण भ्रूर्दीर्घत्वेनाङ्गुलचतुष्कं कार्यमिति।।१२।।

अन्यत्—

**कार्या तु केशरेखा भ्रूबन्धसमाङ्गुलार्धविस्तीर्णा।**
**नेत्रान्ते करवीरकमुपन्यसेदङ्गुलप्रमितम् ।।१३।।**

बत्तीस अंगुल लम्बा और चौदह अंगुल चौड़ा शिर बनाना चाहिये। चित्र में केवल बारह अंगुल शिर दिखाई देता है। शेष बीस अंगुल पिछला भाग नहीं दिखाई देता।।१३।।

केशरेखा ललाटपरिवृता च भ्रूबन्धसमा भ्रूबन्धतुल्या कार्या दशाङ्गुलप्रमाणा चेत्यर्थः। अङ्गुलार्धं विस्तीर्णा। नेत्रान्ते चक्षुष्पर्यन्ते। करवीरकं दूषिकेति प्रसिद्धम्। तदङ्गुलप्रमितमङ्गुलप्रमाणमुपन्यसेत् कारयेत्।।१३।।

अन्यदप्याह—

**द्वात्रिंशत् परिणाहाच्चतुर्दशायामतोऽङ्गुलानि शिरः।**
**द्वादश तु चित्रकर्मणि दृश्यन्ते विंशतिरदृश्याः ॥१४॥**

माथे पर भ्रूबन्ध के समान आधा अंगुल चौड़ी केशरेखा और नेत्र के अन्त में एक अंगुल तुल्य करवीरक ( दूषिका ) बनाना चाहिये।।१४।।

शिरो द्वात्रिंशदङ्गुलानि परिणाहात् कार्यम्। चतुर्दशाङ्गुलान्यायामतो विष्कम्भादित्यर्थः। चित्रकर्मणि द्वादशाङ्गुलानि दृश्यन्ते विंशतिरदृश्या।।१४।।

अथान्यत्—

**आस्यं सकेशनिचयं षोडश दैर्घ्येण नग्नजित्प्रोक्तम्।**
**ग्रीवा दश विस्तीर्णा परिणाहाद्विंशतिः सैका ॥१५॥**

नग्नजित् आचार्य ने केशरेखासहित मुख का विस्तार सोलह अंगुल, ग्रीवा का विस्तार दश अंगुल और लम्बाई इक्कीस अंगुल कहा है।।१५।।

नग्नजित्प्रोक्ते प्रतिमालक्षणे आस्यं मुखं सकेशनिचयं केशरेखया सहितं षोडशाङ्गुलानि। मुखं दीर्घं चतुर्दशाङ्गुलानि केशरेखा द्वे अङ्गुले, एवं षोडश। तथा च नग्नजित्—

द्व्यङ्गुला केशरेखैवं मुखं स्यात् षोडशाङ्गुलम्। इति।

ग्रीवा शिरोधरा दशाङ्गुलानि विस्तीर्णा कार्या। विंशतिः सैका एकविंशतिः परिणाहात्।।१५।।

अन्यदप्याह—

**कण्ठाद् द्वादश हृदयं हृदयान्नाभी च तत्प्रमाणेन।**
**नाभीमध्याद् मेढ्रान्तरं च तत्तुल्यमेवोक्तम् ॥१६॥**

कण्ठ के अधोभाग से हृदय तक, हृदय से नाभि तक और नाभि के मध्य से लिङ्ग के मध्य तक बारह अंगुल का अन्तर रखना चाहिये।।१६।।

कण्ठाधोभागादारभ्य हृदयं यावद् द्वादशाङ्गुलानि। हृदयात् प्रभृति नाभीं च यावत्तत्प्रमाणेन द्वादशाङ्गुलान्येव। नाभीमध्याद् मेढ्रान्तरं लिङ्गमध्यं च यावत् तत्तुल्यं तत्सममेवोक्तं कथितम्। द्वादशाङ्गुलानीत्यर्थः।।१६।।

अथान्यत्—

**ऊरू चाङ्गुलमानैश्चतुर्युता विंशतिस्तथा जङ्घे।**
**जानुकपिच्छे चतुरङ्गुले च पादौ च तत्तुल्यौ ॥१७॥**

ऊरु ( घुटनों का ऊपरी प्रदेश ) और जंघा ( जाँघ ) चौबीस-चौबीस अंगुल, जानु ( घुटने ) और कपिच्छ चार-चार अंगुल तथा पाँव की गाँठी से नीचे तक भी चार-चार अंगुल का बनाना चाहिये।।१७।।

ऊरू दीर्घा चाङ्गुलमानैश्चतुर्युता विंशतिः। तथा जङ्घे चतुर्विंशतिरेव दीर्घा। जानुकपिच्छे चतुरङ्गुले च चतुरङ्गुलप्रमाणे कार्ये, ये च लोके एक्कलके इति प्रसिद्धे। पादौ च तत्तुल्यौ तत्समौ गुल्फादारभ्याधोभागश्चतुरङ्गुलः कार्यः।।१७।।

अथान्यदप्याह—

**द्वादशदीर्घौ षट् पृथुतया च पादौ त्रिकायताङ्गुष्ठौ।**
**पञ्चाङ्गुलपरिणाहौ प्रदेशिनी त्र्यङ्गुलं दीर्घा ॥१८॥**

बारह अंगुल लम्बे और छः अंगुल चौड़े पाँव, पाँव के अँगूठे तीन अंगुल लम्बे और प्रदेशिनी ( अंगूठे के समीप की अंगुली ) तीन अंगुल लम्बी बनाना चाहिये।।१८।।

पादौ चरणौ पार्ष्ण्या आरभ्याङ्गुष्ठमूलं यावद् द्वादशाङ्गुलानि दीर्घौ कार्यौ, पृथुतया विस्तारेण षडङ्गुलानि। अङ्गुष्ठौ त्रिकायतौ त्रीण्यङ्गुलानि दीर्घौ कार्यौ। पञ्चाङ्गुलपरिणाहौ परिणाहात् पञ्चाङ्गुलानि कार्यौ। प्रदेशिन्यङ्गुष्ठसमीपवर्तिन्यङ्गुली त्रीण्यङ्गुलानि दीर्घा कार्या।

अन्यदप्याह—

**अष्टांशाष्टांशोनाः शेषाङ्गुल्यः क्रमेण कर्तव्याः।**
**सचतुर्थभागमङ्गुलमुत्सेधोऽङ्गुष्ठकस्योक्तः ॥१९॥**

प्रदेशिनी से अष्टांश-अष्टांश कम करके क्रम से शेष तीन अंगुलियाँ बनानी चाहिये। अंगूठे की ऊँचाई सवा अंगुल और शेष अंगुलियों की ऊँचाई उसी के अनुपात से कुछ-कुछ कम करके बनानी चाहिये।।१९।।

शेषास्तिस्रोऽङ्गुल्यः क्रमेण परिपाट्या अष्टांशेनाष्टांशेन ऊनाः कर्तव्यः, प्रदेशिनीतो मध्यमा अष्टांशोना कार्या। अङ्गुष्ठस्योत्सेध उच्छ्रायः सचतुर्भागमङ्गुलमुक्तः कथितः। शेषाङ्गुलीनामष्टांशाष्टांशोनानामङ्गुष्ठप्रमाणात् प्रमाणं कार्यम्।।१९।।

अन्यदप्याह—

**अङ्गुष्ठनखः कथितश्चतुर्थभागोनमङ्गुलं तज्ज्ञैः।**
**शेषनखानामर्धाङ्गुलं क्रमात् किञ्चिदूनं वा ॥२०॥**

प्रतिमा के लक्षणों को जानने वालों ने अंगूठे के नख की लम्बाई पौन अंगुल और शेष अंगुलियों की लम्बाई आधा अंगुल अथवा कुछ-कुछ कम करके बनाने का विधान बताया है, जिससे कि प्रतिमा सुन्दर दिखाई दे।।२०।।

तज्ज्ञै: प्रतिमालक्षणज्ञैरङ्गुष्ठनखश्चतुर्थभागोनमङ्गुलं कथित:। शेषानामङ्गुलीनखानामर्धाङ्गुलं प्रमाणम्। अथवा क्रमात् परिपाट्या किञ्चिदूनमर्धाङ्गुलप्रमाणं कार्यं यथा शोभा जायत इति।।२०।।

अन्यदप्याह—

**जङ्घाग्रे परिणाहश्चतुर्दशोक्तस्तु विस्तरात् पञ्च।**
**मध्ये तु सप्त विपुला परिणाहात् त्रिगुणिताः सप्त ॥२१॥**

जाँघ के आगे के भाग की मोटाई चौदह अंगुल और विस्तार पाँच अंगुल तथा मध्य भाग का विस्तार आठ अंगुल और मोटाई इक्कीस अंगुल होती है।।२१।।

जङ्घाग्रे जङ्घापर्यन्ते चतुर्दशाङ्गुलानि परिणाह उक्त: कथित:। विस्तरात् पञ्चाङ्गुलानि। जङ्घामध्ये मध्यभागे सप्ताङ्गुलानि विपुला विस्तीर्णा। परिणाहात् सप्त त्रिगुणिता:। एकविंशत्यङ्गुलानीत्यर्थ:।।२१।।

अन्यदप्याह—

**अष्टौ तु जानुमध्ये वैपुल्यं त्र्यष्टकं तु परिणाहः।**
**विपुलौ चतुर्दशोरू मध्ये द्विगुणश्च तत्परिधिः ॥२२॥**

घुटने के मध्य भाग ~ विस्तार आठ अंगुल, मोटाई चौबीस अंगुल और ऊरु के मध्य का विस्तार चौद९ अंगुल एवं परिधि अट्ठाईस अंगुल होती है।।२२।।

जानुमध्ये अष्टावङ्गुलानि वैपुल्यं पृथुत्वम्। त्र्यष्टकं चतुर्विंशत्यङ्गुलानि परिणाह:, ऊरू मध्ये मध्यभागे चतुर्दशाङ्गुलानि विपुलौ विस्तीर्णौ। तत्परिधिस्तत्परिणाहस्तयो: पारिमाण्डल्यं द्विगुणोऽष्टाविंशत्यङ्गुलानि भवन्ति।।२२।।

अन्यदप्याह—

**कटिरष्टादश विपुला चत्वारिंशच्चतुर्युता परिधौ।**
**अङ्गुलमेकं नाभी वेधेन तथा प्रमाणेन ॥२३॥**

कमर की चौड़ाई अट्ठारह अंगुल और परिधि चौवालीस अंगुल होती है तथा नाभिभाग का विस्तार और वेध एक-एक अंगुल का होता है।।२३।।

कटिरष्टादशाङ्गुलानि विपुला विस्तीर्णा। परिधौ परिणाहे चत्वारिंशच्चतुर्युता चतुश्चत्वारिंशदङ्गुलानि। नाभी वेधेन गाम्भीर्येण तथा प्रमाणेन वैपुल्येन चाङ्गुलमेकं भवति।।२३।।

अन्यदप्याह—

**चत्वारिंशद्द्वियुता नाभीमध्येन मध्यपरिणाहः।**
**स्तनयोः षोडश चान्तरमूर्ध्वं कक्ष्ये षडङ्गुलिके ॥२४॥**

नाभिस्थान की मोटाई बयालीस अंगुल, दोनों स्तनों का अन्तर सोलह अंगुल और स्तनों के ऊपर बगल में छः-छः अंगुल के कोख होते हैं।।२४।।

नाभीमध्येन मध्यभागे परिणाहश्चत्वारिंशद्द्वियुता द्वाचत्वारिंशदङ्गुलानि। स्तनयोर्द्वयोरन्तरं मध्यं षोडशाङ्गुलानि। स्तनयोरूर्ध्वं तिर्यक् कृत्वा षडङ्गुलिके षडङ्गुलप्रमाणे कक्ष्ये कार्ये।

अन्यदप्याह—

**अष्टावंसौ द्वादश बाहू कार्यौ तथा प्रबाहू च।**
**बाहू षड्विस्तीर्णौ प्रतिबाहू त्वङ्गुलचतुष्कम्॥२५॥**

गरदन से लेकर दोनों कन्धों की लम्बाई आठ अंगुल तथा बारह अंगुल बाहु और प्रबाहु ( बाहु के समीपवर्ती बाहु ) बनानी चाहिये। बाहु का विस्तार छः अंगुल और प्रबाहु का विस्तार चार अंगुल बनाना चाहिये।।२५।।

अंसौ स्कन्धौ ग्रीवापार्श्वादंसान्तं यावदष्टाङ्गुलं विस्तीर्णं कार्यम्। अंससमीपवर्तिनौ बाहू द्वादशाङ्गुलानि दीर्घौ कार्यौ। बाहुसमीपवर्तिनौ प्रतिबाहू तावेव द्वादशाङ्गुलानि दीर्घौ कार्यौ। बाहू षडङ्गुलानि विस्तीर्णौ, प्रतिबाहू त्वङ्गुलचतुष्कं विस्तीर्णौ।।२५।।

अन्यदप्याह—

**षोडश बाहू मूले परिणाहाद् द्वादशाग्रहस्ते च।**
**विस्तारेण करतलं षडङ्गुलं सप्त दैर्घ्येण॥२६॥**

बाहुमूल की मोटाई सोलह अंगुल, प्रकोष्ठ की मोटाई बारह अंगुल, हथेली की चौड़ाई छः अंगुल और लम्बाई सात अंगुल बनानी चाहिये।।२६।।

बाहू मूले षोडशाङ्गुलानि परिणाहात्। अग्रहस्ते च प्रकोष्ठप्रदेशे द्वादशाङ्गुलानि परिणाहः। करतलं हस्ततलं विस्तारेण षडङ्गुलं कार्यं दैर्घ्येणायामेन सप्ताङ्गुलानि।।२६।।

अन्यदप्याह—

**पञ्चाङ्गुलानि मध्या प्रदेशिनी मध्यपर्वदलहीना।**
**अनया तुल्या चानामिका कनिष्ठा तु पर्वोना॥२७॥**

मध्यमा पाँच अंगुल, प्रदेशिनी और अनामिका पर्व के आधे से रहित पाँच अंगुल और कनिष्ठिका एक पर्व से रहित पाँच अंगुल लम्बी होती है।।२७।।

अङ्गुष्ठादनन्तरं या अङ्गुली सा मध्यमायाः पर्वदलेन पर्वणोऽर्धेन हीना कार्या। सार्धानि चत्वार्यङ्गुलानि पूर्वरेखायाः प्रभृतिद्वितीयां रेखां यावत् पर्वोच्यते। अनया प्रदेशिन्या चानामिका कार्या। तस्या अनामिकायाः पर्वोना कनिष्ठिका कार्या।।२७।।

अन्यदप्याह—

**पर्वद्वयमङ्गुष्ठः शेषाङ्गुल्यस्त्रिभिस्त्रिभिः कार्याः।**
**नखपरिमाणं कार्यं सर्वासां पर्वणोऽर्धेन॥२८॥**

अंगूठे में दो पर्व एवं शेष चार अंगुलियों में तीन-तीन पर्व बनाने चाहिये तथा अपने-अपने पर्व के आधे के तुल्य नखों का परिमाण बनाना चाहिये।।२८।।

अङ्गुष्ठः पर्वद्वयं कार्यः। शेषाः परिशिष्टा अङ्गुल्यस्त्रिभिस्त्रिभिः पर्वभिः कार्याः। सर्वासामङ्गुलीनां पर्वणोऽर्धेन नखपरिमाणं कार्यम्।।२८।।

एवमवयवलक्षणमभिधायाधुना स्वरूपप्रदर्शनार्थमाह—

**देशानुरूपभूषणवेषालङ्कारमूर्तिभिः कार्या।**
**प्रतिमा लक्षणयुक्ता सन्निहिता वृद्धिदा भवति।।२९।।**

प्रतिमा के भूषण, वेष, अलंकार और मूर्ति अपने-अपने देश के अनुरूप बनाने चाहिये; क्योंकि शुभ लक्षणों से युत प्रतिमा उसका निर्माण करने वाले की सदा उन्नति करती है।।२९।।

देशानुरूपैर्देशसदृशैर्भूषणैराभरणैर्हारकेयूरकटकादिभिः। वेषालङ्कारैः शरीरालङ्कारैः। यस्मिन् देशे यादृशाः पुरुषाणां वेषास्तादृशैः, मूर्तिभिर्देहैः स्थूलसूक्ष्मावयवत्वेन देशानुरूपेणैव कार्या। यतः प्रतिमा लक्षणैः शास्त्रोक्तैर्युक्ता सन्निहिता सर्वकालं वृद्धिदा भवति, कर्तुर्वृद्धिं ददाति। तथा च काश्यपः—

द्वादशाङ्गुलकं वक्त्रं ललाटं चतुरङ्गुलम्।
नासा ग्रीवा तु कर्तव्या तुल्या चैतत्प्रमाणतः।।
शङ्खान्तरं ललाटस्य ज्ञेयमष्टाङ्गुलं पृथु।
हनुद्वयं तु चिबुकमङ्गुलद्वितयं स्मृतम्।।
चतुरङ्गुलिकौ कर्णौ भ्रुवावेव तथा स्मृते।
द्व्यङ्गुलौ पृथुलौ कर्णौ भ्रूमध्यं तत्प्रमाणतः।।
कर्णनेत्रान्तरं कुर्यात् तत्सार्धं चतुरङ्गुलम्।
अधरोऽङ्गुलमानं तु तदर्धेनोत्तरं स्मृतम्।।
चतुरङ्गुलकं वक्त्रं नासाग्रं द्व्यङ्गुलं स्मृतम्।
नेत्रे द्व्यङ्गुलके दीर्घे तत्त्रिभागेन तारकः।।
दृक्तारा पञ्चमांशेन दूषिकाङ्गुलसम्मिता।
द्व्यङ्गुलं चाक्षिपुटकं तथा नासापुटौ स्मृतौ।।
कर्णस्रोतोऽङ्गुलमितं सुकुमारं तथैव च।
गोच्छा चाङ्गुलिका कार्या तत्समा केशरेखिका।।
द्व्यङ्गुलौ तु स्मृतौ शङ्खावायतौ चतुरङ्गुलौ।
चतुर्दशाङ्गुलः शीर्षो द्वात्रिंशत् परिणाहतः।।
एकविंशत् स्मृता ग्रीवा विस्तारात्स्याद्दशाङ्गुला।
कण्ठाच्च हृदयं नाभीं मेढ्रं तद्द्वादशाङ्गुलम्।।
ऊरू जङ्घे चतुर्विंशा जानुनी चतुरङ्गुले।
द्वादशाङ्गुलिकौ पादौ विस्तारात्तु षडङ्गुलौ।।

गुल्फादधोभागगतं चतुरङ्गुलमुन्नतम्।
अङ्गुष्ठं त्र्यङ्गुलं दीर्घं पञ्चैव परिणाहतः।।
शेषाः पादानुसारेण परिमाणं प्रकल्पयेत्।
जङ्घाग्रे परिधिर्ज्ञेयो ह्यङ्गुलानि चतुर्दश।।
ऊरू तद्द्विगुणौ प्रोक्तौ कटिस्तत्त्रिगुणा स्मृता।
अङ्गुलं तु भवेन्नाभी वेधगाम्भीर्ययोरपि।।
नाभीमध्ये परीणाहश्चत्वारिंशद्द्विसंयुतः।
षोडश स्तनयोर्मध्यं कक्ष्ये ऊर्ध्वं षडङ्गुले।।
अष्टाङ्गुलौ स्मृतौ स्कन्धौ बाहू विंशच्चतुर्युतौ।
बाहू मूले षोडश स्याद्धस्ताग्रे द्वादश स्मृताः।।
षडङ्गुलं हस्ततलं सप्त दैर्घ्येण च स्मृतम्।
पञ्चाङ्गुला भवेद् मध्या तर्जन्यर्धाङ्गुलोनिता।।
अनामिका च तत्तुल्या कनिष्ठा चाङ्गुलोनिता।
सुरूपास्ताश्च कर्तव्या द्विपर्वाङ्गुष्ठिका स्मृता।।
त्रिपर्वाङ्गुलयः शेषा नखाः पर्वार्धविस्तृताः।
देशवेषयुतान् हस्तान् सौम्यरूपांश्च कारयेत्।।
स्वरूपा लक्षणोपेता प्रतिमा वृद्धिदा भवेत्।। इति।।२९।।

अधुना प्रतिमानां विशेषलक्षणमाह—

**दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम्।**
**द्वादशहान्या शेषाः प्रवरसमन्यूनपरिमाणाः ।।३०।।**

दशरथतनय राम और विरोचन के तनय बलि की प्रतिमा एक सौ बीस अंगुल लम्बी बनानी चाहिये। शेष समस्त प्रतिमायें एक सौ आठ अंगुल लम्बी उत्तम, छियानबे अंगुल लम्बी मध्यम और चौरासी अंगुल लम्बी अधम होती हैं।।३०।।

दशरथतनयो दशरथपुत्रो रामः, वैरोचनिर्विरोचनपुत्रश्च बलिः। शतं विंशं विंशत्यधिकमङ्गुलशतं कार्यमित्यर्थः। शेषा अन्याः प्रतिमा द्वादशहान्या द्वादशकद्वादशकहीनत्वेन प्रवरसमन्यूनपरिमाणा भवन्ति। विंशत्यधिकादङ्गुलशताद् द्वादशाङ्गुलान्यपास्याष्टाधिकं शतमङ्गुलानां प्रतिमा प्रधाना भवति। ततोऽपि द्वादशकमपास्य षण्णवत्यङ्गुलसमा मध्यमा भवति। ततोऽपि द्वादशकमपास्य चतुरशीत्यङ्गुला न्यूनपरिमाणा प्रतिमा भवति। 'स्वैरङ्गुलप्रमाणैर्द्वादशविस्तीर्णमायतं च मुखम्' इत्यनेन न्यायेन या प्रतिमोक्ता साष्टाङ्गुलं शतमधिकं भवति, यदत्रोक्तम्—'दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम्' इत्यस्मिन् द्वादशानामङ्गुलानामधिकानां तैरधिकेन परिमाणः कार्यः सर्वावयवानाम्। एवं हीनत्वेऽप्यनुपात एवेत्यनुक्तं ज्ञायत इति।।३०।।

अधुना भगवतो विष्णोः स्वरूपकथनमाह—

**कार्योऽष्टभुजो भगवांश्चतुर्भुजो द्विभुज एव वा विष्णुः ।**
**श्रीवत्साङ्कितवक्षाः कौस्तुभमणिभूषितोरस्कः ॥३१॥**

**अतसीकुसुमश्यामः पीताम्बरनिवसनः प्रसन्नमुखः ।**
**कुण्डलकिरीटधारी पीनगलोरःस्थलांसभुजः ॥३२॥**

**खड्गगदाशरपाणिर्दक्षिणतः शान्तिदश्चतुर्थकरः ।**
**वामकरेषु च कार्मुकखेटकचक्राणि शङ्खश्च ॥३३॥**

**अथ च चतुर्भुजमिच्छति शान्तिद एको गदाधरश्चान्यः ।**
**दक्षिणपार्श्वे त्वेवं वामे शङ्खश्च चक्रं च ॥३४॥**

**द्विभुजस्य तु शान्तिकरो दक्षिणहस्तोऽपरश्च शङ्खधरः ।**
**एवं विष्णोः प्रतिमा कर्तव्या भूतिमिच्छद्भिः ॥३५॥**

विष्णु की प्रतिमा अष्टभुज, चतुर्भुज या द्विभुज बनानी चाहिये। उनके वक्षःस्थल को श्रीवत्सचिह्न और कौस्तुभ मणि से शोभित करना चाहिये। अतसी-पुष्प के समान श्याम वर्ण, पीताम्बर पहनी हुई, प्रसन्न मुख, पुष्ट कण्ठ, वक्षःस्थल, कन्धा और भुजा वाली, दाहिने तीन हाथों में खड्ग, गदा और शर धारण की हुई, चौथा हाथ अभय मुद्रा से युत, बाईं तरफ के चार हाथों से धनुष, ढाल, चक्र और शंख धारण की हुई अष्टभुज विष्णु की प्रतिमा बनानी चाहिये।

चतुर्भुज विष्णु की प्रतिमा बनानी हो तो दाहिने तरफ के एक हाथ में अभय मुद्रायुत, दूसरे में गदा धारण की हुई, बाई तरफ के एक हाथ में शंख और दूसरे में चक्र धारण की हुई मूर्ति बनानी चाहिये।

द्विभुज प्रतिमा बनानी हो तो दाहिने हाथ में अभय मुद्रा और बाँये में शंख धारण की हुई मूर्ति बनानी चाहिये। ऐश्वर्य को चाहने वाले मनुष्य को इसी तरह विष्णु की प्रतिमा बनानी चाहिये।।३१-३५।।

**कार्योऽष्टभुजो भगवानिति** । भगवान् विष्णुर्नारायणोऽष्टभुजोऽष्टहस्तः कार्यः, चतुर्भुजो द्विभुज एव वा कार्यः। श्रीवत्साङ्कितवक्षाः। श्रीवत्सेन रोमावर्तेनाङ्कितं चिह्नितं वक्ष उरो यस्य, तथा कौस्तुभाख्येन मणिना भूषितमलङ्कृतमुरो वक्षो यस्य।

अतसीकुसुमवदतसीपुष्पवत् श्यामः। पीतान्यम्बराणि वसनं परिधानं यस्य। प्रसन्नमुखः सौम्यवदनः। कुण्डलं कर्णाभरणं किरीटं मुकुटं तद्धारणं शीलमस्य। पीनः पीवरो गलः कण्ठो यस्य। मांसल इत्यर्थः। तथा पीनोरःस्थलः। पीनांसः पीनस्कन्धः। पीनभुजः पीनबाहूः।

दक्षिणतो दक्षिणभागे अष्टभुजस्य ये चत्वारः पाणयो हस्तास्तेष्वेकस्मिन् खड्गो नन्दकः। द्वितीये गदा कौमोदकी। तृतीये शरः। चतुर्थे शान्तिदः। द्रष्टुरभिमुख ऊर्ध्वाङ्गुलिः

शान्तिदः करः। वामकरेषु वामहस्तेषु च कार्मुकं धनुः शार्ङ्गम्। खेटकं फरः। चक्रं सुदर्शनम्। शङ्खश्च पाञ्चजन्यः।

अथशब्दो विकल्पे। तुशब्दो विशेषद्योतकः। यदि चतुर्भुजं कर्तुमिच्छति तदा दक्षिण-पार्श्वे भुजद्वये एकः शान्तिदः करः। द्वितीयो गदाधरः। वामपार्श्वे भुजद्वये एकस्मिन् शङ्खो द्वितीये चक्रम्।

द्विभुजस्य विष्णोर्दक्षिणहस्तः शान्तिदः। अपरो वामः शङ्खधरः। एवमनेन प्रकारेण भूतिमिच्छद्भिः समृद्धिमभिलषद्भिर्विष्णोर्नारायणस्य प्रतिमाऽर्चा कार्या।।३१-३५।।

अथ हलधरस्य लक्षणमाह—

**बलदेवो हलपाणिर्मदविभ्रमलोचनश्च कर्तव्यः।**
**बिभ्रत् कुण्डलमेकं शङ्खेन्दुमृणालगौरतनुः ॥३६॥**

बलदेव की प्रतिमा के एक हाथ में हल धारण कराना चाहिये। मद से चलायमान नेत्र बनाना चाहिये। उसके एक कान में कुण्डल धारण कराना चाहिये तथा प्रतिमा को शंख, चन्द्र या मृणाल के समान सफेद वर्ण वाला बनाना चाहिये।।३६।।

बलदेवो हलधरो हलपाणिर्लाङ्गूलहस्तः। मदविभ्रमलोचनो मदिरापानेन यो मदस्तेन विभ्रमे चलिते लोचने नयने यस्य स तथाभूतः कर्तव्यः। एवं कुण्डलं कर्णाभरणं विभ्रद् धारयन्। शङ्खेन्दुमृणालगौरतनुः, शङ्खः प्रसिद्धः, इन्दुश्चन्द्रः। मृणालो विसम्, तद्वद्गौरी श्वेता तनुर्यस्य स तथाभूतः।।३६।।

अथैकानंशाया लक्षणमाह—

**एकानंशा कार्या देवी बलदेवकृष्णयोर्मध्ये।**
**कटिसंस्थितवामकरा सरोजमितरेण चोद्वहती ॥३७॥**

**कार्या चतुर्भुजा या वामकराभ्यां सपुस्तकं कमलम्।**
**द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रं च ॥३८॥**

**वामेऽथाष्टभुजायाः कमण्डलुश्चापमम्बुजं शास्त्रम्।**
**वरशरदर्पणयुक्ताः सव्यभुजाः साक्षसूत्राश्च ॥३९॥**

बलदेव और कृष्ण की प्रतिमा के मध्य में 'एकानंशा' नाम की देवी की प्रतिमा बनानी चाहिये। उसका बाँया हाथ उसके कमर पर रखना चाहिये और दाहिने हाथ में कमल धारण कराना चाहिये। चतुर्भुजा एकानंशा देवी के बाईं तरफ एक हाथ में पुस्तक और दूसरे में कमल तथा दाईं तरफ एक हाथ में वर देने वाली मुद्रा और दूसरे में माला धारण कराना चाहिये। अष्टभुजा एकानंशा देवी की मूर्ति के बायें चार हाथों में क्रम से कमण्डलु, धनुष, कमल और पुस्तक तथा दाहिने चार हाथों में क्रम से वर देने वाली मुद्रा, बाण, दर्पण और अक्षसूत्र धारण कराना चाहिये।।३७-३९।।

**एकानंशेति** । बलदेवकृष्णयोर्हलधरवासुदेवयोर्मध्ये अन्तरे एकानंशाभिधाना देवी देवता कार्या विधेया। कीदृशी? कटिसंस्थितवामकरा कटिसंस्थितो वामकरो वामहस्तो यस्याः। इतरेण दक्षिणे सरोजं पद्ममुद्वहती धारयन्ती कार्या—इति।

अथ चतुर्भुजा क्रियते तदा तस्या वामकरयोरेकस्मिन् पुस्तकं द्वितीये कमलं पद्मम्। दक्षिणभागे द्वयोः करयोरेकस्मिन्नर्थिषु वरदो द्वितीयेऽक्षसूत्रम्। उत्तानोऽधोऽङ्गुलिर्हस्तो वरदः।

**वामेऽथाष्टभुजाया इति** । अथाऽष्टभुजा क्रियते तदा तस्य वामहस्तचतुष्के एकस्मिन् कमण्डलुः। द्वितीये चापं धनुः। तृतीये अम्बुजं पद्मम्। चतुर्थे शास्त्रं पुस्तकम्। सव्ये दक्षिणभागे एको हस्तो वरदः। द्वितीये शरः। तृतीये दर्पणमादर्शः। चतुर्थे अक्षसूत्रमिति।।३७-३९।।

अथ शाम्बप्रद्युम्नलक्षणमाह—

**शाम्बश्च गदाहस्तः प्रद्युम्नश्चापभृत् सुरूपश्च ।**
**अनयोः स्त्रियौ च कार्ये खेटकनिस्त्रिंशधारिण्यौ ॥४०॥**

शाम्ब की प्रतिमा को गदा और प्रद्युम्न की प्रतिमा को धनुष धारण कराना चाहिये। इन दोनों प्रतिमाओं को द्विभुज तथा सुन्दर बनाना चाहिये तथा इन दोनों के ही स्त्रियों की भी प्रतिमा बनानी चाहिये, जिनके हाथों में खेटक ( फर ) और खड्ग धारण कराना चाहिये।।४०।।

शाम्बो द्विभुजो गदाहस्तश्च कार्यः। प्रद्युम्नः कामदेवश्चापभृद्धनुः शरहस्तः। सुरूपः शोभनरूपश्च। अनयोर्द्वयोः शाम्बप्रद्युम्नयोः स्त्रियौ कार्ये। कीदृश्यौ? खेटकनिस्त्रिंशधारिण्यौ, खेटकः फरः, निस्त्रिंशः खड्गः, तौ धारयन्त्यौ।।४०।।

अथ ब्रह्मणः कुमारस्य च लक्षणमाह—

**ब्रह्मा कमण्डलुकरश्चतुर्मुखः पङ्कजासनस्थश्च ।**
**स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च ॥४१॥**

ब्रह्मा की मूर्ति के एक हाथ में कमण्डलु धारण कराकर उसको चार मुख वाला बनाना चाहिये और उसे कमलपुष्प के आसन पर बैठाना चाहिये। कार्तिकेय को बालक के स्वरूप का बनाना चाहिये एवं उनके हाथ में शक्ति ( वर्छी ) और मयूरयुक्त ध्वजा धारण कराना चाहिये।।४१।।

ब्रह्मा पितामहः कमण्डलुकरः कमण्डलुहस्तश्चतुर्मुखश्चतुर्वक्त्रश्च, पङ्कजासनस्थश्च पङ्कजासने पद्मासने स्थितः। स्कन्दः कार्तिकेयः कुमाररूपो बालरूपः। शक्तिधरः शक्तिमायुधविशेषं धारयति। बर्हिकेतुर्मयूरध्वजः।।४१।।

अथेन्द्रलक्षणमाह—

**शुक्लश्चतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्वम् ।**
**तिर्यग् ललाटसंस्थं तृतीयमपि लोचनं चिह्नम् ॥४२॥**

इन्द्र के हाथी ( ऐरावत ) की प्रतिमा सफेद और चार दाँतों से युत बनानी चाहिये तथा इन्द्र की प्रतिमा के हाथ में वज्र धारण कराना चाहिये और ललाट के मध्य में तिरछा तीसरा नेत्र बनाना चाहिये।।४२।।

महेन्द्रस्य द्विपो हस्ती ऐरावताख्य: शुक्ल: श्वेतवर्ण:। चतुर्विषाणश्चतुर्दन्त: स च कार्य:। वज्रपाणित्वं वज्रमायुधविशेष: कुलिशाख्य: स पाणौ यस्य स वज्रपाणिस्तस्य भावो वज्रपाणित्वम्। तृतीयं लोचनं नेत्रं तिर्यग् ललाटसंस्थं तिर्यक् कृत्वा ललाटे स्थितं चिह्नमपि कार्यम्।।४२।।

अथ भगवतो महेश्वरस्य लक्षणमाह—

**शम्भोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमपि चोर्ध्वम्।**
**शूलं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम् ।।४३।।**

शिव जी की प्रतिमा के मस्तक पर चन्द्रकला बनानी चाहिये, उनकी ध्वजा में वृष का चिह्न बनाना चाहिये। उनके ललाट में खड़ा तीसरा नेत्र बनाना चाहिये। उनके एक हाथ में त्रिशूल और दूसरे में पिनाक नामक धनुष धारण कराना चाहिये अथवा उनकी बाईं तरफ आधे भाग में पार्वती की प्रतिमा बनानी चाहिये।।४३।।

शम्भोर्महेश्वरस्य शिरसि मूर्धनि कला चन्द्रकला कार्या। वृषध्वज: वृषो दान्त: स एव ध्वज: चिह्नं यस्य। ऊर्ध्वमूर्ध्वस्थितं तृतीयमपि अक्षि नेत्रं कार्यम्। शूलं त्रिशूलमेकस्मिन् हस्ते। धनु: चापं तदेव पिनाकसंज्ञमन्यस्मिन्। गिरिसुता गौरी वामेऽर्धे वा कार्या। अर्धगौरीश्वर इत्यर्थ:।।४३।।

अथ बुद्धस्य लक्षणमाह—

**पद्माङ्कितकरचरणः प्रसन्नमूर्तिः सुनीचकेशश्च।**
**पद्मासनोपविष्टः पितेव जगतो भवति बुद्धः ।।४४।।**

बुद्ध की प्रतिमा के हाथ एवं पाँव में कमल का चिह्न, प्रसन्नमुख, बहुत छोटे-छोटे शिर के बालों से युत, पद्मासन से बैठी हुई और संसार के पिता के समान दिखाई देने वाली बनानी चाहिये।।४४।।

बुद्ध: पद्माङ्कितकरचरण: कार्य:। करौ हस्तौ चरणौ पादौ पद्मेन कमलेनाङ्कितौ चिह्नितौ कृताभी रेखाभिरित्यर्थ:। प्रसन्नमूर्ति: सौम्यदेह: प्रसादपर:। सुनीचकेशश्च सुनीचा अत्यल्पा: केशा मूर्धजा यस्य। केचित् सुनीतकेशश्चेति पठन्ति। सुनीता अतिनियमिता:। पद्मासने कमलासने उपविष्ट: स्थित:। पितेव जगत:, जगतो विश्वस्य पितेव जनक इति। क्षान्तिशील इत्यर्थ:।।४४।।

अथार्हतां देवस्य लक्षमणमाह—

**आजानुलम्बबाहुः श्रीवत्साङ्कः प्रशान्तमूर्तिश्च।**
**दिग्वासास्तरुणो रूपवांश्च कार्योऽर्हतां देवः ।।४५।।**

जानु तक लम्बी भुजाओं से युत, श्रीवत्स-चिह्न से शोभित, शान्त, दिगम्बर, तरुण और सुन्दर जिन की प्रतिमा बनानी चाहिये।।४५।।

अर्हतां देवो जिन आजानुलम्बबाहुः कार्यः। जानुसम्प्राप्तहस्तः। श्रीवत्साङ्कः श्रीवत्स-मङ्कं चिह्नविशेषो यस्य सः। प्रशान्तमूर्तिर्जितेन्द्रियो रागद्वेषरहितः। दिग्वासा नग्नः। तरुणो यौवनोपेतः। रूपवान् सुशोभनवपुः।।४५।।

अथ भगवतो भास्करस्य लक्षणमाह—

**नासाललाटजङ्घोरुगण्डवक्षांसि चोन्नतानि रवेः।**
**कुर्यादुदीच्यवेषं गूढं पादादुरो यावत्।।४६।।**

**बिभ्राणः स्वकररुहे बाहुभ्यां पङ्कजे मुकुटधारी।**
**कुण्डलभूषितवदनः प्रलम्बहारो वियद्गवृतः।।४७।।**

**कमलोदरद्युतिमुखः कञ्चुकगुप्तः स्मितप्रसन्नमुखः।**
**रत्नोज्ज्वलप्रभामण्डलश्च कर्तुः शुभकरोऽर्कः।।४८।।**

सूर्य की प्रतिमा के नासिका, ललाट, जङ्घा, ऊरु, गाल और वक्षःस्थल ऊँचा, उत्तर देशवासियों की तरह वेष, पाँव से लेकर छाती तक चोलक से गुप्त, दोनों भुजाओं में दो नखरूप कमलों से युत, शर पर मुकुट, कानों में कुण्डल, गले में वियद्ग-( सारसन )-युक्त हार, कमलोदर के समान मुखकान्ति, कञ्चुक से आच्छादित शरीर, ईषद हास्ययुक्त प्रसन्न मुख और रत्नों से दीप्यमान कान्ति बनानी चाहिये। इस तरह बना हुआ सूर्य बनाने वाले के लिये शुभकारक होता है।।४६-४८।।

**नासाललाटेति**। रवेरादित्यस्य नासा नासिका, ललाटं मुखाग्रम्, जङ्घे ऊरू, गण्डो मुखगण्डः, वक्ष उरःप्रदेशः—एतान्युन्नतानि उच्चानि। उदीच्यवेषमुत्तरपथवेषं कुर्यात्। उदग्वेषमित्यर्थः। पादात् प्रभृत्युरो वक्षो यावत्। गूढं चोलकगुप्तम्।

**बिभ्राण इति**। स्वकररुहे स्वनखे बाहुभ्यां पङ्कजे कमले बिभ्राणः। सहजनखस्य करे लग्नत्वात् सपत्रभागस्य बाहोर्नालत्वाच्च कमले बिभ्राणः। मुकुटधारी मुकुटं मौलिं तं च धारयति। कुण्डलभूषितवदनः, कुण्डलाभ्यां कर्णाभरणाभ्यां भूषितमलङ्कृतं वदनं मुखं यस्य। प्रलम्बोऽतिदीर्घो हारो मुक्ताहारो यस्य। वियद्गं सारसनं तेन वृतः संयुक्तः।

कमलं पद्मं तस्योदरमभ्यन्तरं तद्वद्द्युतिः कान्तिर्मुखे वदने यस्य। कञ्चुकः प्रसिद्धस्तेन गुप्त आच्छादितः। स्मितं हसितं प्रसन्नं सौम्यमतिशोभनं मुखं वक्त्रं यस्य। रत्नैर्मणिविशेषै-रुज्ज्वलो दीप्यमानः प्रभामण्डलः कान्तिसमूहो यस्य। एवंविधोऽर्क आदित्यः कर्तुः शुभकरः श्रेयःप्रदः।।४६-४८।।

अथार्कमुद्दिश्य सर्वप्रतिमानां शुभाशुभमाह—

**सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा।**
**क्षेमसुभिक्षाय भवेत् त्रिचतुर्हस्तप्रमाणा या।।४९।।**

**नृपभयमव्यङ्गायां हीनाङ्गायामकल्यता कर्तुः।**
**शातोदर्यां क्षुद्भयमर्थविनाशः कृशाङ्गायाम्॥५०॥**

**मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशेत् कर्तुः।**
**वामावनता पत्नीं दक्षिणविनता हिनस्त्यायुः॥५१॥**

**अन्धत्वमूर्ध्वदृष्ट्या करोति चिन्तामधोमुखी दृष्टिः।**
**सर्वप्रतिमास्वेयं शुभाशुभं भास्करोक्तसमम्॥५२॥**

एक हाथ ऊँची सूर्य की प्रतिमा शुभ, दो हाथ ऊँची धन देने वाली तथा तीन हाथ ऊँची प्रतिमा क्षेम और सुभिक्ष के लिये होती है। अधिक अंग वाली प्रतिमा राजा से भय, हीनांग प्रतिमा बनाने वाले को रोगी, कृश उदर वाली प्रतिमा क्षुधा का भय और कृश अंग वाली प्रतिमा धन का नाश करती है। क्षत प्रतिमा बनाने वाले की शस्त्र से मृत्यु, बायीं ओर झुकी हुई प्रतिमा बनाने वाले की पत्नी का नाश और दाहिनी तरफ झुकी हुई प्रतिमा आयु का नाश करती है। प्रतिमा की दृष्टि ऊपर की तरफ हो तो बनाने वाले को अन्धा और नीचे की तरफ हो तो बनाने वाले को चिन्तित करती है। सूर्य की प्रतिमा के सम्बन्ध में उक्त शुभाशुभ फल ही अन्य प्रतिमाओं के सम्बन्ध में भी जानना चाहिये।।४९-५२।।

**सौम्या तु हस्तमात्रेति।** हस्तमात्रा हस्तप्रमाणा दीर्घा प्रतिमा सौम्या शुभावहा भवति। हस्तद्वयोच्छ्रिता वसुदा धनप्रदा भवति। या त्रिचतुर्हस्तप्रमाणा सा यथासङ्ख्यं क्षेमसुभिक्षाय भवेत्। त्रिहस्ता क्षेमाय चतुर्हस्ता सुभिक्षाय भवेत् स्यात्।

**नृपभयमिति। अत्यङ्गायामिति।** स्थूलावयवायां नृपभयं राजभयं भवति। हीनाङ्गायां प्रमाणहीनावयवायां कर्तुरकल्यता अनारोग्यम्। शातोदर्यां तनूदरायां क्षुद्भयं भवति। कृशाङ्गायां दुर्बलावयवायामर्थविनाशो वित्तक्षयः।

सक्षतायां क्षतसंयुक्तायां प्रतिमायां कर्तुः शस्त्रनिपातेन मरणं निर्दिशेद्वदेत्। वामे वामभागे अवनता प्रतिमा कर्तुः पत्नीं भार्यां हिनस्ति मारयति, दक्षिणे विनता आयुर्जीवितं हिनस्ति मारयति। आयुषः क्षयं करोति। अन्धत्वमूर्ध्वदृष्ट्या प्रतिमा नेत्रनाशं करोति। अधोमुखी दृष्टिश्चिन्तां शोकं करोति। एवं भास्करोक्तसमं सूर्यकथिततुल्यं शुभाशुभं सर्वासु प्रतिमास्वन्यासु ज्ञेयं ज्ञातव्यम्।।४९-५२।।

अधुना लिङ्गस्य लक्षणमाह—

**लिङ्गस्य वृत्तपरिधिं दैर्घ्येणासूत्र्य तत्त्रिधा विभजेत्।**
**मूले तच्चतुरस्रं मध्ये त्वष्टाश्रिं वृत्तमतः॥५३॥**

**चतुरस्रमवनिखाते मध्यं कार्यं तु पिण्डिकाश्वभ्रे।**
**दृश्योच्छ्रायेण समा समन्ततः पिण्डिका श्वभ्रात्॥५४॥**

लिङ्ग की परिधि को लम्बाई में सूत्र से नाप कर उसके तुल्य पत्थर, लकड़ी या मणि का लिङ्ग बनाना चाहिये। उसको तीन भाग करके मूल का प्रथम भाग चतुरस्त्र, मध्य भाग अष्टास्त्र और ऊपर का भाग गोल बनाना चाहिये। प्रतिमा के चतुरस्त्र भाग को भूमि में गाड़ना चाहिये, अष्टास्त्र भाग को पिण्डिका ( जलहरी = जलधरी ) के गड्ढे में रखना चाहिये और वर्तुल भाग को ऊपर रखना चाहिये। ऊपर के दृश्य वर्तुल भाग की ऊँचाई के तुल्य ही गड्ढे के चारो और पीठिका बनानी चाहिये।।५३-५४।।

लिङ्गस्य वृत्तभागे य: परिणाहस्तं सूत्रेण परिच्छिद्य तत् सूत्रं दैर्घ्येण दीर्घत्वेन आसूत्र्य मित्वा तत्प्रमाणं पाषाणं काष्ठं मणिं वा कृत्वा त्रिधा विभजेत्, भागत्रयं कुर्यात्। ततो लिङ्गस्य मूले योऽसौ त्रिभागस्तं चतुरस्त्रं कार्यम्। मध्ये यस्तमष्टाश्रिं कुर्यात्। अत: परं यस्तृतीयभागस्तं वृत्तं परिवर्तुलं कुर्यात्।

तत्र चतुरस्त्रं यद्भागं तदवनिखाते भूखाते कार्यं क्षेप्यम्। मध्यं यदष्टाश्रि तत् पिण्डिकाश्वभ्रे पीठगर्त्ते क्षिपेत्। श्वभ्रात् पीठविवरात् समन्तत: सर्वासु दिक्षु पीठिका दृश्योच्छ्रायेण समा कार्या। दृश्यभागस्य परिवर्तुलस्य लभ्यो य उच्छ्रायस्तत्सम:। एतदुक्तं भवति—यावत्प्रमाणं वृत्तभागस्य दैर्घ्यं तावत्प्रमाणं समन्तत: पीठिकापृथुत्वं कार्यमिति।।५३-५४।।

अन्यद्विशेषलक्षणमाह—

**कृशदीर्घं देशघ्नं पार्श्वविहीनं पुरस्य नाशाय।**
**यस्य क्षतं भवेद् मस्तके विनाशाय तल्लिङ्गम्।।५५।।**

यदि शिवलिङ्ग पतला या लम्बा हो तो देश का नाश, दोनों तरफ से खण्डित हो तो नगर का नाश और क्षत मस्तक वाला हो तो स्वामी का नाश करता है।।५५।।

यल्लिङ्गं कृशं दुर्बलं दीर्घमभ्युच्छ्रितं तद्देशघ्नं देशं हन्ति। यत् पार्श्वाभ्यां विहीनं तत् पुरस्य नगरस्य नाशाय भवति। यस्य मस्तके मूर्धनि क्षतं छिद्रं भवेत् स्यात् तल्लिङ्गं विनाशाय भर्तुरिव भवति।।५५।।

अथ मातृगण एवं तस्य लक्षणमाह—

**मातृगण: कर्तव्य: स्वनामदेवानुरूपकृतचिह्न:।**
**रेवन्तोऽश्वारूढो मृगयाक्रीडादिपरिवार:।।५६।।**

मातृगणों की प्रतिमा अपने नाम में जो देवता हों, उनके सदृश बनानी चाहिये। जैसे ब्रह्मा के तुल्य ब्राह्मी की, इन्द्र के तुल्य इन्द्राणी की, शिव के तुल्य शिवा की इत्यादि; परन्तु इन प्रतिमाओं में स्तन-शोभा, मध्य में कृश और पृथु नितम्ब भी बना देना चाहिये, जिससे कि स्त्री की शोभा प्रतिमा में अवतरित हो जाय। घोड़े पर सवार और मृगयारूप क्रीडा में संलग्न परिवार वाली प्रतिमा रेवन्त ( सूर्य के पुत्र ) की बनानी चाहिये।।५६।।

मातृगणो मातृसमूह: स्वनामदेवानुरूपकृतचिह्न: कर्तव्य:। स्वनामा यो देवस्तदनुरूपं

तादृक् कृतं चिह्नं लक्षणं यस्य। यथा ब्रह्मणो यल्लिङ्गम् 'ब्रह्माकमण्डलुकरश्चतुर्मुखः पङ्कजासनस्थश्च' इति ब्राह्मी कार्या। 'कार्योऽष्टभुजो भगवान्' इति वैष्णवी। 'शम्भोः शिरसीन्दुकला' इति रौद्र्यः कार्याः। 'स्कन्दः कुमाररूपः' इति कौमार्यः। 'शुक्लश्चतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्वम्' इत्यैन्द्र्यः। 'दण्डी यमो महिषगः' इति याम्यः। 'हंसारूढः पाशभृद्वरुणः' इति वारुण्यः। 'नरवाहनः कुबेरः' इति कौबेर्यः। एवमन्यासां नारसिंहिवाराहिवैनायकीनामप्यूह्यम्; किन्तु तासां स्तनशोभा मध्यक्षामता नितम्बवैपुल्यं कार्यम्, येन प्रकारेण स्त्रीरूपस्य शोभा जायत इति। रेवन्तोऽर्कतनयोऽश्वारूढः कार्यः। अश्वस्तुरगः तत्रारूढस्तदुपरि स्थित इत्यर्थः। तथा मृगया मृगवधस्तत्क्रीडादिपरिवार इति। यः परिवारः स मृगयायुक्तः क्रीडायुक्तः। आदिग्रहणादश्ववाहने तत्परीक्षणं तदन्वेषणादि।।५६।।

अथ यमवरुणकुबेरलक्षणमाह—

**दण्डी यमो महिषगो हंसारूढश्च पाशभृद्वरुणः।**
**नरवाहनः कुबेरो वामकिरीटी बृहत्कुक्षिः।।५७।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां प्रतिमालक्षणं नामाष्टपञ्चाशत्तमोध्यायः।।५८।।**

यम की प्रतिमा को हाथ में दण्ड देकर भैंस पर चढ़ाना चाहिये। वरुण की प्रतिमा को हंस पर चढ़ा कर हाथ में पाश धारण कराना चाहिये। कुबेर की प्रतिमा मनुष्य पर चढ़ी हुई, बायीं ओर झुकी हुई किरीट वाली और बड़े उदर वाली बनानी चाहिये।।५७।।

यमः प्रेतपतिर्दण्डी दण्डहस्तो महिषारूढश्च कार्यः। वरुणोऽपाम्पतिः, हंसारूढः हंसः पक्षी तस्मिन्नारूढस्तस्योपरि स्थितः, पाशभृत् पाशहस्तः कार्यः। कुबेरो वैश्रवणो नरवाहनो मनुष्यारूढः। खरवाहन इति केचित् पठन्ति। वामकिरीटी वामभागे किरीटी मुकुटं यस्य। बृहत्कुक्षिर्विस्तीर्णकुक्षिः कार्यः। अत्र प्रतिमालक्षणं देवानां देवतानां यल्लक्षणमाचार्येणोक्तं तेषां लोकप्रसिद्धा यथा यथा शरीरशोभा भवति, तथा तथोक्तवत्प्रतिमा कार्या लक्षणज्ञैः, स्वैरङ्गुलप्रमाणैरित्यादि यदुक्तं तत्सर्वं कार्यमिति। तथा च काश्यपः—

एकदंष्ट्रो गजमुखश्चतुर्बाहुर्विनायकः।
लम्बोदरः स्थूलदेहो नेत्रत्रयविभूषितः।।
नवकुवलयकान्तिमक्षमालां कमलकमण्डलुदर्पणाक्षहस्ताम्।
प्रणमतवरपीनपीठपद्मासनसुखितां परमेश्वरीं वितस्ताम्।।
ब्रह्मा चतुर्मुखो दण्डी कृष्णाजिनकमण्डली।
विष्णुश्चतुर्भुजः शार्ङ्गी शङ्खचक्रगदाधरः।
श्रीवत्साङ्कः पीतवासा वनमालाविभूषितः।।
नरसिंहः स्थूलदेहो रोमावर्तविभूषितः।
उद्घाटितमुखः स्रग्वी वह्निकान्तिर्बृहद्भुजः।।

वराहः सूकरमुखश्चतुर्बाहुविभूषितः।
नीलाञ्जनचयप्रख्यो ध्यानशक्तः सुलोचनः।।
ईश्वरो जटिलस्त्र्यक्षो वृषचन्द्राङ्कभूषितः।
उरगेन्द्रोपवीती च कृत्तिवासाः पिनाकधृक्।।
चण्डिकाष्टदशभुजा सर्वप्रहरणान्विता।
त्र्यक्षा सिंहरथा धन्या महिषासुरसूदिनी।।
मयूरवाहनः स्कन्दः शक्तिकुक्कुटधारकः।
सुरूपदेहो विक्रान्तो देवः सेनापतिः शिशुः।।
आदित्यस्तरुणः स्रग्वी कवची खड्गधृक् तथा।
तेजस्वी पङ्कजकरः षड्वर्गश्च किरीटवान्।।
ऐरावतश्चतुर्दन्तः श्वेतगात्रो महागजः।
तदारूढो महेन्द्रस्तु वज्रहस्तो महाबलः।।
तिर्यग्ललाटगं नेत्रं तृतीयं तस्य कारयेत्।
नीललोहितवर्णा च शची तस्य समीपगा।।
एवं देवगणाः सर्वे स्वायुधाभरणोज्ज्वलाः।
कर्तव्याः स्वस्वरूपाश्च सम्पूर्णाः शुभलक्षणाः।।
हस्तमात्रा भवेत् सौम्या द्विहस्तान्नधनप्रदा।
सुभिक्षक्षेमदा पुण्या त्रिहस्ता तु चतुष्करा।।
वैकल्यं कुरुते हीना कृशाङ्गी देहनाशिनी।
मरणं सक्षतायां तु सुदीर्घा वित्तनाशिनी।।
वामे नता हन्ति पत्नीं कर्तुर्दक्षिणभागगा।
ऊर्ध्वदृष्टिर्नेत्ररोगं गोकर्णा स्यादधोमुखी।।
सुरूपा सुप्रभागैव सर्वाभरणभूषिता।
स्वायुधैश्च समायुक्ता कर्तव्या प्रतिमा शुभा।। इति।।५७।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ प्रतिमालक्षणं नामाष्टपञ्चाशत्तमोऽध्यायः।।५८।।**

**( प्रमथाधिपो गजमुखः प्रलम्बजठरः कुठारघाती स्यात्।**
**एकविषाणो बिभ्रन्मूलककन्दं सुनीलदलकन्दम्।।**

हाथी के समान मुख वाली, लम्बे उदर वाली, कुठारधारिणी, एक दाँत वाली और मूलककन्द तथा सुनीलदलकन्द धारण की हुई गणेश की प्रतिमा बनावे। )

**इति 'विमला' हिन्दीटीकायां प्रतिमालक्षणाध्यायोऽष्टपञ्चाशत्तमः।।५८।।**

# अथ वनसम्प्रवेशाध्यायः

अथ वनसम्प्रवेशाध्यायो व्याख्यायते। तत्रादावेव विधानमाह—

**कर्तुरनुकूलदिवसे दैवज्ञविशोधिते शुभनिमित्ते।**
**मङ्गलशकुनैः प्रास्थानिकैश्च वनसम्प्रवेशः स्यात् ॥१॥**

प्रतिमा बनाने वाले को चाहिये कि अनुकूल दिन में, दैवज्ञ के द्वारा विशोधित मुहूर्त में, यात्रा प्रकरण में विहित शुभ शकुन को देख कर प्रतिमा बनाने हेतु लकड़ी लाने के लिये वन में प्रवेश करे।।१।।

कर्तुः प्रतिमाकर्तुः। अनुकूलदिवसे उपचयकर्तुर्ग्रहस्य दिने निरुपहते नक्षत्रे च। दैवज्ञ-विशोधिते शुभनिमित्ते, दैवज्ञेन कालविदा यच्च विशोधितं दत्तं शुभनिमित्तं शकुनं सुमुहूर्तादिकं च तस्मिन्। प्रास्थानिकैर्मङ्गलशकुनैः, प्रस्थाने भवाः प्रास्थानिकाः प्रस्थाने यात्रायां यानि मङ्गलशकुनानि उक्तानि तैः। सिद्धार्थकादर्शपयोऽञ्जनानीत्यादिकानि मङ्गलानि। श्रेष्ठे हयसिते प्राच्यामित्यादिकाः शकुनाः। एतैः प्रास्थानिकैर्मङ्गलशकुनैर्वनसम्प्रवेशः स्याद् भवेत्। वने वृक्षबहुले देशे प्रवेशः प्रतिमाकाष्ठार्थं कार्य इति।।१।।

अत्र च वर्जनीयान् वृक्षानाह—

**पितृवनमार्गसुरालयवल्मीकोद्यानतापसाश्रमजाः।**
**चैत्यसरित्सङ्गमसम्भवाश्च घटतोयसिक्ताश्च ॥२॥**

**कुब्जानुजातवल्लीनिपीडिता वज्रमारुतोपहताः।**
**स्वपतितहस्तिनिपीडितशुष्काग्निप्लुष्टमधुनिलयाः ॥३॥**

**तरवो वर्जयितव्याः शुभदाः स्युः स्निग्धपत्रकुसुमफलाः।**
**अभिमतवृक्षं गत्वा कुर्यात् पूजां सबलिपुष्पाम् ॥४॥**

श्मशान के मार्ग, देवालय, वल्मीक, उपवन और तपस्वियों के आश्रम में उत्पन्न, चैत्य ( प्रधान ), नदियों के संगम-स्थान में उत्पन्न, घड़ों के जल से सिञ्चित, कुबड़े अन्य वृक्षों के संयोग से पीड़ित, लताओं से पीड़ित, बिजली से भग्न, वायु से भग्न, हाथियों से भग्न, सूखे, अग्नि से दग्ध और मधुमक्खियों के छत्ते वाले वृक्षों का ( प्रतिमा-निर्माण हेतु लकड़ी के इच्छुक व्यक्ति द्वारा ) त्याग कर देना चाहिये। स्निग्ध पत्ते, फूल और फल वाले वृक्ष शुभ होते हैं। इस प्रकार अभीष्ट वृक्ष के पास जाकर बलि और पुष्पों के द्वारा सर्वप्रथम उस वृक्ष की पूजा करनी चाहिये।।२-४।।

एवंविधास्तरवो वृक्षा वर्जयितव्याः। कीदृशाः? पितृवनं श्मशानम्, मार्गः पन्थाः, सुरालयं देवगृहम्, वल्मीको वल्मीककृतो मृत्स्तूपः, उद्यानमुपवनम्, तापसाश्रमस्तपोवनम्,

एतेषु ये जाता उत्पन्ना वृक्षा:, तथा चैत्य: प्रधानवृक्ष:, सरितो नद्यस्तासां सङ्गमो मेलकस्तत्र येषां वृक्षाणां सम्भव उत्पत्ति:, तथा घटतोयेन कलशजलेन सिक्ता: सेचिता ये वृक्षा:, तेषां स्वयं रोपितत्वादच्छेदार्हत्वात्।

कुब्जोऽस्पष्ट:, अनुजातो वृक्षस्य अनु पश्चादन्यो यो वृक्षो जात उत्पन्नस्तेन योगेन पीडित:। ये च वृक्षा वल्लीभिर्निपीडिता:, वज्रमशनिर्मारुतो वायुस्ताभ्यां ये चोपहता भग्ना:, यश्च स्वपतित: स्वयमेव पतित:, हस्तिना गजेन निपीडितो यो भग्न:, शुष्को विगतरस:, अग्निप्लुष्टोऽग्निना दग्ध:, मधुनिलयो मधुमाक्षिकाणामाश्रय:।

एवमेते यथोक्तास्तरवो वर्ज्या:। अन्ये परिशिष्टा वृक्षा: शुभदा:। ते च स्निग्धपत्रा: स्निग्धकुसुमा: सस्नेहपुष्पा: स्निग्धफलाश्च शुभदा एव। ततोऽभिमतमभीष्टं वृक्षं तरुं गत्वा आसाद्य तस्य सबलिपुष्पां बलिभिरुपहारै: पुष्पै: कुसुमै: सहितां पूजामर्चां कुर्यात्।।२-४।।

अथ वर्णानुक्रमेण वृक्षानाह—

**सुरदारुचन्दनशमीमधूकतरव: शुभा द्विजातीनाम्।**
**क्षत्रस्यारिष्टाश्वत्थखदिरबिल्वा विवृद्धिकरा: ।।५।।**

**वैश्यानां जीवकखदिरसिन्धुकस्यन्दनाश्च शुभफलदा: ।**
**तिन्दुककेसरसर्जार्जुनाम्रशालाश्च शूद्राणाम् ।।६।।**

**देवदारू, चन्दन, शमी और महुआ के वृक्ष ब्राह्मणों के लिये; निम्ब, पीपल, खैर और बेल के वृक्ष क्षत्रियों के लिये; जीवक, खैर, सिन्धुक और स्यन्दन के वृक्ष वैश्यों के लिये तथा तेन्दू, नागकेसर, सर्ज, अर्जुन और साल के वृक्ष शूद्रों के लिये शुभदायक कहे गये हैं।।५-६।।**

सुरदारुर्देवदारु:। चन्दनं मलयजम्। शमी प्रसिद्धा। मधूको वृक्ष: प्रसिद्ध:। एते तरवो वृक्षा: प्रतिमार्थं देवविग्रहार्थं च द्विजातीनां ब्राह्मणानां शुभदा:। अरिष्ट:, अश्वत्थ:, खदिरो बिल्वश्चैते सर्व एव वृक्षविशेषा: क्षत्रस्य क्षत्रियजातेर्विवृद्धिकरा:।

जीवक:, खदिर:, सिन्धुक:, स्यन्दन:—एते वृक्षविशेषा वैश्यानां शुभफलदा:। तिन्दुक:, केसर:, सर्ज:, अर्जुन:, आम्र:, शाल:—एते वृक्षा: शूद्राणां शुभदा:। तथा च काश्यप:—

सुरदारु: शमीवृक्षो मधूकश्चन्दनस्तथा।
प्रतिष्ठार्थं ब्राह्मणानामेते प्रोक्ता: शुभावहा:।।
अरिष्टाश्वत्थखदिरबिल्वा: क्षत्रियजातिषु।
जीवक: खदिरश्चैव सिन्धुक: स्यन्दनस्तथा।।
वैश्यानां शुभदा: प्रोक्तास्तिन्दुक: केसरस्तथा।
सर्जार्जुनाम्रशालाश्च शूद्राणां शुभदा: स्मृता:।। इति।।५-६।।

अत्रैव विशेषमाह—

**लिङ्गं वा प्रतिमा वा द्रुमवत् स्थाप्या यथा दिशं यस्मात्।**
**तस्माच्चिह्नयितव्या दिशो द्रुमस्योर्ध्वमथवाधः ॥७॥**

वृक्ष की दिशाओं की तरह शिवलिङ्ग या प्रतिमा को स्थापित करना चाहिये तथा वृक्ष के ऊर्ध्व भाग से प्रतिमा का ऊर्ध्व भाग और वृक्ष के अधोभाग से प्रतिमा का अधोभाग बनाना चाहिये। अतः अभीष्ट वृक्ष को काटने से पहले ही उसमें सभी दिशाओं का चिह्न लगा देना चाहिये।।७।।

लिङ्गं शिवलिङ्गं वा प्रतिमार्चा वा यस्माद् द्रुमवद्वृक्षवद्यथा दिशं स्थाप्याः। अयमर्थः— द्रुमस्य यः पूर्वाभिमुखो भागः स एव प्रतिमायाः पूर्वभागः कार्यः। एवं दक्षिणो दक्षिणः, पश्चिमः पश्चिमः, उत्तरभाग उत्तरभाग एव कार्यः। वृक्षस्य योऽधो भागः स एव प्रतिमाया अधोभागः कार्यः; वृक्षस्य य ऊर्ध्वभागः सोऽपि प्रतिमाया ऊर्ध्वभागः कार्यः। तस्माद्धेतोर्द्रुमस्य वृक्षस्य दिश आशाश्चिह्नयितव्याः। एवमूर्ध्वाधरौ भागावपि चिह्नयितव्यौ। तथा च काश्यपः—

वृक्षवत् प्रतिमा कार्या प्राग्भागाद्युपलक्षिता।
पादाः पादेषु कर्तव्याः शीर्षमूर्ध्वे तु कारयेत्।। इति।।७।।

अथ वृक्षच्छेदनविधानमाह—

**परमान्नमोदकौदनदधिपललोल्लोपिकादिभिर्भक्ष्यैः ।**
**मद्यैः कुसुमैर्धूपैर्गन्धैश्च तरुं समभ्यर्च्य ॥८॥**
**सुरपितृपिशाचराक्षसभुजगासुरगणविनायकाद्यानाम् ।**
**कृत्वा रात्रौ पूजां वृक्षं संस्पृश्य च ब्रूयात् ॥९॥**

खीर, लड्डू, भात, दही, मांस, उल्लोपिका ( एक प्रकार की भोज्य वस्तु ) आदि भक्ष्य वस्तुयें, पुष्प और सुगन्ध द्रव्यों से वृक्ष की पूजा करने के उपरान्त रात्रि में देवता, पितर, पिशाच, राक्षस, नाग, सुरगण, गणेश आदि ( भूत, प्रेत, सिद्ध, विद्याधर और गन्धर्व ) की पूजा करने के पश्चात् वृक्ष को स्पर्श करके वक्ष्यमाण मन्त्र का पाठ करना चाहिये।।८-९।।

परमान्नं पायसम्, मोदका लड्डूकाः, ओदनं भक्तम्, दधि क्षीरविकारः, पललमर्धनिष्पीडितास्तिलाः, उल्लोपिकाः प्रसिद्धाः। आदिग्रहणाद् बहुभिर्भक्ष्यप्रकारैरपूपप्रभृतिभिर्लेह्यपेयचोष्यैः मद्यैः, कुसुमैः पुष्पैः, धूपैर्गन्धैः सुगन्धद्रव्यैश्च तरुं वृक्षं समभ्यर्च्य सम्पूज्य।

सुरा देवाः, पितरो देवयोनयः, पिशाचा देवयोनय एव, राक्षसा नक्तञ्चराः पिशिताशिनः, भुजगाः पन्नगाः, असुरा दैत्याः, गणाः प्रमथाः, विनायका विघ्नाः, आदिग्रहणाद् भूतप्रेतसिद्धविद्याधरगन्धर्वाः। एतेषां रात्रौ निशि पूजामर्चां कृत्वा विधाय वृक्षं तरुं पाणिना संस्पृश्य च इमं मन्त्रं ब्रूयाद् वदेत्।।८-९।।

किं तदित्याह—

**अर्चार्थममुकस्य त्वं देवस्य परिकल्पितः।**
**नमस्ते वृक्ष पूजेयं विधिवत् सम्प्रगृह्यताम्॥१०॥**

**यानीह भूतानि वसन्ति तानि बलिं गृहीत्वा विधिवत् प्रयुक्तम्।**
**अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यद्य नमोऽस्तु तेभ्यः॥११॥**

हे वृक्ष! अमुक देवता की पूजा के लिये कल्पित किये हुये आपको मैं नमस्कार करता हूँ, मेरे द्वारा की गई विधिपूर्वक इस पूजा को आप ग्रहण करें तथा इस वृक्ष पर जो प्राणी निवास करते हैं, वे सब विधिपूर्वक इस पूजा को ग्रहण करके कहीं अन्यत्र अपना निवासस्थान कल्पित करें, आज वे सब मुझे क्षमा करें, उनको मैं नमस्कार करता हूँ।।१०-११।।

हे वृक्ष! अमुकस्य अमुकनाम्नो देवस्य सुरस्यार्चार्थं पूजार्थं परिकल्पितो व्यवस्थापितः, नमस्ते तव नमस्कारं भवतु। इयं पूजा मयोपनीता विधिवद्विधानेन सम्प्रगृह्यताम्।

इहास्मिन् वृक्षे यानि भूतानि वसन्ति व्यवस्थितानि तान्यमुं बलिमुपहारं विधिवद्विधानेन प्रयुक्तमुपनीतं गृहीत्वा सङ्गृह्य अन्यत्रान्यस्मिन् वृक्षे वासं गृहं परिकल्पयन्तु व्यवस्थापयन्तु। तानि भूतान्यद्य क्षमन्तु क्षातिं कुर्वन्तु। तेभ्यो भूतेभ्यो नमोऽस्तु नमस्कारो भवतु।

ततः किं कुर्यादित्याह—

**वृक्षं प्रभाते सलिलेन सिक्त्वा पूर्वोत्तरस्यां दिशि सन्निकृत्य।**
**मध्वाज्यदिग्धेन कुठारकेण प्रदक्षिणं शेषमतो निहन्यात्॥१२॥**

इसके पश्चात् प्रातःकाल जल से वृक्ष को सींच कर शहद और घृत से चुपड़े हुए कुठार से पहले ईशान कोण में काट कर शेष को प्रदक्षिण क्रम से काटे।।१२।।

प्रभाते प्रभातकाले वृक्षं तरुं सलिलेनोदकेन सिक्त्वा संसिञ्च्य कुठारकेण परशुना मध्वाज्यदिग्धेन मधुना माक्षिकेणाज्येन घृतेन दिग्धेनोपलिप्तेन प्रथमं पूर्वोत्तरस्यामैशान्यां सन्निकृत्य छित्त्वा ततः शेषं प्रदक्षिणेन पूर्वाग्नेययाम्यनैर्ऋतपश्चिमवायव्योत्तरासु दिक्षु निहन्यात् छिन्द्यात्।।१२।।

अथ पतितस्य तरोर्लक्षणमाह—

**पूर्वेण पूर्वोत्तरतोऽथवोदक् पतेयदा वृद्धिकरस्तदा स्यात्।**
**आग्नेयकोणात् क्रमशोऽग्निदाहरुग्रागरोगास्तुरगक्षयश्च॥१३॥**

यदि कटा हुआ वृक्ष पूरब, ईशान कोण या उत्तर दिशा में गिरे तो वृद्धि करने वाला होता है। अग्निकोण आदि पाँच दिशाओं में कटे हुये वृक्ष के गिरने से क्रमशः अग्निदाह, रोग, रोग, रोग और घोड़े का नाश होता है अर्थात् अग्निकोण में अग्निदाह, दक्षिण में रोग, नैर्ऋत्य कोण में रोग, पश्चिम में रोग और वायव्य कोण में यदि वृक्ष गिरता है तो घोड़े का नाश होता है।।१३।।

पूर्वेण पूर्वस्यां दिशि, अथवा पूवोत्तरत ऐशान्याम्, उदगुत्तरस्यां दिशि, यदा पतेत्, तदा वृद्धिकरः स्याद् भवेत्। आग्नेयकोणात् प्रभृति क्रमेण यदा पतति, तदैतानि गर्गेण फलानि उक्तानि। तद्यथा—आग्नेयकोणे यदि पतति, तदा अग्निदाहो भवति, दक्षिणे रुजो रोगा भवन्ति, नैर्ऋते रोगा भवन्ति, पश्चिमायां रोगा एव, वायव्ये तुरगक्षयोऽश्वविनाशः।।१३।।

अत्र यन्त्रोक्तं तदत्रोह्यमित्याह—

**यन्त्रोक्तमस्मिन् वनसम्प्रवेशे निपातविच्छेदनवृक्षगर्भाः।**
**इन्द्रध्वजे वास्तुनि च प्रदिष्टाः पूर्वं मया तेऽत्र तथैव योज्याः ।।१४।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां वनसम्प्रवेशो नामैकोनषष्टितमोऽध्यायः ।।५९।।**

इस वनसम्प्रवेश नामक अध्याय में वृक्ष के निपात, विच्छेदन, वृक्षगर्भ आदि जो मैंने नहीं कहे हैं, उनको पूर्वकथित इन्द्रध्वजाध्याय और वास्तुविद्याध्याय में कथित रीति की तरह समझना चाहिये।।१४।।

**इति 'विमला'हिन्दीटीकायां वनसम्प्रवेशाध्याय एकोनषष्टितमः ।।५९।।**

अस्मिन्निह वनसम्प्रवेशे यन्त्रोक्तं यन्त्र कथितम्। किं तत्? निपातविच्छेदनवृक्षगर्भाः, निपातः पतनं वृक्षस्य। यथा—

नृपजयदमविध्वस्तं पतनमनाकुञ्चितं च पूर्वोदक्।
अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत् पतितम्।।

विच्छेदनं यथा—

परशोर्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः। इति।

तथा वृक्षगर्भः—'पीते तु मण्डले निर्दिशेत्तरोर्मध्यगां गोधाम्' इत्यादि। एते निपात-विच्छेदनवृक्षगर्भाः। ते मया पूर्वमादाविन्द्रध्वजे वास्तुनि च ये वास्तुविद्यायां प्रदिष्टा उक्तास्ते चात्रास्मिन् वनसम्प्रवेशे तथैव तेनैव प्रकारेण योज्या योजनीया इति।।१४।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वनसम्प्रवेशो नामैकोनषष्टितमोऽध्यायः ।।५९।।**

## अथ प्रतिमाप्रतिष्ठापनाध्यायः

अथ प्रतिमाप्रतिष्ठापनं व्याख्यायते। तत्रादावेवाधिवासने मण्डपस्य लक्षणमाह—

**दिशि याम्यायां कुर्यादधिवासनमण्डपं बुधः प्राग्वा।**
**तोरणचतुष्टययुतं शस्तद्रुमपल्लवच्छन्नम् ॥१॥**

**पूर्वे भागे चित्राः स्रजः पताकाश्च मण्डपस्योक्ताः।**
**आग्नेय्यां दिशि रक्ताः कृष्णाः स्युर्याम्यनैर्ऋत्योः ॥२॥**

**श्वेता दिश्यपरस्यां वायव्यायां तु पाण्डुरा एव।**
**चित्राश्चोत्तरपार्श्वे पीताः पूर्वोत्तरे कार्याः ॥३॥**

चार तोरणों से युत, प्रशस्त वृक्ष के पत्रों से आच्छादित अधिवासन ( संस्कारविशेष ) का मण्डप बनाना चाहिये। मण्डप के पूर्व भाग में अनेक वर्ण की पुष्पमाला और पताका लगानी चाहिये तथा अग्निकोण में लाल, दक्षिण और नैर्ऋत्य कोण में काली, पश्चिम में सफेद, वायव्य कोण में पाण्डुर ( कुछ सफेद ), उत्तर में अनेक वर्ण वाली और ईशान कोण में पीली पुष्पमाला और पताका लगानी चाहिये।।१-३।।

बुधः पण्डितो याम्यायां दक्षिणस्यां प्राक् पूर्वस्यां वा अधिवासनमण्डपं कुर्यात्। अधिवासनं संस्कारविशेषः। केचित् सौम्यायामिति पठन्ति। सौम्यायामुत्तरस्याम्। कीदृशं मण्डपं तोरणचतुष्टययुतं चतुर्दिशं चतुर्भिस्तोरणैर्युक्तम्, शस्तानां प्रशस्तानां द्रुमाणां याज्ञिकानां पल्लवैः पत्रैश्छन्नमाच्छादितं कुर्यात्।

मण्डपस्य पूर्वभागे पूर्वस्यां दिशि स्रजो मालाः पताकाश्च वैजयन्त्यश्चित्रा नानावर्णा उक्ताः कथिताः। आग्नेय्यां पूर्वदक्षिणस्यां दिशि स्रजःपताका रक्ता लोहिताः। याम्यं दक्षिणं नैर्ऋती दक्षिणपश्चिमा तयोर्याम्यनैर्ऋत्योः कृष्णा कृष्णवर्णाः।।२।।

अपरस्यां पश्चिमायां दिशि श्वेताः शुक्लवर्णाः कार्याः। वायव्यायां पश्चिमोत्तरस्यां दिशि पाण्डुरा ईषच्छुक्लाः। एवमुत्तरपार्श्वे उत्तरस्यां दिशि चित्रा नानावर्णाः। पूर्वोत्तरे ऐशाने स्रजः पताकाश्च पीतवर्णाः कार्या इति।।१-३।।

अधुना प्रतिमायाः प्रविभागेन फलमाह—

**आयुःश्रीबलजयदा दारुमयी मृण्मयी तथा प्रतिमा।**
**लोकहिताय मणिमयी सौवर्णी पुष्टिदा भवति ॥४॥**

**रजतमयी कीर्तिकरी प्रजाविवृद्धिं करोति ताम्रमयी।**
**भूलाभं तु महान्तं शैली प्रतिमाथवा लिङ्गम् ॥५॥**

यवो यवाकार एव। अङ्गुष्ठमध्यगतैर्यवैराढ्या धनिनो भवन्ति। अङ्गुष्ठमूलजातैर्यवैः सुतवन्तः पुत्रवन्तः। दीर्घाङ्गुलिपर्वाणः दीर्घाण्यङ्गुलिपर्वाणि येषां ते सुभगाः सौभाग्योपेता दीर्घायुषश्चिरजीविनश्च भवन्ति।।४२।।

अन्यदप्याह—

**स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निःस्वानाम्।**
**विरलाङ्गुलयो निःस्वा धनसञ्चयिनो घनाङ्गुलयः ।।४३।।**

स्निग्ध तथा गहरी रेखायें धनिकों की तथा रूखी और ऊँची रेखायें निर्धनों की होती हैं। हाथ में विरल अंगुली वाले मनुष्य निर्धन और सघन अंगुली वाले धनसञ्चय करने वाले होते हैं।।४३।।

स्निग्धा निर्मला निम्ना गम्भीरा रेखाः करगता धनिनामीश्वराणां भवन्ति। तद्व्यत्ययेन विपरीतेनास्निग्धा अनिम्ना निःस्वानां निर्धनानां भवन्ति। विरला विप्रकृष्टा अङ्गुलयः करशाखा येषां ते निःस्वा निर्धनाः। घनाङ्गुलयो धनसञ्चयिनो धनार्जनशीला भवन्ति।।४३।।

अन्यदप्याह—

**तिस्रो रेखा मणिबन्धनोत्थिताः करतलोपगा नृपतेः।**
**मीनयुगाङ्कितपाणिर्नित्यं सत्रप्रदो भवति ।।४४।।**

**वज्राकारा धनिनां विद्याभाजां च मीनपुच्छनिभाः।**
**शङ्खातपत्रशिविकागजाश्वपद्मोपमा नृपतेः ।।४५।।**

**कलशमृणालपताकाङ्कुशोपमाभिर्भवन्ति निधिपालाः।**
**दामनिभाभिश्चाढ्याः स्वस्तिकरूपाभिरैश्वर्यम् ।।४६।।**

**चक्रासिपरशुतोमरशक्तिधनुःकुन्तसन्निभा रेखाः।**
**कुर्वन्ति चमूनाथं यज्वानमुलूखलाकाराः ।।४७।।**

**मकरध्वजकोष्ठागारसन्निभाभिर्महाधनोपेताः।**
**वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ।।४८।।**

**वापीदेवकुलाद्यैर्धर्मं कुर्वन्ति च त्रिकोणाभिः।**
**अङ्गुष्ठमूलरेखाः पुत्राः स्युर्दारिकाः सूक्ष्माः ।।४९।।**

**रेखाः प्रदेशिनिगताः शतायुषं कल्पनीयमूनाभिः।**
**छिन्नाभिर्द्रुमपतनं बहुरेखारेखिणो निःस्वाः ।।५०।।**

जिसकी तीन रेखा पहुँचे से निकल कर हथेली में जाय, वह मनुष्य राजा होता है। दो मत्स्यरेखाओं से युत हथेली वाला सदावर्त्त देने वाला होता है। यदि हाथ में वज्र के समान ( मध्य में पतला और दोनों ओर विस्तृत ) रेखा हो तो वह मनुष्य धनी, मछली

के समान हो तो विद्वान् तथा शंख, छत्र, पालकी, हाथी, घोड़ा और कमल के समान रेखा हो तो राजा होता है। यदि कलश, मृणाल ( कमल की जड़ ), पताका या अंकुश के समान हाथ में रेखा हो तो वह व्यक्ति भूमि में धन गाड़ने वाला होता है। रस्सी की तरह हाथ में रेखा हो तो अति धनी और स्वस्तिक ( राजगृह-समान ) की रेखा हो तो ऐश्वर्यशाली होता है। यदि चक्र, खड्ग, फरशा, तोमर, बर्छी, धनुष या भाला के समान हाथ में रेखा हो तो सेनापति और ऊखल के समान हो तो याज्ञिक होता है। मकर ( मगर = घड़ियाल ), ध्वजा और कोष्ठागार की तरह हाथ में रेखा हो तो बहुत धनी तथा वेदी की तरह जिसका ब्रह्मतीर्थ ( अंगुष्ठमूल ) हो वह पुरुष अग्निहोत्री होता है। वापी, देवमन्दिर आदि ( सिंहासन, श्रीवृक्ष और यूप ) या त्रिभुज की तरह हाथ में रेखा हो तो वह मनुष्य धार्मिक होता है। मनुष्य के अंगुष्ठमूल में जितनी स्थूल रेखायें हों, उतने उसके पुत्र और जितनी सूक्ष्म रेखायें हों, उतनी उसकी कन्यायें होती हैं। जिनकी तर्जनी के मूल तक तीन रेखा गई हो, वे सौ वर्ष तक जीवित रहते हैं। यदि छोटी रेखा हो तो अनुपात से आयु की कल्पना करनी चाहिये। जिनके हाथ में टूटी हुई रेखा हो, वे वृक्ष से गिरते हैं। अधिक रेखायुत या रेखारहित व्यक्ति निर्धन होते हैं।।४४-५०।।

**तिस्रो रेखा इति** । मणिबन्धनोत्थितास्तिस्रो रेखाः करतलोपगाः करतले हस्ततले उपगाः प्राप्ता नृपते राज्ञो भवन्ति। मीनयुगेन मत्स्यद्वयेनाङ्कितश्चिह्नितः पाणिर्हस्तो यस्य स नित्यं सर्वकालं सत्रप्रदो भवति, मषकृद्भवतीत्यर्थः।

वज्रं मध्यक्षाममुभयाग्रविस्तृतम्, तदाकारास्तत्सदृश्यः करतले रेखा धनिनामीश्वराणां भवन्ति। मीनपुच्छनिभा मत्स्यपुच्छाकारा विद्याभाजां भवन्ति। विद्यावन्तश्च ते भवन्तीत्यर्थः। शङ्खः प्रसिद्धः, आतपत्रं छत्रम्, शिविका युग्यादिकम्, गजो हस्ती, अश्वस्तुरगः, पद्मं कमलम्, एषामुपमास्तदाकारा रेखा नृपते राज्ञो भवन्ति।

कलशः कुम्भः, मृणालं विसं स्पष्टं मध्याद् मध्याद् ग्रन्थियुक्तम्। पताका वैजयन्ती, अङ्कुशः प्रसिद्धः। एषामुपमाभिस्तदाकाराभिर्लेखाभिर्निधिपाला भूमावर्थस्थापनशीला भवन्ति। अतिधनिनश्च। दामनिभाभी रज्ज्वाभाभिश्चाढ्या ईश्वरा भवन्ति, स्वस्तिकश्चिह्नविशेषस्तद्रूपाभिस्तदाकाराभिरैश्वर्यं भवति।

चक्रमायुधम्, असिः खड्गः, परशुरायुधविशेषः कुठारः, तोमरः प्रसिद्धः, शक्तिः प्रसिद्धा, धनुश्चापम्, कुन्त आयुधविशेषः। एषां सन्निभास्तदाकारा रेखाः करतलोपगाश्चमूनाथं सेनापतिं कुर्वन्ति। उलूखलाकारा रेखा यज्वानं याज्ञिकं कुर्वन्ति।

मकरो जलप्राणी। ध्वजश्चिह्नम्। विचित्रपटनिर्मितत्वाद्वैचित्र्यमस्य भवति पताकातः। कोष्ठागारं प्रसिद्धमेव। एषां सन्निभाभिः सदृशीभी रेखाभिर्महाधनोपेता अतिधनिनः। मणिबन्धनस्योपरि ब्रह्मतीर्थमङ्गुष्ठमूले। ब्रह्मतीर्थेन अङ्गुष्ठमूलतीर्थेन वेदीनिभेन वेद्याकृतिना अग्निहोत्रिणो यजमाना भवन्ति।

वापी प्रसिद्धा चतुरस्रा पुष्करिणी। देवकुलं देवप्रासादः। आदिग्रहणात् सिंहासनश्रीवृक्षयूपा गृह्यन्ते। तैर्धर्मं कुर्वन्ति, धर्मिष्ठा भवन्ति। त्रिकोणाभिस्त्र्यस्राभिः शृङ्गाटकाकाराभिश्चशब्दाद् धर्ममेव कुर्वन्ति। अङ्गुष्ठमूले यावत्यो रेखास्तान्यपत्यानि। तासां याः स्थूलास्ते पुत्राः सुताः, याश्च सूक्ष्मास्ता दारिका दुहितारः।

प्रदेशिनी अङ्गुष्ठानन्तराः। बहुवचननिर्देशात् तिस्रो रेखा अत्र ज्ञातव्याः। प्रदेशिनीगतास्तत्प्राप्तरेखाः शतायुषं शतजीवितं कुर्वन्ति। रेखाभिरूनाभिः स्वबुद्ध्या कल्पनीयम्। यथा हस्तमध्यप्राप्ताभिः पञ्चाशत्। अन्यत्रानुपातादायुषः परिकल्पना कार्या। रेखाभिछिन्नाभिर्मध्याद्विच्छिन्नाभिर्द्रुमपतनं वृक्षपतनं भवति। बह्व्यो रेखा येषां ते बहुरेखाः, न विद्यन्ते रेखा येषां ते अरेखिणः। बहुरेखा अरेखिणश्च निःस्वा निर्धना भवन्ति। तथा च—

सुवर्तुलैर्निगूढैश्च मणिबन्धैः समन्विताः।
दृढैश्च शब्दरहितै राजानस्ते प्रकीर्तिताः।।
हीनैश्च छिन्नपाणिः स्यात् श्लथैर्दारिद्र्यभाजनः।
निम्ने करतले यस्य पितृवित्तविवर्जितः।।
निम्नेन संवृतेनैव वित्तवान् सौख्यसंयुतः।
समुत्तानकरा ये च दातारस्ते न संशयः।।
विषमैर्विषमा निःस्वा लाक्षाभैरीश्वराः करैः।
अगम्यागामिनः पीतैर्नखैर्हस्तैश्च निर्धनाः।।
शर्पशुक्तौ तुषनखा नैकवर्णा महानखाः।
स्फुटितार्धनखाश्चैव स्मृता द्रव्यविवर्जिताः।।
निर्मलैर्लोहिताभैश्च नखैर्भवति पार्थिवः।
पाण्डुरा विरला रूक्षा अङ्गुल्यः करसंस्थिताः।।
येषां ते च नरा ज्ञेया दुःखदारिद्र्यभाजनाः।
यस्य मीनसमा रेखाः कर्मसिद्धिस्तु तस्य वै।।
धनवान् स तु विज्ञेयो बहुपुत्रश्च मानवः।
तुला यस्य तु वेदिर्वा करमध्ये प्रदर्शिता।।
वाणिज्यं सिद्ध्यते तस्य पुरुषस्य न संशयः।
वेदी पाणितले यस्य द्विजस्य तु विशेषतः।।
यज्ञयाजी भवेन्नित्यं बहुवित्तश्च मानवः।
श्रीवत्समथवा पद्मं वज्रं चामरमेव वा।।
यस्य हस्ते तु दृश्येत स भवेत् पृथिवीपतिः।
शक्तितोमरखड्गाभा रेखाश्चापसमास्तथा।।
यस्य हस्ते प्रदृश्यन्ते चमूनाथं च तं विदुः।
वृक्षो वाप्यथवा शैलः करमध्ये तु दृश्यते।।

अचलं प्राप्यते राज्यं मण्डले तु न संशयः।
ध्वजं वाप्यथवा शृङ्गं दृश्यते करसंस्थितम्॥
धनेशत्वं विजानीयात् समुद्रवचनं यथा।
दक्षिणे तु कराङ्गुष्ठे यवो यस्य च दृश्यते॥
सर्वविद्याप्रवक्ताऽसौ भवतीति च निर्दिशेत्।
यस्य पाणितले रेखा कनिष्ठमूलसम्भवा॥
गता मध्ये प्रदेशिन्यां स जीवेच्छरदां शतम्।
अङ्गुष्ठमूले या रेखाः पुत्रास्ते परिकीर्तिताः॥
सूक्ष्माः कन्या विनिर्दिष्टाः समुद्रवचनं यथा।
छिन्नाभिर्वृक्षपतनं प्रभूताभिरनीश्वराः॥
अङ्गुष्ठमूलतीर्थेन यज्ञयाजी भवेन्नरः॥ इति॥४४-५०॥

अथ चिबुकाधरदशनानां लक्षणमाह—

**अतिकृशदीर्घैश्चिबुकैर्निर्द्रव्या मांसलैर्धनोपेताः।**
**विम्बोपमैरवक्रैरधरैर्भूपास्तनुभिरस्वाः ॥५१॥**

**ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च धनपरित्यक्ताः।**
**स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ॥५२॥**

अत्यन्त कृश और दीर्घ अधर वाले मनुष्य निर्धन एवं मांसयुत अधर वाले धनी होते हैं। विम्ब-फल के समान लाल और वक्रता से रहित अधर वाले राजा, छोटे अधर वाले राजा तथा फटे, खण्डित, वर्णरहित और रूखे अधर वाले मनुष्य धनहीन होते हैं। मनुष्यों के स्निग्ध, घन, तीक्ष्ण और सम दाँत शुभ होते हैं।।५१-५२।।

चिबुकमधरस्याधोभागो मुखान्तम्। अतिकृशैर्निर्मांसैरतिदीर्घैश्च चिबुकैर्निर्द्रव्या दरिद्रा भवन्ति। मांसलैश्चिबुकैर्धनोपेताः सधनाः। अधरैरोष्ठैर्विम्बोपमैरतिलोहितैरवक्रैः स्पष्टैर्भूपा राजानो भवन्ति। तनुभिरमांसलैरधरैरस्वा निर्धना भवन्ति।

ओष्ठैरुत्तरैः स्फुटितैर्भग्नैर्विखण्डितैर्दलितैर्विवर्णैर्विगतवर्णै रूक्षै निःस्नेहैश्च धनपरित्यक्ता दरिद्रा भवन्ति। दशना दन्ताः स्निग्धा निर्मला घनाश्च संहता। सुतीक्ष्णदंष्ट्रा येषां ते समाश्च सर्वे तुल्याः शुभाः। मध्यभागवर्तिनो दन्तचतुष्टयस्य पार्श्ववर्तिनी दंष्ट्रे। तथा च—

निर्मांसैश्चिबुकैर्दीर्घैर्निर्द्रव्याश्चाशुवाचिनः।
समांसलैर्धनोपेता बहुपुत्रसमावृताः॥
रक्ताधरो नरपतिर्धनवान् कमलाधरः।
स्थूलोष्ठा बहुलोमाश्च शुष्कैः क्षीणैश्च दुःखिताः॥
उत्तरोष्ठैर्लोहितैश्च धनिनः सौख्यसंयुताः।
खण्डैर्विवर्णैर्निर्द्रव्या रूक्षैर्दुःखसमन्विताः॥

कुन्दकुड्मलसङ्काशैः प्राकारैर्दशनैर्नृपः।
ऋक्षवानरदन्ताश्च नित्यं क्षुत्परिपीडिताः।।
हस्तिदन्ताः खररदाः स्निग्धदन्ता गुणान्विताः।
करालैर्विषमैर्दीर्घैर्दशनैर्दुःखजीविनः ।।
द्वात्रिंशद्दन्ता राजान एकोनश्चापि भोगवान्।
त्रिंशद्दन्ता नरा ये ते सुखदुःखस्य भागिनः।।
एकोनत्रिंशद्दशनाः पुरुषा दुःखजीविनः।
अष्टाविंशद्रदा येषां तेऽतिदुःखस्य भाजनाः।। इति।।५१-५२।।

अथ जिह्वाताल्वोर्लक्षणमाह—

**जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च भोगिनो ज्ञेया।**
**श्वेता कृष्णा परुषा निर्द्रव्याणां तथा तालु ।।५३।।**

लाल, लम्बी, श्लक्ष्ण और समान जीभ वाले मनुष्य भोगी होते हैं। सफेद, काली और रूखी जीभ वाले पुरुष निर्धन होते हैं। इसी प्रकार मनुष्य के तालु का लक्षण भी जानना चाहिये।।५३।।

जिह्वा रसना रक्ता लोहितवर्णा दीर्घा आयामिनी श्लक्ष्णा तनुप्राया सुस्पर्शा सुसमा च तुल्या भोगिनो ज्ञेया। अथवा भोगिनामिति पाठः। भोगिनां जिह्वा ज्ञेया ज्ञातव्येत्यर्थः। श्वेता पाण्डुरा कृष्णा असिता निर्द्रव्याणां दरिद्राणां भवति। तथा तालु। तथा तेनैव प्रकारेण तालु ज्ञेयम्। यथा जिह्वा रक्ता श्लक्ष्णा सुसमा च शोभना तथा ताल्वपि शोभनम्। श्वेतं कृष्णं परुषं ताल्वप्यशोभनम्। तथा च—

कृष्णजिह्वा भवेद्यस्य समला यदि वा भवेत्।
स पापवान् भवेन्मर्त्यः कुक्षा स्थूला तथा भवेत्।।
श्वेतजिह्वा नरा ज्ञेयाः शौचाचारविवर्जिताः।
पद्मपत्रसमा जिह्वा सूक्ष्मा दीर्घा सुशोभना।
न स्थूला नातिविस्तीर्णा येषां ते मनुजाधिपाः।।
निम्ना दीर्घा च ह्रस्वा च रक्ताग्रा रसना यदि।
सर्वविद्याप्रवक्ताऽसौ भवेन्नास्त्यत्र संशयः।।
कृष्णतालुर्नरो यस्तु स भवेत् कुलनाशनः।
विकृतं स्फुटितं यस्य तालु तस्य न शोभनम्।।
सिंहतालुर्नरपतिर्गजतालुस्तथैव च।
पद्मतालुर्भवेद्राजा श्वेततालुश्च निर्धनः।। इति।।५३।।

अथास्यलक्षणमाह—

**वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समं च भूपानाम्।**
**विपरीतं क्लेशभुजां महामुखं दुर्भगाणां च ।।५४।।**

सुन्दर, वर्तुलाकार, निर्मल, श्लक्ष्ण और समान मुख राजाओं का होता है। इससे उलटा ( कुरूप, वक्राकार, मलिन, अश्लक्ष्ण और विषम ) मुख भाग्यरहित लोगों का होता है।।५४।।

वक्त्रं मुखं सौम्यमनाकुलं संवृतं परिवर्तुलमविकासितम्। अमलं निर्मलं श्लक्ष्णं नातिमांसलं सुपार्श्वम्, समं तुल्यम्, भूपानां राज्ञां ज्ञेयम्। विपरीतं व्यस्तलक्षणम्। असौम्यम-संवृतमनिर्मलमश्लक्ष्णमसमं क्लेशभुजां दरिद्राणां ज्ञेयम्, महामुखमतिविस्तीर्णमास्यं दुर्भगाणां भवति। तथा च—

सौम्यं च संवृतं वक्त्रममलं यस्य देहिनः।
महाराजो भवेन्नित्यं विपरीते तु निर्धनः।। इति।।५४।।

अथ मुखलक्षणमाह—

**स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परिज्ञेयम्।**
**दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः ।।५५।।**

**चतुरस्रं धूर्तानां निम्नं वक्त्रं च तनयरहितानाम्।**
**कृपणानामतिह्रस्वं सम्पूर्णं भोगिनां कान्तम् ।।५६।।**

स्त्री के समान मुख वाले सन्तानहीन, गोल मुख वाले शठ, लम्बे मुख वाले निर्धन, भयानक मुख वाले धूर्त्त, निम्न मुख वाले पुत्रहीन, छोटे मुख वाले कृपण एवं सम्पूर्ण तथा सुन्दर मुख वाले मनुष्य भोगी होते हैं।।५५-५६।।

स्त्रीसदृशं मुखं वदनमनपत्यानामपुत्राणां भवति। मण्डलं मण्डलाकारं परिवर्तुलं शाठ्यवतां शठभावसंयुक्तानां परिज्ञेयं ज्ञातव्यम्। शठः परकार्यविमुखः। दीर्घं मुखं निर्द्रव्याणां भवति। भीरुमुखा भीतस्येव मुखं येषां ते पापकर्माणः पापानुरता भवन्ति।

चतुरस्रं चतुष्कोणं मुखं धूर्तानां परवञ्चनदक्षाणां भवति। निम्नं हीनं वक्त्रमस्पष्टं च तनयरहितानामपुत्राणां भवति। अतिह्रस्वमत्यल्पं कृपणानां भवति। कृपणोऽर्थलुब्धः स्तोकार्थश्च। सम्पूर्णं समांसलं कान्तं दीप्तिमद्भोगिनां भोगवतां च भवति। तथा च—

स्त्रीमुखं निरपत्यानां मण्डलं शाठ्यसेविनाम्।
दीर्घं मुखं च निःस्वानां भीरुवक्त्रा दुराशयाः।।
चतुरस्रं तु धूर्तानां निम्नं सुतविवर्जितम्।
कृपणानां तथा ह्रस्वं चिपिटं परजीविनाम्।।
यन्मुखं मांसलं स्निग्धं सप्रभं प्रियदर्शनम्।
वर्णाढ्यं सन्धिविश्लिष्टमजस्रं सुखभागिनाम्।। इति।।५५-५६।।

अथ श्मश्रुलक्षणमाह—

**अस्फुटिताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्नतं चैव।**
**रक्तैः परुषैश्चौराः श्मश्रुभिरल्पैश्च विज्ञेयाः ।।५७।।**

आगे से विना फटी, स्निग्ध, कोमल और नीचे को झुकी हुई दाढ़ी शुभ होती है तथा लाल, रूखी और अल्प दाढ़ी वाले चोर होते हैं।।५७।।

श्मश्रु कूर्चम्। अस्फुटिताग्रमभिन्नप्रान्तं स्निग्धं चारूक्षं मृदु कोमलं सन्नतं सम्यग् नतं शुभं प्रशस्तम्। केचिन्मृदुसमुन्नतं चैवेति पठन्ति। रक्तैर्लोहितैः परुषैः खरैरल्पैश्च श्मश्रुभिश्चौरास्तस्करा विज्ञेया ज्ञातव्याः। तथा च—

स्निग्धमस्फुटिताग्रं च सन्नतं श्मश्रु चेष्यते।
रक्तैरल्पैस्तथा रूक्षैः श्मश्रुभिस्तस्कराः स्मृताः।। इति।।५७।।

अथ कर्णलक्षणमाह—

**निर्मांसैः कर्णैः पापमृत्यवश्चर्पटैः सुबहुभोगाः।**
**कृपणाश्च ह्रस्वकर्णाः शङ्कुश्रवणाश्चमूपतयः ।।५८।।**
**रोमशकर्णा दीर्घायुषश्च धनभागिनो विपुलकर्णाः।**
**क्रूरा शिरावनद्धैर्व्यालम्बैर्मांसलैः सुखिनः ।।५९।।**

मांसरहित कान वाले मनुष्य पापकर्म से मरते हैं तथा चपटे कान वाले अधिक भोगी, छोटे कान वाले कृपण, शंकु के समान आगे से तीखे कान वाले सेनापति, रोमयुक्त कान वाले दीर्घायु, बड़े कान वाले धनी, नाड़ियों से युत कान वाले क्रूर तथा लम्बे और पुष्ट कान वाले सुखी होते हैं।।५८-५९।।

निर्मांसैर्मांसरहितैः कर्णैः पापमृत्यवः पापेन कर्मणा म्रियन्ते। चर्पटैर्विकीर्णैः सुबहुभोगा अतिभागिनो भवन्ति। ह्रस्वकर्णा अल्पश्रोत्राः कृपणा अदानशीला भवन्ति। शङ्कुश्रवणा-स्तीक्ष्णाग्रकर्णाश्चमूपतयः सेनापतयो भवन्ति।

रोमशकर्णा लोमशश्रवणा दीर्घायुषश्चिरजीविनो भवन्ति। विपुलकर्णा विस्तीर्णश्रोत्रा धनभागिनो वित्तवन्तः। शिरावनद्धैः शिराबहुलैः कर्णैः क्रूरा विषमा भवन्ति। व्यालम्बैर्दीर्घै-र्मांसलैश्च सुखिनो भवन्ति। तथा च—

ह्रस्वकर्णा महाभोगा महाकर्णाश्च ये नराः।
आवर्तकर्णा धनिनः स्निग्धकर्णास्तथैव च।।
दीर्घायुषः शङ्कुकर्णाः स्फुटकर्णा महाधनाः।
सुखान्विता दीर्घकर्णा लम्बकर्णास्तपस्विनः।।
निर्मांसैः पापमरणाश्चर्पटैर्भोगिनो नराः।
दीर्घायुषो लोमकर्णा धनिनो विपुलैः स्मृताः।।
शिरावनद्धैर्विषमा मांसलैः सुखभागिनः।। इति।।५८-५९।।

अथ गण्डनासालक्षणमाह—

**भोगी त्वनिम्नगण्डो मन्त्री सम्पूर्णमांसगण्डो यः।**
**सुखभाक् शुकसमनासश्चिरजीवी शुष्कनासश्च ।।६०।।**

**छिन्नानुरूपयागम्यगामिनो दीर्घया तु सौभाग्यम्।**
**आकुञ्चितया चौरः स्त्रीमृत्युः स्याच्चिपिटनासः ॥६१॥**

**धनिनोऽग्रवक्रनासा दक्षिणविनताः प्रभक्षणाः क्रूराः।**
**ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा सभाग्यानाम् ॥६२॥**

ऊँचे गाल वाले पुरुष धनी और मांसयुत गाल वाले राजा के मन्त्री होते हैं। तोते के समान नासिका वाले भोगी और सुखी, मांसरहित नासिका वाले दीर्घायु, कटी हुई की तरह नासिका वाले अगम्या स्त्री में गमन करने वाले, लम्बी नासिका वाले भाग्यशाली, ऊपर को खिची हुई नासिका वाले चोर, चपटी नासिका वाले स्त्री के हाथ से मृत्यु पाने वाले, आगे से टेढ़ी नासिका वाले धनी, दाहिनी ओर झुकी हुई नासिका वाले सर्वदा भक्षण में रत और क्रूर तथा सीधी और छोटे छिद्रों से युत सुन्दर पुट वाली नासिका वाले मनुष्य भाग्यशाली होते हैं।।६०-६२।।

**भोगीति**। अनिम्नावुच्चौ गण्डौ मुखगण्डौ यस्य स भोगी भोगवान् भवति। यस्य सम्पूर्णौ मांसलौ गण्डौ स मन्त्री सचिवो भवति। तथा च—

पुमान् सम्पूर्णगण्डो यः स मन्त्री समुदाहृतः।
निम्नगण्डो भवेद्यस्तु स नरो भोगवान् स्मृतः।।

**सुखभागिति**। शुकः पक्षी। शुकसमा तदाकारा नासा यस्य। अग्रः कुञ्चितलोहित इति यावत्। स सुखभाग् भवति। शुष्का निर्मांसा नासा यस्य स चिरजीवी दीर्घायुर्भवति।

छिन्नेव या नासा दृश्यते, सा छिन्नानुरूपा, तयागम्यगामिनोऽगम्यगमनशीला भवन्ति। दीर्घया नासया सौभाग्यं भवति। आकुञ्चितया नासयाऽस्पष्टया नासया चौरस्तस्करो भवति। चिपिटनासश्चर्पटघ्राणः स्त्रीमृत्युः स्याद् भवेत्, स्त्री तस्य मारयति।

अग्रवक्रा प्रान्तकुटिला नासा येषां ते धनिनो वित्तान्विताः। दक्षिणभागे विनता वक्रा नासा येषां ते प्रभक्षणा असञ्चयशीलाः क्रूरा विषमाश्च भवन्ति। ऋज्वी स्पष्टा स्वल्पच्छिद्रा अल्परन्ध्रा सुपुटा शोभनपुटा सभाग्यानां भाग्यसंयुक्तानां नासा भवति। तथा च—

शुकनासः सौख्यभागी शुष्कनासश्चिरायुषः।
छिन्नानुरूपा येषां स्यान्नासा तेऽगम्यगामिनः।।
दीर्घनासा भोगयुक्ता अग्रवक्रा धनान्विताः।
क्रूरा दक्षिणवक्राश्च स्पष्टनासा नृपोत्तमाः।।
स्त्रीमृत्यवश्चर्पटाभिः कुटिलाभिश्च तस्कराः।। इति।।६१-६२।।

अथ क्षुतलक्षणमाह—

**धनिनां क्षुतं सकृद् द्वित्रिपिण्डितं ह्रादि सानुनादं च।**
**दीर्घायुषां प्रमुक्तं विज्ञेयं संहतं चैव ॥६३॥**

जो छींकने के समय केवल एक बार छींके वह धनी तथा दो-तीन बार मिला हुआ ह्लादि ( बोलते हुये बहुतों के मध्य में जो सुनाई दे ), सानुनाद ( अतिदीर्घ ) और पूर्वोक्त संहत ( आदि, मध्य तथा अन्त में समान ) छींकने वाले मनुष्य दीर्घायु होते हैं।।६३।।

धनिनामीश्वराणां क्षुतं नासाशब्दितं सकृदेकवारं द्वित्रिपिण्डितं द्विगुणितं त्रिगुणितम्। एवं केचित्। अन्ये पुनर्व्याचक्षते। धनिनामीश्वराणां क्षुतं सकृदेकवारमेव भवति। दीर्घायुषमुद्दिश्य द्वित्रिपिण्डितमेकीकृतं ह्लादि सानुनादं प्रमुक्तं संहतं चेति। ये दीर्घायुषः चिरञ्जीविनस्तेषां द्विपिण्डितं द्विगुणितम्, त्रिपिण्डितं त्रिगुणितं भवति। तथा ह्लादि युगपद् बहूनां जल्पतामुपहत्य योऽधिकं श्रूयते स ह्लादि। तथा सानुनादं दूरादपि शनैः शनैरुच्चार्यमाणः श्रुतिपथं याति सोऽनुनादः। तथा प्रमुक्तमतिदीर्घम्। संहतं चैवमनेन प्रकारेण विज्ञेयं ज्ञातव्यम्। तत्रोदीरितः—

आदिमध्यावसानेषु तुल्यो यः स च संहतः।

क्रोधहर्षव्याधिभयादिष्वविकृतः श्रोत्रपथं याति यः स स्निग्धः। यतः सर्वजनमनोऽभिप्रेतः स रक्तः। एतदेव व्याख्यानं शोभनम्। यस्मात् पराशरः—

सकृत् क्षुतं भोगवतां द्विर्धनाय चिरायुषे।
चतुः स्याद्रोगनाशाय परमस्मात् तदीशजाः।। इति।।६३।।

अथ लोचनलक्षणमाह—

**पद्मदलाभैर्धनिनो रक्तान्तविलोचनाः श्रियो भाजः।**
**मधुपिङ्गलैर्महार्था मार्जारविलोचनैः पापाः।।६४।।**

**हरिणाक्षा मण्डललोचनाश्च जिह्मैश्च लोचनैश्चौराः।**
**क्रूराः केकरनेत्रा गजसदृशविलोचनाश्चमूपतयः।।६५।।**

**ऐश्वर्यं गम्भीरैर्नीलोत्पलकान्तिभिश्च विद्वांसः।**
**अतिकृष्णतारकाणामक्ष्णामुत्पाटनं भवति।।६६।।**

**मन्त्रित्वं स्थूलदृशां श्यावाक्षाणां भवति सौभाग्यम्।**
**दीना दृग् निःस्वानां स्निग्धा विपुलार्थभोगवताम्।।६७।।**

कमलदल के समान नेत्र वाले पुरुष धनी, लाल नेत्रान्त वाले लक्ष्मीवान, शहद के समान पीले नेत्र वाले धनी, बिल्ली के समान ( कञ्जे = कुहर ) नेत्र वाले पापी, हरिण के समान गोल और अचल नेत्र वाले चोर, नीले नेत्र वाले क्रूर, हाथी के समान नेत्र वाले सेनापति, गहरे नेत्र वाले ऐश्वर्यशाली तथा नीलकमलदल के समान नेत्र वाले पुरुष विद्वान् होते हैं। अति काले तारा वाले नेत्र उखाड़े जाते हैं। मोटे नेत्र वाले मन्त्री, कपिल वर्ण के नेत्र वाले भाग्यशाली, दीन नेत्र वाले निर्धन तथा स्थूल नेत्र वाले पुरुष धनी एवं भोगी होते हैं।।६४-६७।।

पद्मदलाभैः कमलसदृशलोचनैर्धनिनो वित्तान्विता भवन्ति। रक्तान्तविलोचना रक्ता

लोहितवर्णा अन्ताः पर्यन्ता विलोचनयोर्येषां ते रक्तान्तविलोचनास्ते च श्रियो भाजो लक्ष्मीवन्तः। मधुपिङ्गलैर्मधुवत् कपिलवर्णैर्नयनैर्महार्था महाधनाः। मार्जारो विडालस्तत्सदृशविलोचनास्तदाकाराक्षाः पापा भवन्ति।

हरिणाक्षा मृगलोचनास्तथा मण्डललोचनाः परिवर्तुलनेत्रा जिह्मैरचरैश्च लोचनैश्चौरास्तस्करा भवन्ति। केकरनेत्रा नीलाक्षाः क्रूराः कराला विषमा भवन्ति। गजसदृशविलोचना हस्तितुल्यनेत्राश्चमूपतयः सेनापतयो भवन्ति।

गम्भीरैर्नेत्रैरैश्वर्यं भवति। नीलोत्पलकान्तिभिर्नेत्रैस्तत्सदृशतारकैर्विद्वांसः पण्डिता भवन्ति। अतिकृष्णतारकाणामक्ष्णां नेत्राणामुत्पाटनं भवति। अत्यसिततारके अक्षिणी उत्पाट्येते।

स्थूला दृष्टिर्येषां ते स्थूलदृशस्तेषां मन्त्रित्वं भवति। मन्त्री भवतीत्यर्थः। श्यावाक्षाणां श्यावे मुद्राभे अक्षिणी तारके येषां तेषां सौभाग्यं भवति। दीना दैत्यं गता दृग् दृष्टिर्येषां ते निःस्वा निर्धना भवन्ति। स्निग्धा निर्मला विपुला विस्तीर्णा च दृष्टिरर्थवतां धनिनां भोगवतां च भवति। तथा च—

समे गोक्षीरवर्णाभे रक्तान्ते कृष्णतारके।
प्रसन्ने च विशाले च स्निग्धे चैवायते शुभे।।
अतसी पुष्पसङ्काशे भवेतां यस्य लोचने।
भूपतिः स तु विज्ञेयो समुद्रवचनं यथा।।
व्याघ्रचक्षुर्धनैर्युक्तः कर्कटाक्षः कलिप्रियः।
विडालहंसनेत्राश्च भवन्ति पुरुषाधमाः।।
मयूरनकुलाक्षाश्च नरास्ते मध्यमाः स्मृताः।
न श्रीस्त्यजति सर्वत्र पुरुषं मधुपिङ्गलम्।।
आज्यपिङ्गलनेत्राश्च राजानो भोगसंयुताः।
रोचनाहरितालाक्ष गजपिङ्गा धनेश्वराः।।
बलवन्तो गुणोपेताः पृथिव्यां चक्रवर्तिनः।
तप्तहाटकवर्णाभे भवेतां यस्य लोचने।।
भूपतिः स तु विज्ञेयः समुद्रवचनं यथा।
द्विमात्रस्पन्दिनो ये तु धनिनस्ते प्रकीर्तिताः।।
त्रिमात्रस्पन्दिनो ज्ञेयाः पुरुषाः सुखजीविनः।
चतुर्मात्रनिमेषश्च धनवान् परिकीर्तितः।।
दीर्घायुषो धर्मरताः पञ्चमात्रनिमेषिणः।। इति।।६४-६७।।

अथ भ्रूलक्षणमाह—

**अभ्युन्नताभिरल्पायुषो विशालोन्नताभिरतिसुखिनः।**
**विषमभ्रुवो दरिद्रा बालेन्दुनतभ्रुवः सधनाः ।।६८।।**

**दीर्घासंसक्ताभिर्धनिनः खण्डाभिरर्थपरिहीनाः ।**
**मध्यविनतभ्रुवो ये ते सक्ताः स्त्रीष्वगम्यासु ॥६९॥**

मध्य में ऊँची भ्रू वाले पुरुष अल्पायु, बड़ी और ऊँची भ्रू वाले अतिसुखी, विषम ( एक में बड़ी तथा एक में छोटी ) भ्रू वाले निर्धन, बाल चन्द्र की तरह झुकी हुई भ्रू वाले धनवान, लम्बी तथा परस्पर विना मिली भ्रू वाले धनी, टूटी हुई भ्रू वाले निर्धन तथा मध्य में नत भ्रू वाले मनुष्य अगम्या स्त्री में गमन करने वाले होते हैं।।६८-६९।।

अभ्युन्नताभिरभिमुख्येनोच्चाभिर्भूभिरल्पायुषः स्वल्पजीविनो भवन्ति। विशालाभिर्विस्तीर्णाभिरुन्नताभिरुच्चाभिरतिसुखिनो भवन्ति। ये सर्वे विषमभ्रुवोऽतुल्यभ्रुवस्ते दरिद्रा निर्धना भवन्ति। बालेन्दुसदृश्यो बालचन्द्रतुल्या नता भ्रुवो येषां ते सधनाः।

दीर्घाश्च ता असंसक्ता दीर्घासंसक्तास्ताभिर्दीर्घासंसक्ताभिर्भ्रूभिर्धनिनो भवन्ति; खण्डाभिरर्थपरिहीना दरिद्रा भवन्ति। ये मनुष्या मध्यविनतभ्रुवो मध्याद् विनता अस्पष्टा भ्रुवो येषां ते अगम्यासु स्त्रीषु सक्ता निरता भवन्ति। तथा च—

अभ्युन्नताभिः स्वल्पायुर्विशालाभिः सुखान्विताः।
मध्योन्नतभ्रुवो ये च पापसक्ताश्च ते नराः।।
बालेन्दुभ्रूसमाश्चाढ्या दरिद्रा विषमभ्रुवः।
असंलग्नभ्रुवो ये तु धनिनस्ते नराः स्मृताः।।
खण्डाभिर्निर्धना ज्ञेया विषमाभिर्नराधमाः।। इति।।६८-६९।।

अथ शङ्खललाटलक्षणमाह—

**उन्नतविपुलैः शङ्खैर्धनिनो निम्नैः सुतार्थसन्त्यक्ताः ।**
**विषमललाटा विधना धनवन्तोऽर्द्धेन्दुसदृशेन ॥७०॥**

**शुक्तिविशालैराचार्यता शिरासन्ततैरधर्मरताः ।**
**उन्नतशिराभिराढ्याः स्वस्तिकवत् संस्थिताभिश्च ॥७१॥**

**निम्नललाटा वधबन्धभागिनः क्रूरकर्मनिरताश्च ।**
**अभ्युन्नतैश्चमूपाः कृपणाः स्युः संवृतललाटाः ॥७२॥**

ऊँची तथा बड़ी शंख ( कनपटी ) वाले धनी तथा नीची शंख वाले पुरुष पुत्र तथा धन से रहित होते हैं। टेढ़ी ललाट वाले धनी, सीप के समान विशाल ललाट वाले आचार्य, नाड़ियों से व्याप्त ललाट वाले पाप में रत, ललाट के मध्य में ऊँची नाड़ी वाले धनी और ललाट में स्वस्तिक की तरह रेखा वाले पुरुष धनाढ्य होते हैं। निम्न ललाट वाले वध, बन्धन के भागी और पाप कर्म में रत, ऊँचे ललाट वाले राजा तथा गोल ललाट वाले कृपण होते हैं।।७०-७२।।

उन्नतैरुच्चैर्विपुलैर्विस्तीर्णैः शङ्खैर्धनिन ईश्वरा भवन्ति। निम्नैरनुच्चैः शङ्खैः सुतैः पुत्रैरर्थैर्धनैः सन्त्यक्ता रहिता भवन्ति। तथा च—

उन्नतैर्विपुलैः शङ्खैर्धनिनः सुखजीविनः।
सुतार्थरहिता निम्नैर्मानुषा दुःखभागिनः।।

विषममसमं ललाटं मुखपृष्ठं येषां ते निर्धना दरिद्रा भवन्ति। अर्धेन्दुसदृशेनार्धचन्द्रतुल्येन ललाटेन धनवन्त ईश्वरा भवन्ति।

शुक्तिविशालैः शुक्तिविस्तीर्णैर्ललाटैराचार्यता आचार्यत्वं भवति। परोपदेशक आचार्यः। शिरासन्ततैः शिराबहुलैर्ललाटैरधर्मरता भवन्ति। उन्नताभिः शिराभिर्ललाटगताभिराढ्या ईश्वरा भवन्ति। स्वस्तिकवत् स्वस्तिकाकारेण संस्थिताभिः शिराभिराढ्या भवन्ति।

निम्नं ललाटं येषां ते निम्नललाटा वधे कुट्टने बन्धे च भागिनो योग्याः क्रूरे विषमे च कर्मणि कार्ये निरताः सक्ता भवन्ति। अभ्युन्नतैरभिमुख्येनोन्नतैर्ललाटैश्चमूपाः सेनापतयो भवन्ति। संवृतं परिवर्तुलमल्पं च ललाटं येषां ते कृपणा अदानशीलाः स्युर्भवेयुः। तथा च—

ललाटेनार्धचन्द्रेण भवन्ति पृथिवीश्वराः।
विपुलेन ललाटेन महाधनयुताः स्मृताः।।
विषमेनाधना ज्ञेयाः पापा मर्त्याः शिराततैः।
निम्नेन तु ललाटेन क्रूरकर्मरता नराः।।
अभ्युन्नतैश्चमूपाः स्युः संवृतैः कृपणाः स्मृताः।। इति।।७०-७२।।

अथ रुदितलक्षणमाह—

**रुदितमदीनमनश्रु स्निग्धं च शुभावहं मनुष्याणाम्।**
**रूक्षं दीनं प्रचुराश्रु चैव न शुभप्रदं पुंसाम्।।७३।।**

मनुष्यों का दीनताहीन, आँसुओं से रहित और स्निग्ध रुदन अच्छा होता है तथा रूखे, दीन और बहुत आँसुओं से युत रुदन अच्छा नहीं होता है।।७३।।

यद्रुदितमदीनं दैन्यरहितम्। अनश्रु वाष्परहितम्। स्निग्धमरूक्षमेवंविधं मनुष्याणां पुरुषाणां शुभावहं प्रशस्तम्। रूक्षं परुषम्। दीनं दैन्ययुक्तम्। प्रचुराश्रु बहुवाष्पम्। पुंसां नराणां न शुभदम्। तथा च—

अदीनाश्रुहतं स्निग्धं रुदितं च शुभावहम्।
रूक्षं दीनं वाष्पयुतं पुरुषाणामनिष्टदम्।। इति।।७३।।

अथ हसितलक्षणमाह—

**हसितं शुभदमकम्पं सनिमीलितलोचनं तु पापस्य।**
**दुष्टस्य हसितमसकृत् सोन्मादस्यासकृत् प्रान्ते।।७४।।**

**विना काँपते हुये हँसना शुभ होता है तथा आँख मूँद कर हँसने वाला पापी, बार-बार हँसने वाला दुष्ट तथा हँसने के अन्त में पुनः-पुनः हँसना उन्मादयुत पुरुष का लक्षण है।।७४।।**

यच्च हसितमकम्पं कम्परहितं तच्छुभदं प्रशस्तम्। शरीरस्य कम्पश्चलनमवयवानां येन नोत्पद्यते। सनिमीलितलोचनमतिसङ्कुचितनयनं हसितं पापस्य पापकर्मणः। असकृत् पुनः पुनर्दुष्टस्य सदोषस्य हसितम्। प्रान्ते हसनान्तेऽसकृद्धसितं सोन्मादस्योन्मादयुक्तस्य भवति। तथा च—

हसितं कम्परहितं नृपाणामन्यथाऽशुभम्।
असकृद्दोषयुक्तस्य मीलिताक्षस्य चाशुभम्।। इति।।७४।।

अथ ललाटरेखालक्षणमाह—

**तिस्रो रेखाः शतजीविनां ललाटायताः स्थिता यदि ताः।**
**चतसृभिरवनीशत्वं नवतिश्चायुः सपञ्चाब्दा।।७५।।**

**विच्छिन्नाभिश्चागम्यगामिनो नवतिरप्यरेखेण।**
**केशान्तोपगताभी रेखाभिरशीतिवर्षायुः।।७६।।**

**पञ्चभिरायुः सप्ततिरेकाग्रावस्थिताभिरपि षष्टिः।**
**बहुरेखेण शतार्धं चत्वारिंशच्च वक्राभिः।।७७।।**

**भ्रूलग्नाभिस्त्रिंशद्विंशतिकश्चैव वामवक्राभिः।**
**क्षुद्राभिः स्वल्पायुर्न्यूनाभिश्चान्तरे कल्प्यम्।।७८।।**

ललाट में तीन रेखा वाले पुरुष सौ वर्ष जीवित रहते हैं एवं चार रेखा वाले राजा होते हैं और पञ्चानवे वर्ष तक जीवित रहते हैं। ललाट में टूटी हुई रेखा वाले अगम्या स्त्री में गमन करने वाले और नब्बे वर्ष जीवित रहने वाले होते हैं, रेखाओं से रहित ललाट वाले नब्बे वर्ष जीते हैं तथा केशान्त तक रेखा वाले अस्सी वर्ष जीते हैं। पाँच रेखायुत ललाट वाले सत्तर वर्ष जीते हैं, ललाट में स्थित समस्त रेखाओं के अग्रभाग मिलें हो तो साठ वर्ष की आयु होती है। छः, सात आदि बहुत रेखाओं से युत ललाट वाले पचास वर्ष जीते हैं। यदि ललाट में टेढ़ी रेखा हो तो चालीस वर्ष की आयु होती है। यदि ललाट में भ्रू से लगी रेखा हो तो तीस वर्ष की आयु होती है। यदि ललाट के वाम भाग में टेढ़ी रेखा हो तो बीस वर्ष की आयु होती है। छोटी रेखा हो तो वह व्यक्ति बीस वर्ष से भी कम अवधि तक ही जीवित रहता है। यदि न्यून ( एक या दो ) रेखा से युत ललाट हो तो भी बीस वर्ष से कम आयु होती है। बीच में अपनी बुद्धि से आयु की कल्पना करनी चाहिये। जैसे तीन रेखा वाले सौ वर्ष और चार रेखा वाले पञ्चानबे वर्ष जीवित रहते हैं; अतः साढ़े तीन रेखा वाले साढ़े सत्तानवे वर्ष जीवित रहेंगे। इसी प्रकार अन्यत्र भी हिसाब लगा कर आयु का निश्चय करना चाहिये।।७५-७८।।

**तिस्रो रेखा इति।** ललाटे मुखपृष्ठे आयता दीर्घाः स्थिता रेखास्तिस्रः। शतजीविनां शतायुषां भवन्ति। चतसृभिर्ललाटायतरेखाभिरवनीशत्वं राज्यं भवति। नवतिः सपञ्चाब्दा पञ्चभिर्वर्षैर्युक्ता नवतिरायुर्जीवितं भवति।

विच्छिन्नाभिश्छेदयुक्ताभिर्ललाटरेखाभिरगम्यगामिनोऽगम्यागमनशीला भवन्ति, नवतिश्च वर्षाणां तेषामायुर्भवति। अरेखेण रेखावर्जितेन ललाटेन नवतिरपि वर्षाणामायु:। अपिशब्दोऽत्र चार्थे। अगम्यागामिनश्च भवन्ति। केशान्तो यत: प्रभृति केशानामुत्पत्ति:। केशान्तोपगताभिस्तत्र प्राप्ताभिर्लेखाभिरशीतिर्वर्षाणामायुर्भवति।

पञ्चभिर्लेखाभिर्ललाटस्थिताभि: सप्ततिर्वर्षाणामायु:। एकस्मिन्नग्रे अवस्थिता एकाग्रावस्थितास्ताभि: सर्वाभिरेकाग्रावस्थिताभिर्मिलिताभिरविच्छिन्नप्राप्ताभि: षष्टिर्वर्षाणामायु:। बहुरेखेण षड्भी रेखाभिरुपलक्षितेन शतार्धं पञ्चाशद्वर्षाणामायु:। रेखाभिर्वक्राभिरस्पष्टाभिश्चत्वारिंशद्वर्षाण्यायु:।

रेखाभिर्भ्रूलग्नाभि: त्रिंशद्वर्षाणि। वामभागवक्राभि: कुटिलाभिर्विंशतिक:, विंशतिर्वर्षाणां जीवितपरिमाणं यस्य स विंशतिक:। क्षुद्राभि: सूक्ष्माभिरल्पायुर्विंशतेरूनमायु:। उक्तान्न्यूनाभी रेखाभिर्द्वाभ्यामेकया वा चशब्दात् स्वल्पायुरेव। अन्तरे मध्ये कल्प्यं कल्पनीयं स्वबुद्ध्योह्यम्। यथा तिस्रो रेखा: शतजीविनामिति, चतसृभिर्नवतिश्चायुष: सपञ्चाब्दा इत्युक्तम्। अत्रान्तरे सार्धास्तिस्रो रेखा यस्य तस्य सार्धसप्तनवतिर्वर्षाण्यायुरित्याद्यन्तरे कल्पनीयम्। तथा च—

रेखा: पञ्च ललाटे तु यस्यासौ धनवान् स्मृत:।
शतं जीवति वर्षाणामैश्वर्यमधिगच्छति।।
चतू रेखो ह्यशीतिस्तु त्रिभि: सप्ततिरेव च।
षष्टिर्द्वाभ्यां तु रेखाभ्यां चत्वारिंशत् तथैकया।।
अरेखेण ललाटेन भवन्ति निधिपालका:।
रेखाछेदैस्तु विज्ञेया: पापकर्मरता नरा:।।
अल्पायुषस्तथाल्पासु व्याधियुक्ताश्च ते सदा।
त्रिशूलं पट्टिसं वापि ललाटे यस्य दृश्यते।।
ऐश्वर्यं तस्य विज्ञेयं सेनानां नायकश्च स:।। इति।।७५-७८।।

अथ शिरोलक्षणमाह—

**परिमण्डलैर्गवाढ्याश्छत्राकारै: शिरोभिरवनीशा:।**
**चिपिटै: पितृमातृघ्ना: करोटिशिरसां चिरान्मृत्यु: ।।७९।।**

**घटमूर्धाध्वानरुचिर्द्विमस्तक: पापकृद्धनैस्त्यक्त:।**
**निम्नं तु शिरो महतां बहुनिम्नमनर्थदं भवति ।।८०।।**

गोल शिर वाले पुरुष गायों से युत, छत्र की तरह ऊपर से विस्तीर्ण शिर वाले राजा, चपटे शिर वाले पिता-माता के घातक और करोटि ( शिरस्त्राण ) के समान शिर वाले दीर्घायु होते हैं। घड़े के समान शिर वाले पुरुष पापी और निर्धन, निम्न शिर वाले प्रतिष्ठित तथा अतिनिम्न शिर वाले पुरुष अनर्थकारी होते हैं।।७९-८०।।

परिमण्डलै: परिवर्तुलै: शिरोभिर्मस्तकैर्गवाढ्या गोबहुला भवन्ति। छत्राकारैश्छत्राकृति-

भिरूर्ध्वभागविस्तृतैरवनीशा राजानः। चिपिटैश्चर्पटैः पितृमातृघ्नाः। पितृमातृहन्तारः। करोटि-शिरस्त्राणं करोटिसदृशशिरसां चिराद्बहुकालेन मृत्युर्भवति।

घटमूर्धा कुम्भसदृशशिरा अध्वानरुचिरध्वशीलो भवति। द्विमस्तको द्विशीर्षः पापकृत् पापकर्ता धनैस्त्यक्तो निर्धनो भवति। महतां प्रधानानामेव निम्नं तु शिरो भवति। बहुनिम्न-मतिनिम्नं शिरोऽनर्थदं दुःखदं भवति। तथा च—

उत्क्रान्तिदो निम्नशिरा अल्पोपहत एव च।
छत्राकारशिरा राजा गवाढ्यः परिमण्डलैः।।
विषमं तद्दरिद्राणां शिरो दीर्घं चिरायुषाम्।
नागकुम्भशिरा राजा समं सर्वत्र भोगिनः।। इति।।७९-८०।।

अधुना मूर्धजलक्षणान्याह—

**एकैकभवैः स्निग्धैः कृष्णैराकुञ्चितैरभिन्नाग्रैः।**
**मृदुभिर्न चातिबहुभिः केशैः सुखभाग् नरेन्द्रो वा ॥८१॥**
**बहुमूलविषमकपिलाः स्थूलस्फुटिताग्रपरुषह्रस्वाश्च।**
**अतिकुटिलाश्चातिघनाश्च मूर्धजा वित्तहीनानाम् ॥८२॥**

जिसके एक रोमकूप में एक-एक, काले, स्निग्ध, थोड़े से कुटिल, विना फूटे अग्र भाग वाले, कोमल तथा घने केश हों तो ऐसा पुरुष सुखी या राजा होता है। एक रोमकूप में अनेक, विषम ( कोई छोटे तथा कोई बड़े ), कपिल, मोटे, फूटे अग्र भाग वाले, रूखे, छोटे, बहुत कुटिल और बहुत घने केश निर्धनों के होते हैं।।८१-८२।।

केशैरेकैकभवैः। एकैकस्मिन् रोमकूपे भवन्त्येकैकभवाः, तैस्तथाभूतैः। स्निग्धैररूक्षैः। कृष्णैरसितैः। आकुञ्चितैः कुटिलैः। अभिन्नाग्रैरस्फुटितप्रान्तैः। मृदुभिः कोमलैः। न चाति-बहुभिरघनैः। एवंविधैः केशैः सुखभाक् सुखितो भवति, नरेन्द्रो वा राजा भवति।

बहुमूला एकैकस्मिन् रोमकोपे बहूनां सम्भवात्। विषमा असमाः। केचिद् ह्रस्वाः केचिद् दीर्घाः। कपिलाः कपिलवर्णाः। स्थूला असूक्ष्माः। स्फुटिताग्रा भिन्नभिन्नप्रान्ताः। परुषा रूक्षाः। ह्रस्वा अदीर्घाः। अतिकुटिला अतिकुञ्चिताः। अतिघनाः सन्तता मूर्धजाः केशा वित्तविहीनानां निर्धनानां भवन्ति। तथा च—

एकैकसम्भवाः स्निग्धाः कृष्णा नातिघनाः कचाः।
पूजिता विपरीताश्च निर्धनानां प्रकीर्तिताः।।

आचार्येणोक्तम्—'सामुद्रविद्वदति यातमनागतं वेत्यतोऽत्रास्माभिः सामुद्राणि पुरुष-लक्षणान्युदाहृतानि यावदाचार्यस्य तेभ्योऽप्यधिकमस्तीति ज्ञेयम्' इति।।८१-८२।।

अधुनैतदेव सर्वं संक्षेपेणाह—

**यद्यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धं च।**
**तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्वम् ॥८३॥**

शरीर के जो-जो अंग रूखे, मांसरहित और नाड़ियों से व्याप्त हों, वे सभी अशुभ कहे गये हैं तथा इनसे विपरीत ( स्निग्ध, मांसयुत और नाड़ियों से रहित ) अंग शुभ होते हैं।।८३।।

यद्गात्रमवयवं रूक्षमस्निग्धं मांसविहीनं निर्मांसं शिरावनद्धं शिरासन्ततं तत्तद्गात्रमनिष्टमशुभं प्रोक्तं कथितम्। अतोऽस्माद्विपरीतं सर्वं निःशेषं शुभं स्निग्धं समांसमशिरालमित्यर्थः।।८३।।

अधुना महापुरुषलक्षणमाह—

**त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ।**
**सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च ॥८४॥**

जिसके तीन अंग विस्तीर्ण, तीन गम्भीर, छः ऊँचे, चार छोटे, सात लाल और पाँच अंग लम्बे या सूक्ष्म हों, वह पुरुष राजा होता है।।८४।।

यस्त्रिष्वङ्गेषु विपुलो विस्तीर्णः। गम्भीरस्त्रिष्वेव। षडुन्नतः षड् उन्नतानि यस्य। चतुर्ह्रस्वश्चत्वारि ह्रस्वानि यस्य। सप्तसु रक्तो लोहितः। पञ्चसु दीर्घश्चायामी। पञ्चस्वेव सूक्ष्मश्च स राजा नृपो भवति।।८४।।

अथैतेषामेव प्रविभागमाह—

**नाभी स्वरः सत्त्वमिति प्रशस्तं गम्भीरमेतत्त्रितयं नराणाम् ।**
**उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम् ॥८५॥**

**वक्षोऽथ कक्षा नखनासिकास्यं कृकाटिका चेति षडुन्नतानि ।**
**ह्रस्वानि चत्वारि च लिङ्गपृष्ठं ग्रीवा च जङ्घे च हितप्रदानि ॥७६॥**

**नेत्रान्तपादकरताल्वधरोष्ठजिह्वा**
**रक्ता नखाश्च खलु सप्त सुखावहानि ।**
**सूक्ष्माणि पञ्चदशनाङ्गुलिपर्वकेशाः**
**साकं त्वचा कररुहा न च दुःखितानाम् ॥८७॥**

**हनुलोचनबाहुनासिकाः स्तनयोरन्तरमत्र पञ्चमम् ।**
**इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥८८॥**

पुरुषों के नाभि, शब्द, सत्त्व ( एक प्रकार का चित्त का गुण = अविकारं सत्त्वं व्यसनाभ्युदयागमे )—इन तीन का गम्भीर होना तथा छाती, ललाट, मुख—इन तीन का विस्तीर्ण होना श्रेष्ठ होता है। पुरुषों के छाती, कक्षा, नख, नासिका, मुख, कृकाटिका ( घेंटू )—ये ६ अंग ऊँचे तथा लिंग, पीठ, गरदन, जंघा—ये चार छोटे हों तो शुभ देने वाले होते हैं। पुरुषों के नेत्रान्त भाग, पादतल, हाथ, तालु, अधर, जीभ, नख—ये सात अंग रक्त वर्ण हों तो सुख देने वाले होते हैं। दाँत, अंगुलियों के पर्व, केश, त्वचा, नख—ये पाँच अंग सूक्ष्म दुःखियों के नहीं होते अर्थात् जिनके ये अंग सूक्ष्म हों,

वे सुखी होते हैं। हनु, नेत्र, बाहु, नासिका, दोनों स्तनों के मध्यभाग—ये पाँच अंग दीर्घ राजाओं के अतिरिक्त और किसी के नहीं होते हैं।।८५-८८।।

नाभी शरीरमध्यस्थानम्। स्वरः शब्दः। सत्त्वं गुणभावः। तस्य लक्षणम्—

अविकारकरं सत्त्वं व्यसनाभ्युदयागमे।

एतत् त्रितयं नराणां पुरुषाणां गम्भीरं प्रशस्तम्। उरो वक्षः। ललाटं मुखपृष्ठम्। वदनं वक्त्रम्। सकलमेतत् त्रितयं पुंसां पुरुषाणां विस्तीर्णं प्रशस्तम्।

वक्ष उरः। अथशब्दश्चार्थे। कक्षाशब्देन शरीरमध्यभाग उच्यते। नखाः कररुहाः। नासिका घ्राणम्। आस्यं वक्त्रम्। कृकाटिका ग्रीवापश्चिमभागः। एतानि च षडुन्नतानि उच्चानि हितप्रदानि प्रशस्तानि। लिङ्गं मेढ्रम्। पृष्ठं शरीरपश्चिमभागः। ग्रीवा शिरोधरा। जङ्घे। चशब्दः सर्वत्र समुच्चये। एतानि चत्वारि ह्रस्वानि अदीर्घाणि हितप्रदानि प्रशस्तानि।

नेत्रान्तं चक्षुःपर्यन्तम्। पादौ चरणौ। करौ हस्तौ। ताल्वास्यपृष्ठम्। अधर ओष्ठः। जिह्वा रसना। नखाः कररुहाः। एतानि सप्त रक्तानि लोहितानि सुखावहानि सुखप्रदानि। दशना दन्ताः। अङ्गुलिपर्वाणि करशाखाश्रिता रेखाः। केशा मूर्धजाः। त्वचा चर्मणा साकं सह कररुहा नखाः। एतानि पञ्च सूक्ष्माणि न दुःखितानां भवन्ति, अपि तु सुखितानां भवन्तीत्यर्थः।

हनुनी प्रसिद्धे। लोचने नेत्रे। बाहू भुजौ। नासिका घ्राणम्। स्तनयोरन्तरं मध्यम्। अत्रास्मिन् वर्गे पञ्चमसङ्ख्यम्। इत्येतत् पञ्चकं दीर्घमह्रस्वं नृणां पुंसामभूभृतामराजानां न भवन्ति। येषां च भवन्ति ते राजानो भवन्तीत्यर्थः। तथा च गर्गः—

चतुर्दशसमो द्वन्द्वश्चतुःकृष्णश्चतुःसमः।
दशपद्मो दशबृहत् त्रिशुक्लः शस्यते नरः।।
पादौ गुल्फौ स्फिजौ पार्श्वे वृषणौ चक्षुषी स्तनौ।
स्कन्धौष्ठौ वंक्षणे जङ्घे हस्तौ बाह्वंसकौ तथा।।
चतुर्दशसमद्वन्द्वः समुद्रो नृषु शंसति।
अक्षितारे भ्रुवौ श्मश्रुकेशाश्चैवासिताः शुभाः।।
अङ्गुल्यो हृदयं नेत्रे दशनाश्च समा नृणाम्।
चत्वारः सम्प्रशस्यन्ते सदैश्वर्यसुखावहाः।।
जिह्वौष्ठतालु चास्यं च मुखं नेत्रे स्तनौ नखाः।
हस्तौ पादौ च शस्यन्ते पद्माभा दश देहिनाम्।।
पाणिपादमुरो ग्रीवा वृषणौ हृदयं शिरः।
ललाटमुदरं पृष्ठं बृहन्तः पूजिता दश।।
नेत्रे ताराविरहिते दशनाश्चलिताः शुभाः।
एतच्च लक्षणं कृत्स्नं नराणां समुदाहृतम्।।

पञ्चदीर्घश्चतुर्ह्रस्व: पञ्चसूक्ष्म: षडुन्नत:।
पञ्चरक्तस्त्रिविस्तीर्णस्त्रिगम्भीर: प्रशस्यते।।
बाहू नेत्रान्तरे चापि हनुनी वृषणौ तथा।
स्तनयोरन्तरं चैव पञ्चदीर्घ: प्रशस्यते।।
ग्रीवा प्रजननं श्रोणिर्ह्रस्वे जङ्घे च पूजिते।
तथेतरेषु सर्वेषु सर्वमेव प्रशस्यते।।
सूक्ष्माण्यङ्गुलिपर्वाणि दन्ता रोमाणि च च्छवि:।
तथा नखाश्च सर्वे च पञ्चसूक्ष्म: प्रशस्यते।।
कक्षाक्षिवक्षांसि तथा मुखं पृष्ठं कृकाटिका।
सर्वभूतेषु निर्दिष्ट: षडुत्सेध: प्रशस्यते।।
पाणी पादौ तथा चास्यमुभे नेत्रे स्तनौ नखा:।
पञ्च रक्तानि यस्याहुर्मनुजेन्द्रं तमादिशेत्।।
उरो मुखं ललाटं च त्रिविस्तीर्ण: प्रशस्यते।
सत्त्वं स्वरश्च नाभिश्च त्रिगम्भीर: प्रशस्यते।।

इति क्षेत्रम्।।८५-८८।।

अथ छायालक्षणमाह—

**छायाशुभाशुभफलानि निवेदयन्ती**
**लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञै: ।**
**तेजोगुणान् बहिरपि प्रविकाशयन्ती**
**दीपप्रभा स्फटिकरत्नघटस्थितेव ।।८९।।**

छाया के लक्षण को जानने वाले मनुष्यों को शुभाशुभ फल निवेदन करने वाली और स्फटिक रत्नों से बने हुये घड़े में स्थित दीपप्रभा की तरह तेजसम्बन्धी गुणों को बाहर में प्रकाशित करने वाली छाया का विचार करना चाहिये।।८९।।

छाया शरीरकान्ति: शुभानि अशुभानि च फलानि निवेदयन्ती कथयन्ती। लक्षणज्ञैश्छाया-चिह्नज्ञैश्छाया लक्ष्या लक्षणीया, विचार्येत्यर्थ:। केषु? मनुष्यपशुपक्षिषु। मनुष्या: पुरुषा:। पशवश्चतुष्पदा:। पक्षिणो विहङ्गमा:। सा च शरीरान्तर्वर्तिनी बहिरपि शरीरबाह्येऽपि तेजो-गुणान् तेज:सम्बन्धिगुणान् प्रकर्षेणातिशयेन विकाशयन्ती प्रकाशयन्ती। कथम्? दीपप्रभा स्फटिकरत्नघटस्थितेव, स्फटिकश्चासौ रत्नं च तत् स्फटिकरत्नं, स्फटिकरत्नस्य घट: स्फटिकरत्नघट:, स्फटिकरत्नघटाभ्यन्तरस्थिता दीपप्रभा दीपकान्तिर्यथा बहिरपि तेजोगुणान् प्रविकाशयति, तथान्तरस्था छाया विकाशयतीत्यर्थ:।

तत्र तावत् पञ्चानां महाभूतानां सम्बन्धिन्य: पञ्च च्छाया भवन्ति। प्रथमत एव जातक उक्तम्—

छायां महाभूतकृतां च सर्वे निर्व्यञ्जयन्ति स्वदशामवाप्य।
क्ष्वम्ब्वग्निवाय्वम्बरजान् गुणांश्च नासास्यदृक्त्वक्श्रवणानुमेयान्।। इति।।८९।।

तत्रादावेव पार्थिवच्छायालक्षणमाह—

**स्निग्धद्विजत्वग्नखरोमकेशाश्छाया सुगन्धा च महीसमुत्था।**
**तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृत्तिम् ।।९०।।**

जिस प्राणी के दाँत, त्वचा, नख, रोम और शिर के बाल स्निग्ध तथा शरीर सुगन्धित हो, उसके ऊपर भूमि की छाया जाननी चाहिये। भूमि की छाया पुष्टि, धन-लाभ, अभ्युदय और प्रति दिन धर्म में प्रवृत्ति कराती है।।९०।।

महीसमुत्था भूमिजा छाया यस्य जन्तोर्भवति यदा, तदा तस्य द्विजा दन्ताः, त्वक् चर्म, नखाः, कररुहाः, रोमाण्यङ्गजानि, केशा मूर्धजाः। एते सर्व एव स्निग्धाः सस्नेहा भवन्ति। तथा सा छाया शरीरकान्तिः सुगन्धा शोभनगन्धा भवति। तस्य जन्तोः शरीरं शुभगन्धं भवतीत्यर्थः। सा च च्छाया तुष्टिश्चित्तपरितोषः। अर्थलाभो धनप्राप्तिः। अभ्युदयः कार्याणामाभिमुख्येनोदयः प्रादुर्भावः। एतान् करोति। तथा अहन्यहनि प्रतिदिनं धर्मस्य प्रवृत्तिं प्रवर्तनं करोति। केचिद्धर्मस्य चाहन्यहनि प्रवृद्धिमिति पठन्ति।।९०।।

अधुनाऽऽप्यच्छायालक्षणमाह—

**स्निग्धा सिताच्छहरिता नयनाभिरामा**
**सौभाग्यमार्दवसुखाभ्युदयान् करोति।**
**सर्वार्थसिद्धिजननी जननीव चाप्या**
**छाया फलं तनुभृतां शुभमादधाति ।।९१।।**

जल की छाया स्निग्ध, श्वेत, स्वच्छ, नीली और नेत्रों को प्रिय लगने वाली होती है। यह छाया सौभाग्य, अक्रूरता, सुख और अभ्युदय करने वाली, समस्त कार्यों को सिद्ध करने वाली तथा माता की तरह हित करने वाली होती है।।९१।।

आप्या वारुणी छाया स्निग्धा स्नेहसंयुक्ता विमलेत्यर्थः। सिता श्वेतवर्णा गौरप्राया। अच्छहरिता अच्छा चासौ हरिता अच्छहरिता निर्मलनीलवर्णा। नयनाभिरामा नयना-भ्यामाभिमुख्येन रमते यस्याम्। तुष्टिजननीत्यर्थः। सा च सौभाग्यं सर्वजनवाल्लभ्यं मार्दवम-क्रूरतां सुखं शरीरसौख्यमभ्युदयं कार्याणामेतत् करोति। तथा सर्वार्थसिद्धिजननी सर्वार्थानां सिद्धिं जनयति। जननीव मातेव, यथा माता सर्वप्राणिनां हितकरी तथेति। सा च तनुभृतां शरीरिणां शुभं फलमादधाति करोति।।९१।।

अधुनाऽऽग्नेयच्छायालक्षणमाह—

**चण्डाधृष्या पद्महेमाग्निवर्णा**
**युक्ता तेजोविक्रमैः सप्रतापैः।**

**आग्नेयीति प्राणिनां स्याज्जयाय**
**क्षिप्रं सिद्धिं वाञ्छितार्थस्य दत्ते ॥९२॥**

अग्नि की छाया क्रोधशीला, अधृष्या ( किसी से तिरस्कार को नहीं पाने वाली ), कमल, अग्नि और सुवर्ण के समान कान्ति वाली तथा तेज, पराक्रम और प्रताप से युत होती है। अग्नि की छाया प्राणियों की जय के लिये होती है तथा अति शीघ्र ही अभीष्ट अर्थ की सिद्धि देने वाली होती है।।९२।।

आग्नेयी छाया चण्डा क्रोधशीला। अधृष्या अनभिभवनीया। पद्महेमाग्निवर्णा, पद्मस्य कमलस्य हेम्न: सुवर्णस्याग्नेर्हुताशनस्य सदृशवर्णा तुल्यकान्ति:। तथा युक्ता तेजोविक्रमै: सप्रतापै:, तेजसा दीप्त्या विक्रमेण पराक्रमेण प्रतापेन शौर्येण शत्रूणां निग्रहेण च युक्ता समवेता। एतैस्तेजोविक्रमै: सप्रतापैर्युक्ता एषा आग्नेयी छाया। इतिशब्द: प्रकाराय। एवं-प्रकारा प्राणिनां देहिनां जयाय स्याद्भवेत् वाञ्छितस्याभिलषितस्यार्थस्य क्षिप्रमाश्वेव सिद्धिं दत्ते ददाति।।९२।।

अधुना वायवीनाभस्योश्छाययोर्लक्षणमाह—

**मलिनपरुषकृष्णा पापगन्धानिलोत्था**
**जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।**
**स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा**
**निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा ॥९३॥**

वायु की छाया मलिन, रूखी, काली और दुर्गन्धयुत होती है। यह छाया वध, बन्धन, रोग, लाभ में बाधा औन धन का नाश करती है। आकाश की छाया स्फटिक के समान कान्ति वाली होती है। यह छाया भाग्ययुत, अति उदार, शुभ कार्यों की निधि के समान और स्वच्छ वर्ण वाली होती है।।९३।।

अनिलोत्था वायुसमुत्था वायुसम्भवा छाया मलिनवर्णा अप्रसन्ना। परुषा रूक्षा। कृष्णा असिता। पापगन्धा दुर्गन्धा। सा च जनयति उत्पादयति। वधो मरणम्। बन्धो बन्धनम्। व्याधय: पीडा:। अनर्थोऽलाभ:। अर्थनाश: सञ्चितवित्तस्य क्षय:। एतान्।

अथ नाभस्याश्छायाया लक्षणमाह—स्फटिकेति। गगनोत्था आकाशजा छाया नाभसी। स्फटिकसदृशरूपा स्फटिकमणे: सदृशं तुल्यं रूपं कान्तिर्यस्या:। अतिनिर्मलेत्यर्थ:। भाग्ययुक्ता भाग्यै: समेता। अत्युदारा अतिशयेनोदारा दानशीला श्रेयसां सर्वेषां शुभकार्याणां निधिरिव। सर्वप्रदेत्यर्थ:। सा च स्वच्छवर्णा निर्मलेति।।९३।।

अत्रैव परमतेनान्या: पञ्चच्छाया आह—

**छाया: क्रमेण कुजलाग्न्यनिलाम्बरोत्था:**
**केचिद्वदन्ति दश ताश्च यथानुपूर्व्या ।**

**सूर्याब्जनाभपुरुहूतयमोडुपानां**
**तुल्यास्तु लक्षणफलैरिति तत्समासः ॥९४॥**

क्रम से भूमि, जल, अग्नि, वायु और आकाश की छाया मैंने कही है। कोई-कोई मुनि दश छाया कहते हैं। जैसे पूर्वोक्त भूमि आदि की पाँच छाया और सूर्य, विष्णु, इन्द्र, यम, चन्द्र—इन पाँचों की पाँच छाया, इस प्रकार दश छाया कहते हैं; किन्तु सूर्य की छाया आदि पाँच छायाओं का लक्षण और फल भी भूमि आदि के समान ही हैं। अतः मैंने दश छाया का संक्षेप करके पाँच ही छाया कही है।।९४।।

कुः पृथिवी। जलं वारुणम्। अग्निर्हुताशनः। अनिलो वायुः। अम्बरमाकाशम्। एभ्य उत्पन्नाश्छायाः क्रमेण परिपाट्या पञ्च। केचिन्मुनयो गर्गादयो दश च्छाया वदन्ति। उक्ताः पञ्च पञ्च चेदानीं वक्ष्यन्ते। ताश्चापि यथानुपूर्व्या क्रमपरिपाट्या सूर्याब्जनाभपुरुहूतयमोडुपानां सम्बन्धिन्यो भवन्ति। सूर्य आदित्यः। अब्जनाभो नारायणः। पुरुहूत इन्द्रः। यमः पितृपतिः। उडुपश्चन्द्रः। एताश्छाया लक्षणैः फलैश्च यथाक्रमेण प्रागुक्तानां पञ्चानां तुल्या सदृश्यः। यतः सौरी एवाग्नेयी। आब्जनाभी नाभसी। पौरुहूती पार्थिवी। याम्या वायवी। औडुपी चाप्या। इति तत्समासः। इति हेतोस्तासां दशानां छायानां समासः संक्षेपः कृतः। फल-साम्यात् पञ्चैव छायाः कृताः। तथा च गर्गः—

भूम्यापोऽनलवाय्वभ्रसम्भूताः पञ्च कीर्तिताः।
छाया भूविष्णुशक्रार्कचन्द्राणां च तथापराः।।

इति मृजा।।९४।।

अथ स्वरलक्षणमाह—

**करिवृषरथौघभेरीमृदङ्गसिंहाभ्रनिःस्वना भूपाः।**
**गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः ॥९५॥**

हाथी, बैल, रथसमूह, भेरी, मृदङ्ग, सिंह या मेघ के समान स्वर वाले राजा तथा गर्दभ, जर्जर ( विकृत ) और रूखे स्वर वाले धन और सुख से हीन होते हैं।।९५।।

करी हस्ती। वृषो दान्तः। रथौघः स्यन्दनसमूहः। भेरी ढक्का। मृदङ्गो वादित्रो मण्डलेति प्रसिद्धः। सिंहो हरिः। अभ्रो मेघः। अब्देति पाठः। अब्दो मेघः। एतेषां सदृशनिःस्वनाः, तुल्यशब्दा भूपा राजानो भवन्ति। गर्दभः खरः। जर्जरो विकृतस्वरः। रूक्षः परुषः। गर्दभादि-सदृशस्वरा धनसौख्यसन्त्यक्ता धनैः सुखैश्च वर्जिता इत्यर्थः। तथा च गर्गः—

गम्भीरो दुन्दुभिः स्निग्धो महांश्चैवानुनादवत्।
इति स्वरगुणान् पञ्च समुद्रः प्राह तत्त्ववित्।।
एभिरायुर्यशो विद्या मानं सौख्यं धनागमः।
वाहनानि सुता नार्यो राज्यभोगागमास्तथा।।

भिन्नो जर्जरितश्चैव मिर्मिणो गद्गदस्तथा।
क्षामस्वरस्तथैवोक्ता: समुद्रेणाभिनिन्दिता:।।
स्वरैरेभि: कलिक्रोधलोभमोहतमोरज:।
नैर्घृण्यमभिमानं च पारुष्यं शाठ्यमेव च।। इति स्वर:।।९५।।

अथ सारानाह—

**सप्त भवन्ति च सारा मेदोमज्जात्वगस्थिशुक्राणि।**
**रुधिरं मांसं चेति प्राणभृतां तत्समासफलम् ।।९६।।**

शरीर में मेद ( हड्डियों के अन्तर्गत स्नेह भाग ), मज्जा ( खोपड़ी के मध्य का स्नेह भाग ), चमड़ा, हड्डी, वीर्य, रुधिर, मांस—ये सात सार होते हैं। अब यहाँ संक्षेप से इनके फल कहते हैं।।९६।।

सप्त नराणां सारा भवन्ति। मेदोऽस्थ्यन्तरगत: स्नेहभाग:। मज्जा कपालान्तरस्था। त्वक् चर्म। अस्थि प्रसिद्धम्। शुक्रं रेत:। रुधिरं रक्तम्। मांसं पललम्। चशब्द: समुच्चये। इत्येवम्प्रकारा: सप्त सारा: प्राणभृतां देहिनां भवन्ति। तत्समासफलं तेषां संक्षेपफलं कथ्यत इति।।९६।।

तत्र तावद्रक्तसारस्य लक्षणमाह—

**ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणै: ।**
**रक्तै तु रक्तसारा बहुसुखवनितार्थपुत्रयुता: ।।९७।।**

जिसके तालु, ओंठ, दाँत, मांस, जीभ, नेत्र के अन्तभाग, गुदा, हाथ, पाँव—ये सभी लाल हों, वे रुधिरसार वाले मनुष्य होते हैं। रुधिरसार वाले पुरुष बहुत सुख, स्त्री, धन और पुत्रों से युत होते हैं।।९७।।

ताल्वास्यपृष्ठभाग:। ओष्ठौ दन्तच्छदौ। दन्तपाली दन्तमांसपङ्क्ति:। जिह्वा रसना। नेत्रान्तं चक्षुष्पर्यन्तम्। पायुर्गुह्यस्थानम्। करौ हस्तौ। चरणौ पादौ। अस्मिन्नष्टके रक्ते लोहिते सति रक्तसारा नरा भवन्ति। ते च बहुभि: सुखैर्वनिताभि: स्त्रीभिर्बहुभिरर्थैर्धनैर्बहुभि: पुत्रै: सुतैश्च युता: संयुक्ता भवन्ति।।९७।।

अथ त्वग्मज्जामेद:सारानाह—

**स्निग्धत्वक्का धनिनो मृदुभि: सुभगा विचक्षणास्तनुभि: ।**
**मज्जामेद:सारा: सुशरीरा: पुत्रवित्तयुता: ।।९८।।**

स्निग्ध त्वचा वाले पुरुष धनी, कोमल त्वचा वाले भाग्यशाली और पतली त्वचा वाले पण्डित होते हैं। मज्जासार वाले तथा मेदसार वाले मनुष्य सुन्दर, पुत्रवान और धनी होते हैं।।९८।।

त्वक् चर्म। तच्च स्निग्धमरूक्षं येषां ते स्निग्धत्वक्कास्ते च धनिनो वित्तान्विता

भवन्ति। मृदुभिः सुभगाः सौभाग्योपेता भवन्ति। तनुभिस्त्वग्भिर्विचक्षणाः पण्डिताः। ये मज्जासारा नरा मेदःसाराश्च ते सुशरीराः शोभनशरीरा भवन्तीति तल्लक्षणम्। ते च पुत्र-वित्तयुताः सुतधनान्विता भवन्तीति।।९८।।

अथास्थिशुक्रसारमाह—

**स्थूलास्थिरस्थिसारो बलवान् विद्यान्तगः सुरूपश्च।**
**बहुगुरुशुक्राः सुभगा विद्वांसो रूपवन्तश्च ॥९९॥**

अस्थिसार वाला मनुष्य मोटी हड्डी वाला, बलवान, विद्वान् और सुन्दर होता है। वीर्यसार वाला मनुष्य गाढ़े वीर्य वाला, भाग्यशाली, विद्वान् और सुन्दर होता है।।९९।।

स्थूलान्यस्थीनि यस्य सोऽस्थिसारः स च बलवान् प्राणी भवति। विद्यान्तगो विद्या-स्वन्तगः शक्तः, सुरूपः शोभनरूपश्च भवति। बहुगुरुशुक्राः, बहु प्रभूतं गुरु घनं शुक्रं येषां ते शुक्रसारास्ते च सुभगाः, सौभाग्योपेता विद्वांसः पाठकाः पण्डिता रूपवन्तः सुरूपाश्च भवन्ति।।९९।।

अथ मांससारलक्षणं संहतिलक्षणं चाह—

**उपचितदेहो विद्वान् धनी सुरूपश्च मांससारो यः।**
**सङ्घात इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेया ॥१००॥**

मांससार वाला मनुष्य स्थूल शरीर वाला, विद्वान्, धनी और सुन्दर रूप वाला होता है। समस्त अंगसन्धियों की सुश्लिष्टता को 'संघात' कहा जाता है। संधातयुत मनुष्य सुखी होते हैं।।१००।।

उपचितदेहः स्थूलशरीरः। स मांससारः स च विद्वान् पण्डितः। धनी वित्तवान् सुरूपः शोभनरूपो भवति—इति सारः।

अथ संहतिलक्षणम्—**सङ्घात इति**। सुश्लिष्टसन्धिता सर्वाङ्गसन्धीनां सुश्लिष्टत्वं सङ्घातः। सा च सुश्लिष्टसन्धिता सुखभुजः सुखिनो ज्ञेया। सुश्लिष्टसन्धिता येषां ते सुखभुज इत्यर्थः।।१००।।

अथ स्नेहलक्षणमाह—

**स्नेहः पञ्चसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः।**
**सुतधनसौभाग्ययुताः स्निग्धैस्तैर्निर्धना रूक्षैः ॥१०१॥**

पुरुष की वाणी, जीभ, दाँत, आँख, नख—इन पाँच स्थानों में स्नेह का विचार करना चाहिये। जिनके ये पाँचों स्निग्ध हों वे पुरुष पुत्र, धन और सौभाग्य से युत तथा जिनके रूक्ष हों वे निर्धन होते हैं।।१०१।।

पञ्चसु स्नेहो लक्ष्यो विचार्यः। केषु? वाचि वचने। जिह्वायां रसनायाम्। दन्तेषु रदेषु। नेत्रयोश्चक्षुषोः। नखेषु कररुहेषु। एतेषु संस्थः। तैश्च वागादिभिः सर्वैः स्निग्धैः सस्नेहैः

सुतधनसौभाग्ययुता नरा भवन्ति। सुत: पुत्र:। धनं वित्तम्। सौभाग्यं सर्वजनानां लक्ष्यम्। एतैर्गुणै: संयुक्ता:। तैरेव सर्वै रूक्षैरस्निग्धैर्निर्धना दरिद्रा भवन्ति।।१०१।।

अथ वर्णलक्षणमाह—

**द्युतिमान् वर्णस्निग्ध: क्षितिपानां मध्यम: सुतार्थवताम्।**
**रूक्षो धनहीनानां शुद्ध: शुभदो न सङ्कीर्ण: ।।१०२।।**

राजाओं का वर्ण कान्तियुत और स्निग्ध, पुत्रवान् धनिकों का वर्ण मध्यम और निर्धनों का वर्ण रूखा होता है। पुरुष का शुद्ध स्निग्ध वर्ण शुभ और मिश्रित वर्ण अशुभ होता है।।१०२।।

वर्णो गौरलोहितश्यामादिक:। वर्ण: स्निग्धो यस्यासौ वर्णस्निग्ध: स द्युतिमान् दीप्तिमान् भवति। स च क्षितिपानां राज्ञां भवति। मध्यमो वर्णो नातिरूक्षो नातिस्निग्ध: ससुतार्थवतां पुत्रधनान्वितानां भवति। रूक्षो वर्णो धनहीनानां दरिद्राणां भवति। शुद्धो वर्ण: स्निग्ध एव शुभद: प्रशस्त:। न सङ्कीर्णो व्यामिश्रवर्ण:। क्वचित् स्निग्ध: क्वचिद्रूक्षो न शुभद:। इति वर्ण:।।१०२।।

अथानूकलक्षणमाह—

**साध्यमनूकं वक्त्राद् गोवृषशार्दूलसिंहगरुडमुखा: ।**
**अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च ।।१०३।।**

**वानरमहिषवराहाजतुल्यवदना: श्रुतार्थसुखभाज: ।**
**गर्दभकरभप्रतिमैर्मुखै: शरीरैश्च नि:स्वसुखा: ।।१०४।।**

मुख को देखकर पूर्व जन्म की कल्पना करनी चाहिये। गौ, बैल, बाघ, सिंह या गरुड़ के समान मुख वाले मनुष्य का पूर्व जन्म शुभ होता है तथा वे अप्रतिहत प्रताप वाले और शत्रुओं को जीतने वाले राजा होते हैं। बन्दर, महिष, सूअर या बकरे के समान मुख वाले का पूर्व जन्म मध्यम होता है तथा वे शास्त्र, धन और सुख से युत होते हैं। गदहा या ऊँट के समान मुख वाले का पूर्व जन्म अशुभ होता है तथा वे धन और सुख से रहित होते हैं।।१०३-१०४।।

अनूकं प्राग्जन्म। तच्च वक्त्राद् मुखात् साध्यं कल्पनीयम्। गौ: प्रसिद्धा। वृषो दान्त:। शार्दूल: सिंहसदृश: प्राणिविशेष:। सिंहो हरि:। गरुडो वैनतेय:। एतेषां ये सदृशमुखास्तुल्यवक्त्रा:। तेषां प्राग्जन्म शुभम्। ते चाप्रतिहतप्रतापा भवन्ति। अप्रतिहतोऽनभिभवनीय: प्रतापो येषाम्। जितरिपवो निर्जितशत्रव:, मानवेन्द्राश्च राजानो भवन्ति।

वानर: कपि:। महिष: प्रसिद्ध:। वराह: सूकर:। अजश्छाग:। एतेषां तुल्यवदना: सदृशमुखा नरा: श्रुतार्थसुखभाज:। श्रुतं शास्त्रम्। अर्थो धनम्। सुखं प्रसिद्धम्। एषां भागिनो भवन्ति। एतेषां मध्यमं प्राग्जन्म। गर्दभ: खर:। करभ उष्ट्र:। गर्दभकरभप्रतिमैस्तत्सदृशै-

मुखैर्वदनैः शरीरैश्च देहैर्नि:स्वसुखा भवन्ति। नि:स्वा निर्धनाः। नि:सुखाः सुखरहिताश्च। तेषामशुभं प्राग्जन्म। इत्यनूकम्।।१०३-१०४।।

अथोन्मानलक्षणमाह—

**अष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम्।**
**उत्तमसमहीनानामङ्गुलसङ्ख्या स्वमानेन ।।१०५।।**

अपनी अंगुलियों से १०८ अंगुल अपनी ऊँचाई हो तो उत्तम, ९६ अंगुल हो तो मध्यम और ८४ अंगुल हो तो अधम होता है।।१०५।।

पुंसां पुरुषाणां स्वमानेनात्मीयप्रमाणेनाङ्गुलसङ्ख्याङ्गुलप्रमाणम्। अष्टशतमष्टाधिकं शतं स्वाङ्गुलैरुत्तमानां नराणां परिमाणं भवति। षण्णवतिरङ्गुलानि मध्यमानाम्। चतुरशीतिरङ्गुलानि हीनानां परिमाणं भवति। उत्थितस्य पुरुषस्य भूपादसंयोगाच्छिरोमध्यं यावत् सूत्रं दत्त्वा तन्मापयेत् स्वाङ्गुलैरिति स्थितिः। इत्युन्मानम्।।१०५।।

अथ मानलक्षणमाह—

**भारार्धतनुः सुखभाक् तुलितोऽतो दुःखभाग्भवत्यूनः।**
**भारोऽतीवाढ्यानामध्यर्धः सर्वधरणीशः ।।१०६।।**

एक भार में दो हजार पल होते हैं। आधा भार वाला पुरुष सुखी, इससे कम भार वाला दुःखी, एक भार वाला अति धनी और डेढ भार वाला चक्रवर्ती होता है।।१०६।।

भारः पलसहस्रद्वयम्। यः पुरुषस्तुलायां तुलितो भारार्धतनुर्भवति दशपलशतानीत्यर्थः। स सुखभाक् सुखितो भवति। अतोऽस्माद्भारार्धाद् य ऊनतनुः स दुःखभाग् दुःखितो भवति। भारप्रमाणतनुरतीवाढ्यानामतिधनिनां भवति। अध्यर्धभारतनुस्त्रिसहस्रपलानि यः स सर्वधरणीशः, सार्वभौमो राजा भवतीत्यर्थः।।१०६।।

कस्मिन् काले उन्मानमानेन मापयेदित्येतत्प्रतिपादयन्नाह—

**विंशतिवर्षा नारी पुरुषः खलु पञ्चविंशतिभिरब्दैः।**
**अर्हति मानोन्मानं जीवितभागे चतुर्थे वा ।।१०७।।**

बीस वर्ष की स्त्री और पच्चीस वर्ष वाले पुरुष के उन्मान और मान का विचार करना चाहिये अथवा गणित से निर्णीत आयु का चतुर्थ भाग व्यतीत हो जाने पर उन्मान और मान का विचार करना चाहिये।।१०७।।

नारी स्त्री विंशतिवर्षा मानोन्मानमर्हति। मानं तुलामानम्, उन्मानमूर्ध्वमानमङ्गुलादि। एवं पुरुषो नरो वर्षपञ्चविंशत्या मानोन्मानमर्हति, मानोन्मानयोग्यो भवति। खलुशब्दो वाक्यालङ्कारे। वर्षशतं जीवितप्रमाणं निश्चित्य विंशतिवर्षा नारीत्युक्तम्। जीवितभागे चतुर्थेऽतीते वा मानोन्मानमर्हति। वर्षशतादूने तु जीविते निश्चिते चतुर्थभाग इत्युक्तम्। इति मानम्।।१०७।।

अथ प्रकृतिलक्षणमाह—

**भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचकतिरश्चाम्।**
**सत्त्वेन भवति पुरुषो लक्षणमेतद् भवति तेषाम्॥१०८॥**

पुरुषों में भूमि, जल, अग्नि, वायु, आकाश, देवता, मनुष्य, राक्षस, पिशाच, तिरछे चलने वाले—इनका सत्त्व ( स्वभाव ) होता है, उनके ये वक्ष्यमाण लक्षण हैं।।१०८।।

भूः प्रसिद्धा। जलं वारुणम्। शिखी अग्निः। अनिलो वायुः। अम्बरमाकाशम्। सुरा देवाः। नरा मनुष्याः। रक्षो राक्षसः। पिशाचा देवयोनयः। तिर्यञ्चस्तिर्यग्जातयः। एतेषां सत्त्वेन प्रकृत्या पुरुषो नरो भवति। तेषां चैतद्वक्ष्यमाणं लक्षणं भवति। अत्र केचित् पठन्ति—'भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचतिर्यञ्चम्' इति। तन्न; यस्मात् तिरश्चामिति भवितव्यम्। तस्मात् प्राक्तनः पाठः शोभनः।।१०८।।

तत्र भूजलस्वभावयोर्लक्षणमाह—

**महीस्वभावः शुभपुष्पगन्धः**
**सम्भोगवान् सुश्वसनः स्थिरश्च।**
**तोयस्वभावो बहुतोयपायी**
**प्रियाभिभाषी रसभाजनश्च॥१०९॥**

भूमि प्रकृति वाला पुरुष सुन्दर पुष्पों के समान गन्ध वाला, भोगी, सुगन्धियुत श्वास वाला और स्थिर स्वभाव वाला होता है। जल प्रकृति वाला मनुष्य अधिक जल पीने वाला, मधुर बोलने वाला और मधुर रसप्रिय होता है।।१०९।।

महीस्वभावः भूप्रकृतिः पुरुषः। शुभपुष्पगन्धः शोभनानां चम्पकप्रभृतीनां पुष्पाणां कुसुमानां सदृशो गन्धो यस्य स सम्भोगवान् सम्भोगशीलः। सुश्वसनः शोभनः श्वसनो वातो यस्य। श्वसनशब्देनात्र सुखवहो वातः। स च सुगन्धस्तस्य भवतीत्यर्थः। स्थिरश्च स्थिरस्वभावः। तोयस्वभावो जलप्रकृतिर्बहुतोयपायी बहु प्रभूतं तोयं जलं पिबति तच्छीलः। प्रियाभिभाषी प्रियमनुकूलमभिभाषते वक्ति। रसभाजनश्च रसा मधुरादयस्तेषां भाजनो योग्यस्तत्प्रियः। केचिद्रसभोजनश्चेति पठन्ति।।१०९।।

अथाग्निमारुतयोर्लक्षणमाह—

**अग्निप्रकृत्या चपलोऽतितीक्ष्णश्चण्डः क्षुधालुर्बहुभोजनश्च।**
**वायोः स्वभावेन चलः कुशश्च क्षिप्रञ्च कोपस्य वशं प्रयाति॥११०॥**

अग्नि प्रकृति वाला मनुष्य चञ्चल, खल, क्रूर, क्षुधा को नहीं सहने वाला और बहुत भोजन करने वाला होता है। वायु प्रकृति वाला मनुष्य चञ्चल, दुर्बल और बहुत जल्दी क्रोध के वश में आने वाला होता है।।११०।।

अग्निप्रकृत्या नरश्चपलः क्रियास्वनवस्थितः। अतितीक्ष्णः खलः। चण्डः क्रूरः।

क्षुधालुः क्षुधां न सहते। बहुभोजनश्च बह्वाशी। वायोः स्वभावेन पुरुषश्चलोऽस्थिरमतिः। कृशो दुर्बलः। कोपस्य क्रोधस्य क्षिप्रमाश्वेव वशं प्रयाति विधेयतां गच्छति।।११०।।

अथाकाशसुरसत्त्वयोर्लक्षणमाह—

**खप्रकृतिर्निपुणो विवृतास्यः**
**शब्दगतेः कुशलः सुशिराङ्गः।**
**त्यागयुतः पुरुषो मृदुकोपः**
**स्नेहरतश्च भवेत् सुरसत्त्वः ।।१११।।**

आकाश प्रकृति वाला मनुष्य कार्य में निपुण, खुले हुये मुख वाला, संस्कृत पद-ज्ञान में कुशल और छिद्रयुत अंग वाला होता है। देवता प्रकृति वाला मनुष्य दानी, थोड़े क्रोध वाला और प्रेमी होता है।।१११।।

खप्रकृतिराकाशस्वभावो नरो निपुणः कलासु सूक्ष्मदृष्टिः। विवृतास्य उद्घाटितमुखः। शब्दगतेः कुशलः शब्दानां संस्कृतपदानां गतिर्व्याप्तिस्तस्याः कुशलः शक्तः। अथवा शास्त्रे गतेर्गमनस्य कुशलः। केचिच्छब्दगतौ कुशल इति पठन्ति। शब्दगतौ गतिविषये कुशलः। सुशिराङ्गः सुशिरावयवः। सुरसत्त्वो देवप्रकृतिः पुरुषस्त्यागयुतस्त्यागी। मृदुकोपोऽल्पक्रोधः। स्नेहरतः प्रीतियुक्तश्च भवति।।१११।।

अथ पुरुषसत्त्वस्य लक्षणमाह—

**मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः।**
**संविभागशीलवान् नित्यमेव मानवः ।।११२।।**

मनुष्य प्रकृति वाला मनुष्य गान और भूषण का प्रिय तथा बन्धुओं का उपकार करने वाला होता है।।११२।।

मर्त्यो नरः। तत्सत्त्वसंयुतो गीतभूषणप्रियः, गीतप्रियो भूषणप्रियः। भूषणानि अलङ्करणानि प्रियाणि यस्य। सम्यग्विभजनं संविभागः। संविभागवान् बान्धवानामुपकर्ता। शीलवान् चरित्रयुक्तः। नित्यं सर्वकालम्। मानवो मनुष्यो भवति।।११२।।

अथ रक्षःपिशाचानां लक्षणमाह—

**तीक्ष्णप्रकोपः खलचेष्टितश्च**
**पापश्च सत्त्वेन निशाचराणाम्।**
**पिशाचसत्त्वश्चपलो मलाक्तो**
**बहुप्रलापी च समुल्बणाङ्गः ।।११३।।**

राक्षस प्रकृति वाला मनुष्य क्रोधी, दुष्ट स्वभाव वाला और पापी होता है। पिशाच प्रकृति वाला मनुष्य चञ्चल, मलिन, बहुत प्रलाप करने वाला और मोटे शरीर वाला होता है।।११३।।

निशाचराणां रक्षसां सत्त्वेन नरस्तीक्ष्णप्रकोपश्चण्डक्रोधः। खलचेष्टितः खलस्य दुर्जनस्येव चेष्टितं यस्य। पापश्च, पापरतो भवति। पिशाचसत्त्वः पिशाचप्रकृतिर्नरश्चपलोऽनेकमतिः। मलाक्तो मलोपदिग्धशरीरः। बहुप्रलापी बहुविधं प्रलपति। समुल्बणाङ्गः स्थूलाङ्गो भवति।।११३।।

अथ तिर्यक्सत्त्वस्य लक्षणमाह—

**भीरुः क्षुधालुर्बहुभुक् च यः स्याद्**
**ज्ञेयश्च सत्त्वेन नरस्तिरश्चाम्।**
**एवं नराणां प्रकृतिः प्रदिष्टा**
**यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम्।।११४।।**

तिर्यक् प्रकृति वाला पुरुष डरपोक, क्षुधा को नहीं सहन करने वाला और बहुत भोजन करने वाला होता है। इस तरह मनुष्यों की प्रकृति का लक्षण कहा गया है, जो प्रकृतिलक्षणज्ञों के द्वारा सत्त्व नाम से कही जाती है।।११४।।

यो नरः पुरुषो भीरुर्भयार्तः। क्षुधालुः क्षुधां न सहते। बहुभुग् बह्वाशी च यः स्यात् स तिरश्चां तिर्यग्जातीनां सत्त्वेन ज्ञेयो ज्ञातव्यः। एवमनेन प्रकारेण नराणां पुंसां प्रकृतिः प्रदिष्टा उक्ता। लक्षणज्ञाः पुरुषलक्षणविदो यत् सत्त्वमिति प्रवदन्ति कथयन्ति। तथा च गर्गः—

धन्यधन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः।
स्वराद्धन्यतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम्।।

इति प्रकृतिसत्त्वम्।।११४।।

अथ गतिलक्षणमाह—

**शार्दूलहंससमदद्विपगोपतीनां**
**तुल्या भवन्ति गतिभिः शिखिनां च भूपाः।**
**येषां च शब्दरहितं स्तिमितं च यातं**
**तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः।।११५।।**

सिंह, हंस, मतवाले हाथी, बैल और मयूर के समान गति वाले मनुष्य राजा होते हैं। शब्दरहित और मन्द गति वाले भी धनी होते हैं तथा शीघ्र और मेढक के समान गति वाले मनुष्य दरिद्र होते हैं।।११५।।

शार्दूलः सिंहः। हंसः पक्षी। केचिच्छार्दूलसिंहेति पठन्ति। शार्दूलः प्राणिविशेषः। सिंहो हरिः। समदो मदसहितो द्विपो हस्ती। मत्तगज इत्यर्थः। गोपतिर्वृषः। तथा शिखी मयूरः। एषां गतिभिर्गमनैस्तुल्याः सदृशगतयो भूपा राजानो भवन्ति। येषां च यातं गमनं शब्दरहितं निःशब्दं स्तिमितमल्पं च तेऽपीश्वरा धनिनः। द्रुतपरिप्लुतगा दरिद्राः, द्रुतं त्वरितं परिप्लुतं मण्डूकवज्जाताक्षेपं गच्छन्ति। ते दरिद्रा निर्धना भवन्ति। इति गतिः।।११५।।

सिद्धान्तमाह—

**श्रान्तस्य यानमशनं च बुभुक्षितस्य**
**पानं तृषापरिगतस्य भयेषु रक्षा।**
**एतानि यस्य पुरुषस्य भवन्ति काले**
**धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥११६॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां पुरुषलक्षणं नामाष्टषष्टितमोऽध्यायः ॥६८॥**

जिस मनुष्य को थकने पर सवारी, भूख लगने पर भोजन, प्यास लगने पर पानी और भय के समय रक्षक मिल जाय; मनुष्य के लक्षण जानने वाले पण्डित उस मनुष्य को भाग्यशाली कहते हैं।।११६।।

**इति 'विमला' हिन्दीटीकायां पुरुषलक्षणाध्यायोऽष्टषष्टितमः ॥६८॥**

यस्य नरस्य श्रान्तस्य खिन्नस्य यानं वाहनमश्वादिकं भवति। बुभुक्षितस्याशनं भोजनं भवति। तृषापरिगतस्य पिपासां गतस्य पानं जलं भवति। भयेषूत्पन्नेषु रक्षा परिपालनम्। एतानि काले यथोपयुज्यमानानि भवन्ति। तं नरं धन्यं शुभलक्षणं वदन्ति कथयन्ति। नरलक्षणज्ञाः पुरुषचिह्नविदः।।११६।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पुरुषलक्षणं नामाष्टषष्टितमोऽध्यायः ॥६८॥**

## अथ पञ्चमनुष्यविभागाध्यायः

अथ पञ्चमनुष्यविभागो व्याख्यायते। तत्रादावेव तदारम्भप्रयोजनप्रदर्शनार्थमाह—

**ताराग्रहैर्बलयुतैः स्वक्षेत्रस्वोच्चगैश्चतुष्टयगैः ।**
**पञ्च पुरुषाः प्रशस्ता जायन्ते तानहं वक्ष्ये ॥१॥**

स्थान, दिक्, चेष्टा और कालबल से युक्त मंगल आदि पाँच ग्रह अपने गृह या उच्च में स्थित होकर लग्न, चतुर्थ, सप्तम या दशम में स्थित हों तो पाँच प्रशस्त पुरुष उत्पन्न होते हैं। अतः उनको मैं कहता हूँ।।१।।

ताराग्रहा बुधकुजजीवशुक्रसौराः तैस्ताराग्रहैः सबलैः स्थानदिक्चेष्टाकालबलयुक्तैः। स्वक्षेत्रगैः स्वराशाववस्थितैः। स्वोच्चगैः स्वेष्वात्मीयेषूच्चराशिषु व्यवस्थितैः। चतुष्टयगैर्लग्नचतुर्थसप्तमदशमानामन्यतमेष्ववस्थितैरित्यर्थः। पञ्च पुरुषाः प्रशस्ता जायन्ते। तान् पुरुषानहं वक्ष्ये कथयिष्ये।।१।।

अथैषां प्रविभागलक्षणमाह—

**जीवेन भवति हंसः सौरेण शशः कुजेन रुचकश्च ।**
**भद्रो बुधेन बलिना मालव्यो दैत्यपूज्येन ॥२॥**

स्वगृह या उच्च में स्थित होकर केन्द्र में बली बृहस्पति हो तो हंस, शनि हो तो शश, मंगल हो तो रुचक, बुध हो तो भद्र और शुक्र हो तो मालव्य योग होता है।।२।।

जीवेन बृहस्पतिना बलयुतेन हंसो नाम पुरुषो भवति। एवं सौरेण शनैश्चरेण बलिना शशो भवति। कुजेनाङ्गारकेण बलिना रुचको नाम योगो भवति। बुधेन बलिना भद्रः। दैत्यपूज्येन शुक्रेण बलिना मालव्यो भवति। तथा च सारावल्याम्—

स्वक्षेत्रे तु चतुष्टयेऽथ बलिभिः स्वोच्चे स्थितैर्वा ग्रहैः
शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथाप्रक्रमम् ।
मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा
सर्वेषामतिविस्तराद् मुनिमतात् सङ्क्ष्यते लक्षणम्।। इति।।२।।

एतेषामर्कचन्द्रबलवशाद्विशेषमाह श्लोकद्वयेन—

**सत्त्वमहीनं सूर्याच्छारीरं मानसं च चन्द्रबलात् ।**
**यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमान् ॥३॥**

**तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यैः ।**
**अबलरवीन्दुयुतैस्तैः सङ्कीर्णा लक्षणैः पुरुषाः ॥४॥**

सूर्य बली हो तो पुरुष परिपूर्ण सत्त्व वाला एवं चन्द्र बली हो तो मानसिक बल वाला होता है। सूर्य-चन्द्र दोनों जिस राशि के भेद ( राशि, होरा, द्रेष्काण, नवांश, द्वादशांश और त्रिंशाश ) में बैठे हों, उस राशिपति के धातु, महाभूत, प्रकृति, कान्ति, वर्ण, सत्त्व, रूप आदि लक्षणों से युत पुरुष होता है। बली सूर्य और चन्द्र जिस-जिस ग्रह के राशिभेद में बैठे हों, उन ग्रहों के धातु आदि लक्षणों से युत पुरुष होता है अथवा सूर्य-चन्द्र दोनों में से एक बली होकर जिस ग्रह के राशिभेद में स्थित हों, उस ग्रह के धातु आदि लक्षणों से युत पुरुष होता है अथवा दोनों निर्बल होकर जिस-जिस ग्रह के राशिभेद में स्थित हों, उन दोनों के मिश्रित लक्षणों से युत पुरुष होता है।।३-४।।

**सत्त्वमहीनं सूर्यादिति**। सत्त्वं गुणभागः, अहीनं परिपूर्णम्, सूर्यादादित्यात् तुल्यस्य पुरुषस्य भवति। बलवशात् शारीरं देहगुणस्तनोः कान्तिः। मानसं बलमवस्कन्दता। तच्चन्द्रबलात् चन्द्रबलवशाद्भवति। कथमित्याह—**यद्राशिभेदयुक्ताविति**। एतावर्कचन्द्रौ यद्राशिभेदयुक्तौ यस्मिन् राशिभेदे होराद्रेष्काणनवांशद्वादशभागत्रिंशद्भागाख्ये कुजादिसम्बन्धिनि स्वे वा युक्तौ स्थितौ तस्य राशिभेदस्य योऽधिपतिर्ग्रहस्तल्लक्षणस्तैर्लक्षणैर्युक्तः स पुमान् भवति। राशिभेदका जातके भेदाध्याये प्रोक्ताः।

**तद्धातुमहाभूतप्रकृतिरिति**। यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमानित्युक्तम्। तत्र तद्धातुस्तदीयस्तस्य धातुर्भवति। तद्यथा धातवः—

स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसा च मज्जा।
मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ।। इति।

महाभूतानि पृथिव्यादीनां भौमादीनां ग्रहाणामुक्तानि। तद्यथा—'शिखिभूखपयोमरुद्गणानामधिपा भूमिसुतादयः क्रमेण' इति। अर्कचन्द्रयोर्वह्न्यम्बुप्रकृतिर्वातपित्तश्लेष्मात्मिका। अथवा 'महीस्वभावः शुभपुष्पगन्धः' इत्याद्युक्तम्। द्युतिः कान्तिश्छाया। चण्डाधृष्या पद्महेमाग्निवर्णा इति। 'द्युतिमान् वर्णस्निग्धः' इत्यादिवर्णः। यथा—'रक्तश्यामो भास्कर' इत्यादि। सत्त्वं गुणभागः। सत्त्वग्रहणं गुणत्रयोपलक्षणार्थम्। त्रयो गुणाः सत्त्वरजस्तमांसि चन्द्रार्कजीवा इत्युक्ताः।

रूपं यथा—'मधुपिङ्गलदृक्' इत्यादि। आदिग्रहणाच्चेष्टास्वभावकर्मकौशलाः। एतैर्युक्तो भवति। रविचन्द्रौ सबलौ गृहहोराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागेषु यस्य यस्य ग्रहस्य स्थितौ तेषां ग्रहाणां तत्तन्महाभूतादिभिर्युक्तः पुमान् भवति। **अबलरवीन्दुयुतैरिति**। तै राशिभेदैरबलरवीन्दुयुतैर्बलरहितार्कचन्द्रयुक्तैर्लक्षणैः सङ्कीर्णा व्यामिश्रास्ते पुरुषा भवन्ति। एतदुक्तं भवति—चन्द्रार्कयोर्बली यो यस्मिन् राशिभेदे भवत्येकस्तल्लक्षणो भवति स पुरुषः। अथ तावबलौ भवतस्तदा यत्रार्कः स्थितो यत्र चन्द्रः स्थितस्तैर्व्यामिश्रैर्लक्षणैर्युक्तो भवति। तथा च सारावल्याम्—

बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्मिश्राः।
न भवन्ति भूमिपाला दशासु तेषां सुतार्थयुताः।। इति।।३-४।।

अथ कस्माद् ग्रहात् को गुणो भवत्येतदाह—

**भौमात् सत्त्वं गुरुता बुधात् सुरेज्यात् स्वरः सितात् स्नेहः ।**
**वर्णः सौरादेषां गुणदोषैः साध्वसाधुत्वम् ।।५।।**

मंगल से सत्त्व, बुध से गुरुता, बृहस्पति से स्वर, शुक्र से स्नेह और शनि से कान्ति होती है। यदि मंगल आदि ग्रह बली हों तो पुरुष सत्त्व आदि गुणों से युत और निर्बल हों तो सत्त्व आदि गुणों से रहित होता है।।५।।

एषां पुरुषाणां भौमात् कुजात् सत्त्वं भवति। सत्त्वशब्दो विशिष्टगुणवाचकः। गुरुता गौरवं परिपुष्टता बुधात्। सुरेज्याद् गुरोः स्वरः शब्दः। सिताच्छुक्रात् स्नेहो निर्मलता। सौराच्छनैश्चराद्वर्णः कान्तिः। किमेतत् सर्वदा भवति? नेत्याह—गुणदौषैः साध्वसाधुत्वम्। एषां ग्रहाणां गुणैः सबलवत्त्वेन साधुत्वं सत्त्वादीनां सम्पद्भवति। दौषैर्हीनबलसत्त्वेनासाधुत्वं सत्त्वानामापद्भवति। तथा च सारावल्याम्—

महीसुतात् सत्त्वमुदाहरन्ति गुरुत्वमिन्दोस्तनयाद् गुरोश्च।
स्वरः सितात् स्नेहमतोऽनुवर्णं बलाबलैः पूर्णलघूनि चैषाम्।। इति।।५।।

अथ सङ्कीर्णानां विशेषमाह—

**सङ्कीर्णाः स्युर्न नृपा दशासु तेषां भवन्ति सुखभाजः ।**
**रिपुगृहनीचोच्चच्युतसत्यापनिरीक्षणैर्भेदाः ।।६।।**

सङ्कीर्ण लक्षण वाले मनुष्य राजा नहीं; किन्तु भौम आदि ग्रहों की दशा में सुखी होते हैं। शत्रुगृह, नीच, उच्च–इन स्थानों से चलित शुभ और पापग्रहों की दृष्टि से भेद होते हैं। उन भेदों से मनुष्य में सङ्कीर्णता दोष होता है।।६।।

सङ्कीर्णाः पुरुषा नृपा राजानो न स्युर्न भवेयुः। तेषां ग्रहाणां भौमादीनां दशासु सुखभाजः सुखिता भवन्ति। **रिपुगृहेति**। रिपुगृहं शत्रुक्षेत्रम्। नीचगृहं प्रसिद्धम्। उच्चत्वं जातके प्रसिद्धम्। तस्माद्ये च्युताश्चलिता ग्रहास्तैरवलोकिता दृष्टाः सन्तः शुभग्रहाः पूर्णचन्द्रबुध-जीवशुक्राः, पापाः क्षीणचन्द्रभौमरविशनयः। रिपुगृहनीचोच्चच्युतानां शुभानां पापानां च निरीक्षणैरवलोकनैर्भेदा भवन्ति। तैर्भेदैस्तेषां पुरुषाणां सङ्कीर्णता भवतीत्यर्थः। तथा च सारावल्याम्—

बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्ग्रहैर्मिश्राः।
न भवन्ति भूमिपाला दशासु तेषां सुतार्थयुताः।। इति।।६।।

अधुना तेषां भौमादियुक्तहंसजातीनां प्रमाणमाह—

**षण्णवतिरङ्गुलानां व्यायामो दीर्घता च हंसस्य ।**
**शशरुचकभद्रमालव्यसंज्ञितास्त्र्यङ्गुलविवृद्ध्या ।।७।।**

९६ अंगुल ऊँचाई और ९६ अंगुल व्यायाम ( दोनों भुजा फैलाकर कर चौड़ाई )

हंस का होता है। इसमें तीन-तीन अंगुल बढ़ाने से क्रम से शश, रुचक, भद्र और मालव्य पुरुष की ऊँचाई और व्यायाम होता है।।७।।

हंसस्य षण्णवतिरङ्गुलानां व्यायामः पृथुता च भवति। प्रसारितभुजद्वयस्य प्रमाणमित्यर्थः। दीर्घता चौच्च्यं षण्णवतिरङ्गुलानामेव। शशरुचकभद्रमालव्यसंज्ञितास्त्र्यङ्गुलविवृद्ध्या। त्रिभिस्त्रिभिरङ्गुलैस्तेषां वृद्धिर्व्यायामोच्चयोर्भवतीत्यर्थः। एतदुक्तं भवति—नवनवतिरङ्गुलानां व्यायामो दीर्घता च शशस्य भवति। द्व्यधिकं शतं रुचकस्य। पञ्चाधिकं शतं भद्रस्य। अष्टाधिकं मालव्यस्येति। एतदुत्तरत्र वक्ष्यमाणग्रन्थेन विरुद्ध्यते। तथा च पराशरः—

उच्छ्रायः परिणाहस्तु यस्य तुल्यं शरीरिणः।
स नरः पार्थिवो ज्ञेयो न्यग्रोधपरिमण्डलः।। इति।।७।।

अथ गुणलक्षणान्याह श्लोकद्वयेन—

**यः सात्त्विकस्तस्य दया स्थिरत्वं सत्त्वार्जवं ब्राह्मणदेवभक्तिः ।**
**रजोऽधिकः काव्यकलाक्रतुस्त्रीसंसक्तचितः पुरुषोऽतिशूरः ।।८।।**

**तमोऽधिको वञ्चयिता परेषां मूर्खोऽलसः क्रोधपरोऽतिनिद्रः ।**
**मिश्रैर्गुणैः सत्त्वरजस्तमोभिर्मिश्रास्तु ते सप्त सह प्रभेदैः ।।९।।**

सात्त्विक पुरुषों को दया, स्थिरता, प्राणियों में सरलता और देवता में भक्ति होती है। रजोगुण वाला मनुष्य काव्य, कला, यज्ञ और स्त्री में आसक्त तथा अतिशूर होता है। तमोगुण वाला मनुष्य दूसरे को ठगने वाला, मूर्ख, आलसी, क्रोधी और अधिक सोने वाला होता है। मिश्रित ( सत्त्व-रज, सत्त्व-तम, रज-तम और सत्त्व-रज-तम )— इस तरह गुणों के प्रभेद से सात प्रकार के मनुष्य होते हैं।।८-९।।

**यः सात्त्विकस्तस्य दयेति**। यः सात्त्विकः पुरुषस्तस्य सर्वभूतेषु दया भवति। स्थिरत्वमेकचित्तता। सत्त्वार्जवं सत्त्वानां प्राणिनामार्जवम्। ऋजोर्भाव आर्जवम्। ऋजुभावः स्पष्टता। ब्राह्मणानां देवानां च भक्तिः। यो रजोऽधिकः पुरुषः स काव्येषु कलासु गीत-नृत्यवाद्येषु क्रतुषु च संसक्तचित्तो भवति। अतिशूरः संग्रामप्रियः।

**तमोऽधिक इति**। यस्तमोऽधिकस्तामसः पुरुषः स परेषां वञ्चयिता वञ्चनशीलो मूर्खो जडः। अलस आलस्यसंसक्तः। क्रोधपरः क्रोधी। अतिनिद्रश्च भवति। सत्त्वरजस्तमोभि-स्त्रिभिर्मिश्रैस्तु ते पुरुषा मिश्रा मिश्रगुणा भवन्ति। ते च गुणैः स्वभेदैः सह सप्त भवन्ति। तद्यथा—सत्त्वं रजस्तम इति त्रयो भेदाः। सत्त्वरजसी रजस्तमसी सत्त्वतमसी त्रयः। सत्त्व-रजस्तमसां त्रयाणां योगात्सप्तमः। एतद्राशिभेदवशात्सङ्कीर्णवशाच्च सम्भवति।।८-९।।

अथ मालव्यलक्षणमाह—

**मालव्यो नागनासः समभुजयुगलो जानुसम्प्राप्तहस्तो**
**मांसैः पूर्णाङ्गसन्धिः समरुचिरतनुर्मध्यभागे कृशश्च ।**

**पञ्चाष्टौ चोर्ध्वमास्यं श्रुतिविवरमपि त्र्यङ्गुलोनं च तिर्यग्**
**दीप्ताक्षं सत्कपोलं समसितदशनं नातिमांसाधरोष्ठम् ।।१०।।**

मालव्य पुरुष हाथी के समान नासिका वाला, तुल्य भुजा वाला, जानु तक लम्बे हाथ वाला, पुष्ट अंगसन्धि वाला, समान सुन्दर शरीर वाला, कृश मध्य भाग वाला, ठोढ़ी से शिर तक की तेरह अंगुल ऊँचाई वाला, ठोढ़ी से कान के छिद्र तक तिरछी दश अंगुल ऊँचाई वाला, दीप्त मुख और नेत्र वाला, सुन्दर कपोल वाला, समान और सफेद दाँत वाला तथा पतले अधर वाला होता है।।१०।।

मालव्यनामा शुक्रेण योऽसावुत्पद्यते योगस्तस्येदं लक्षणम्, यथा—स नरो नागनासो नागो हस्ती नागस्येव नासा यस्य। दीर्घनास इत्यर्थ:। समभुजयुगल:, समं तुल्यं भुजयुगलं बाहुद्वयं यस्य। अथवा नागनासासमभुजयुगल:, नागनासासमं करिकरसदृशं बाहुद्वयं यस्य स:। जानुसम्प्राप्तहस्त आजानुलम्बबाहु:। मांसै: पूर्णाङ्गसन्धि:, मांसै: परिपूर्णा: सर्वाङ्गसन्धयो यस्य। अनुल्बणास्थिरित्यर्थ:। समरुचिरतनु: समा तुल्या रुचिरा श्रेष्ठा तनु: शरीरं यस्य। मध्यभागे कक्ष्याप्रदेशे कृशो दुर्बल:। पञ्चाष्टौ चोर्ध्वमास्यम्, पञ्च च अष्टौ च पञ्चाष्टौ त्रयोदशाङ्गुलानि, ऊर्ध्वमास्यमूर्ध्वमानेनास्यं चिबुकाल्ललाटान्तं यावत् त्रयोदशाङ्गुलं भवति। चिबुकाच्छ्रवणविवरं यावत् त्र्यङ्गुलोनं तिर्यग् भवति। चिबुकमध्यात् कर्णविवरं यावत् तिर्यक् कृत्वा दशाङ्गुलानि भवन्तीत्यर्थ:। दीप्ताक्षं दीप्ते स्फुटे अक्षिणी यस्य। सत्कपोलं शोभनकपोलम्। समसितदशनं समास्तुल्या: सिता: श्वेता दशना दन्ता यस्य। नातिमांसलमधरमोष्ठं यस्य।।१०।।

अस्य च यथाविधिस्वरूपमाह—

**मालवान् स भरुकच्छसुराष्ट्रान् लाटसिन्धुविषयप्रभृतींश्च ।**
**विक्रमार्जितधनोऽवति राजा पारियात्रनिलयान् कृतबुद्धि: ।।११।।**

मालव्य पुरुष मालव, मरु, कच्छ, सुराष्ट्र ( सूरत ), लाट, सिन्धु देश और पारियात्र पर्वतवासियों की रक्षा करने वाला, अपने पराक्रम से धन कमाने वाला तथा सुन्दर बुद्धि वाला राजा होता है।।११।।

मालवान् जनान्। भरुकच्छान् जनानेव। सुराष्ट्रान् जनान्। लाटदेश: प्रसिद्ध:। सिन्धुविषय: प्रसिद्ध एव। एतत्प्रभृतींश्च देशानवति रक्षति। कीदृश:? विक्रमार्जितधनो विक्रमेण प्रतापेनार्जितं धनं वित्तं येन तथाभूत:। स राजा पारियात्रनिलयान् पारियात्र: पर्वतस्तत्र कृतं निलयं गृहं यैस्तान्। कृतबुद्धि: शोभनमति: सन्नवति।।११।।

अन्यदप्याह—

**सप्ततिवर्षो मालव्योऽयं त्यक्ष्यति सम्यक् प्राणांस्तीर्थे ।**
**लक्षणमेतत् सम्यक् प्रोक्तं शेषनराणां चातो वक्ष्ये ।।१२।।**

मालव्य पुरुष की आयु सत्तर वर्ष की होती है और वह तीर्थस्थान पर प्राण छोड़ता

है। इस तरह मालव्य पुरुष के अच्छी तरह लक्षण कहकर शेष भद्र आदि पुरुषों का लक्षण कहता हूँ।।१२।।

अयं मालव्यः सप्ततिवर्षः सप्ततिर्वर्षाणां जीवितपरिमाणं तस्य भवति। तीर्थेषु पुण्यस्थानेषु सम्यक् तपसा प्राणानसूँस्त्यक्ष्यति। म्रियत इति। एतत् सम्यक् मालव्यस्य लक्षणं प्रोक्तं कथितम्। शेषनराणां भद्रादीनां चातोऽनन्तरं वक्ष्ये कथयिष्ये। तथा च सारावल्याम्—

न स्थूलौष्ठो न विषमवपुर्नातिरिक्ताङ्गसन्धि-<br>
र्मध्यक्षामः शशधररुचिर्हस्तिनासः सुगण्डः।<br>
सन्दीप्ताक्षः समसितरदो जानुदेशाप्तबाहु-<br>
र्मालव्योऽयं विलसति नृपः सप्ततिर्वत्सराणाम्।।<br>
वक्त्रं त्रयोदशमितानि तथाङ्गुलानि<br>
दैर्घ्येण कर्णविवराद् दश विस्तरेण।<br>
मालव्यसंज्ञमनुजः स भुनक्ति नूनं<br>
लाटं समालवससिन्धुसपारियात्रम्।। इति।

इति मालव्यः।।१२।।

अथ भद्रलक्षणमाह—

**उपचितसमवृत्तलम्बबाहुर्भुजयुगलप्रमितः समुच्छ्रयोऽस्य।**<br>
**मृदुतनुघनरोमनद्धगण्डो भवति नरः खलु लक्षणेन भद्रः ।।१३।।**

भद्र पुरुष पुष्ट, बराबर, गोल और लम्बे बाहु वाला, भुजाओं को फैलाने से जितनी चौड़ाई हो, उतनी ऊँचाई वाला तथा कोमल, सूक्ष्म और घने रोमों से युत कपोल वाला होता है।।१३।।

अयं भद्रनामा बुधेन योऽसावुत्पद्यते योगस्तस्येदं रूपं भवति। उपचितौ मांसलौ समौ तुल्यौ वृत्तौ परिवर्तुलौ लम्बौ दीर्घौ बाहू यस्य। अस्य भद्रस्य भुजयुगलप्रमितः समुच्छ्रयो भवति। यावदस्य प्रसाधितभुजद्वयस्य प्रमाणं तावदप्युच्छ्रायप्रमाणं भवति। मृदुतनुघनरोमनद्धगण्डः, मृदुभिः कोमलैस्तनुभिः सूक्ष्मैः घनैः सन्ततै रोमभिर्नद्धौ संयुक्तौ गण्डौ मुखगण्डौ यस्य। तथाभूतो नरः। लक्षणेन बुधाख्येन योगेन भद्रसंज्ञो भवति। खल्वित्यव्ययं वाक्यालङ्कारे।।१३।।

अन्यदपि लक्षणं श्लोकद्वयेनाह—

**त्वक्शुक्रसारः पृथुपीनवक्षाः सत्त्वाधिको व्याघ्रमुखः स्थिरश्च।**<br>
**क्षमान्वितो धर्मपरः कृतज्ञो गजेन्द्रगामी बहुशास्त्रवेत्ता ।।१४।।**

**प्राज्ञो वपुष्मान् सुललाटशङ्खः कलास्वभिज्ञो धृतिमान् सुकुक्षिः।**<br>
**सरोजगर्भद्युतिपाणिपादो योगी सुनासः समसंहतभ्रूः ।।१५।।**

सुन्दर त्वचा से युत, बहुत गाढ़े वीर्य वाला, विस्तीर्ण और पुष्ट छाती वाला, अधिक सत्त्व गुण वाला, बाघ के समान मुख वाला, स्थिर स्वभाव वाला, शान्तिशील, धर्मात्मा, कृतज्ञ, हाथी के समान गति वाला, बहुत शास्त्रों का ज्ञाता, सुन्दर शरीर वाला, सुन्दर ललाट और शंख वाला, कलाओं को जानने वाला, धीर, सुन्दर पेट वाला, कमलगर्भ से समान हाथ और पाँव वाला, योगी, सुन्दर नासिका वाला तथा समान और मिले हुये भुजाओं से युत भद्र पुरुष होता है।।१४-१५।।

**त्वक्शुक्रसार इति**। त्वक्सार: शोभनत्वक्। शुक्रसारौ बहुगुरुशुक्र:। पृथुपीनवक्षा:, पृथु विस्तीर्णं पीनं मांसलं वक्षो यस्य स:। सत्त्वाधिक:। सत्त्वशब्दो गुणवाची। सुखशब्दैरभिभूत इत्यर्थ:। व्याघ्रमुखो व्याघ्रस्येव मुखं यस्य स व्याघ्रमुख:। स्थिर एकमति:। क्षमान्वित: क्षमायुक्त:। धर्मपरो धर्मानुरत:। कृतज्ञ: कृतं जानाति। गजेन्द्रगामी गजेन्द्रो हस्तिप्रधान इव गच्छति। बहुशास्त्रवेत्ता बहूनां शास्त्राणामभिज्ञ:।

**प्राज्ञ इति**। प्राज्ञो मेधावी। वपुष्मान् शोभनशरीर:। सुललाटशङ्ख: शोभनं ललाटं शङ्खौ च यस्य। कलासु गीतनृत्यवाद्येष्वभिज्ञ:। आभिमुख्येन जानाति। धृतिमान् धैर्ययुक्त:। सुकुक्षि: शोभनकुक्षि:। सरोजं पद्मं तस्य गर्भोऽभ्यन्तरम्। सरोजगर्भस्य द्युति: कान्तिस्तुल्या तत्सदृशी पाणिपादयो: करचरणयोर्द्युतिर्यस्य। योगी योगज्ञ:। सुनास: शोभननास:। समसंहतभ्रू: समे तुल्ये संहते संलग्ने भ्रुवौ यस्येति।।१४-१५।।

अन्यदपि विशेषलक्षणमाह—

**नवाम्बुसिक्तावनिपत्रकुङ्कुमद्विपेन्द्रदानागुरुतुल्यगन्धता।**
**शिरोरुहाश्चैकजकृष्णकुञ्चितास्तुरङ्गनागोपमगुह्यगूढता।।१६।।**

भद्र पुरुष के शरीर में नवीन जल से सिंची हुई भूमि की गन्ध के समान, गन्धपत्र, कुङ्कुम, हाथी का मद या अगर के समान गन्ध होती है। उसके शिर के एक-एक रोमकूप में काले और एक-एक बाल होते हैं तथा घोड़ा या हाथी के समान छिपा हुआ उसका लिंग होता है।।१६।।

नवेनाम्बुना जलेन सिक्ता याऽवनिर्भूमिस्तस्यां यादृशो गन्ध:। पत्रं गन्धपत्रम्। कुङ्कुमं प्रसिद्धम्। द्विपेन्द्रदानं हस्तिमद:। अगुरु: प्रसिद्ध: सुगन्धद्रव्यम्, एषां तुल्यगन्धता सदृशगन्धता। **शिरोरुहाश्चैकजकृष्णकुञ्चितास्तुरङ्गनागोपमगुह्यगूढता इति**। शिरोरुहा: केशास्ते चैकजा:, एकैकस्मिन् रोमकूपे जाता:। कृष्णकुञ्चिता असितकुटिला:। तुरङ्गोऽश्व:। नागो हस्ती। गुह्यं लिङ्गम्। तुरङ्गनागोपमा तत्सदृशीगुह्ये गूढताऽस्य भवति। प्रच्छन्नलिङ्गो भवतीत्यर्थ:।।१६।।

अन्यच्च रेखालक्षणमाह—

**हलमुशलगदासिशङ्खचक्र-**
**द्विपमकराब्जरथाङ्किताङ्घ्रिहस्त:　　।**

**विभवमपि जनोऽस्य बोभुजीति**
**क्षमति हि न स्वजनं स्वतन्त्रबुद्धिः ॥१७॥**

भद्र पुरुष के हाथ में हल, मूसल, गदा, खड्ग, शंख, चक्र, हाथी, मकर, कमल और रथ के समान रेखा होती है। इसकी सम्पत्ति को अन्य मनुष्य भी खूब भोगते हैं तथा यह बन्धुओं के लिये क्षमारहित और स्वतन्त्र बुद्धि वाला होता है।।१७।।

हलं लाङ्गलम्। मुशल आयुधविशेषो मुशलाकारः। गदा प्रसिद्धा। असिः खड्गः। शङ्खः प्रसिद्धः। चक्रमायुधं प्रसिद्धम्। द्विपो हस्ती। मकरः प्राणिविशेषो जलजः। अब्जं पद्मम्। रथः प्रसिद्धः। एतैर्हलादिभिरङ्कितौ चाङ्घ्रिहस्तौ पादपाणी यस्य। तदाकाराभी रेखाभिश्चिह्नितौ पादहस्तौ भवेतामित्यर्थः। अस्य भद्रस्य विभवमैश्वर्यं जनो लोको बोभुजीति अत्यर्थं भुङ्क्ते। स्वजनं बन्धुजनं प्रति न क्षमति न सहते। तं प्रति क्षमाशीलो न भवति। स्वतन्त्रबुद्धिः, स्वतन्त्रा नापरतन्त्रा बुद्धिर्धीर्यस्येति। स्वाधीनबुद्धिरिति।।१७।।

मानलक्षणमाह—

**अङ्गुलानि नवतिश्च षडूनान्युच्छ्रयेण तुलयापि हि भारः।**
**मध्यदेशनृपतिर्यदि पुष्टास्त्र्यादयोऽस्य सकलावनिनाथः ॥१८॥**

भद्र पुरुष चौरासी अंगुल ऊँचा, एक तुला भार वाला और मध्य देश का राजा होता है। यदि इसकी एक सौ पाँच अंगुल व्यायाम हो तो चक्रवर्त्ती राजा होता है।।१८।।

उच्छ्रयेणौच्च्येन षडूनानि नवतिरङ्गुलानि भवन्ति। चतुरशीतिरङ्गुलान्युच्छ्रितानि भवन्तीत्यर्थः। तुलयापि हि भारः। पलसहस्रद्वयमित्यर्थः। स च मध्यदेशनृपतिर्मध्यदेशे राजा भवति। यद्यस्य त्र्यादयोऽङ्गुलानि पुष्टाः। त्रिग्रहणेनाङ्गुलानि ज्ञापयति। तदुक्तमादौ शशकरुचकभद्रमालव्यसंज्ञितास्त्र्यङ्गुलविवृद्ध्येति। यदि पञ्चोत्तरमङ्गुलशतं व्यायामेन दैर्घ्येण च भवति, तदा सकलावनिनाथः सार्वभौमो राजा भवतीत्यर्थः।।१८।।

अन्यच्च वयोलक्षणमाह—

**भुक्त्वा सम्यग्वसुधां शौर्येणोपार्जितामशीत्यब्दः।**
**तीर्थे प्राणांस्त्यक्त्वा भद्रो देवालयं याति ॥१९॥**

भद्र पुरुष अपने पराक्रम से उपार्जित पृथ्वी को अच्छी तरह भोग कर अस्सी वर्ष की अवस्था में तीर्थस्थान पर प्राण छोड़ कर स्वर्ग जाता है।।१९।।

सम्यग् वसुधां भूमिं शौर्येण बलेनोपार्जितां भुक्त्वा। अशीतिरब्दानां जीवितप्रमाणैर्यस्यासावशीत्यब्दः। तीर्थे पुण्यस्थाने। प्राणानसून् त्यक्त्वा भद्रो देवालयं स्वर्गं याति गच्छति। तथा च सारावल्याम्—

शार्दूलप्रतिमाननो द्विपगतिः पीनोरुवक्षःस्थलो
लम्बापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः ।

कामी कोमलसूक्ष्मरोमनिकरैः संरुद्धगण्डः शठः
प्राज्ञः पङ्कजगर्भपाणिचरणः सत्त्वाधिको योगवित्।।
शङ्खासिकुञ्जरगदाकुमुदेषु केतुचक्राब्जलाङ्गलविचिह्नितपाणिपादः।
पत्रागुरुद्विपमदप्रथमाम्बुसिक्तमृत्कुङ्कुमप्रतिमगन्धतनुः सुघोणः।।
शास्त्रार्थविद्धृतियुतः समसंहतभ्रूर्नागोपमो भवति चापि निगूढगुह्यः।
सत्कुक्षिधर्मनिरतः सुललाटशङ्खो धीरः स्थिरस्त्वसितकुञ्चितकेशपाशः।।
स्वतन्त्रः सर्वकार्येषु स्वजनं प्रति न क्षमः।
भुज्यते विभवश्चास्य नित्यं बन्धुजनैः परैः।।
भारस्तुलायास्तुलितो यदि स्यात् श्रीकान्यकुब्जाधिपतिस्तदासौ।
यस्त्र्यादिपुष्टैः सहितैः स भद्रः सर्वत्र राजा शरदामशीतिम्।। इति।।१९।।

अथ शशलक्षणमाह—

**ईषद्दन्तुरकस्तनुद्विजनखः कोशेक्षणः शीघ्रगो**
**विद्याधातुवणिक्क्रियासु निरतः सम्पूर्णगण्डः शठः।**
**सेनानीः प्रियमैथुनः परजनस्त्रीसक्तचित्तश्चलः**
**शूरो मातृहितो वनाचलनदीदुर्गेषु सक्तः शशः ॥२०॥**

कुछ ऊँचे दाँत वाला, छोटे दाँत और नख वाला, पुष्ट नेत्रकोश वाला, शीघ्रगामी, विद्या और धातुओं के व्यापारक्रिया में आसक्त, पुष्ट कपोल वाला, शठ, सेनापति, मैथुनप्रिय, परस्त्री में आसक्त, शूर, माता का भक्त तथा वन, पर्वत, नदी और दुर्गों में आसक्त शश पुरुष होता है।।२०।।

अथ सौरेण रविसुतेन योऽसौ योग उत्पद्यते स चेत्थंरूपो भवति—शशाख्यः। ईषत् किञ्चित् दन्तुरकः। दन्ता उन्नता यस्य। तनुद्विजनखः, तनवः अवरा द्विजा दन्ता नखाः कररुहाश्च यस्य। कोशेक्षणो विपुलपुटेक्षणः। शीघ्रगः शीघ्रगामी। विद्यासु मनःशिलागैरिकादिषु धातुषु वणिक्क्रियासु क्रयविक्रयेषु निरतः सक्तः। सम्पूर्णगण्डः समांसलमुखगण्डः। शठः परकार्ये विमुखः। सेनानीः सेनां नयति। प्रियमैथुनो मैथुनप्रियः। परजनस्त्रीसक्तचितः परजनानां सम्बन्धिन्यो याः स्त्रियस्तासु सक्तं चित्तं यस्य। चलोऽस्थिरमतिः। शूरः संग्रामप्रियः। मातृहितो जननीभक्तः। वनाचलनदीदुर्गेषु सक्तः, वनेष्वरण्येषु, अचलेषु पर्वतेषु, नदीषु सरित्सु, दुर्गेषु दुर्गादिषु सक्तोऽनुरक्तो भवति।।२०।।

अन्यच्च मानलक्षणमाह—

**दीर्घोऽङ्गुलानां शतमष्टहीनं साशङ्कचेष्टः पररन्ध्रविच्च।**
**सारोऽस्य मज्जा निभृतप्रचारः शशो ह्यतो नातिगुरुः प्रदिष्टः ॥२१॥**

शश पुरुष बानबे अंगुल ऊँचा, सब कार्यों में शङ्कायुत, परछिद्रान्वेषी, मज्जासार, स्थिर गति और अधिक स्थूलता से रहित होता है।।२१।।

अष्टहीनं शतमङ्गुलानां द्विनवत्यङ्गुलान्युच्छ्रितो भवतीत्यर्थः। साशङ्का चेष्टा यस्य। यद्यत् करोति तत् साशङ्कमिति। पररन्ध्रविच्च परजनानां छिद्रज्ञः। सारोऽस्य मज्जा। मज्जा-सारोऽयमित्यर्थः। निभृतप्रचारो नश्चलप्रचारः स्थिरगतिरित्यर्थः। अत्र शशो नातिगुरुर्नाति-स्थूलः प्रदिष्ट उक्तः।।२१।।

अन्यदपि रेखाचिह्नलक्षणमाह—

**मध्ये कृशः खेटकखड्गवीणा पर्यङ्कमालामुरजानुरूपाः।**
**शूलोपमाश्चोर्ध्वगताश्च रेखाः शशस्य पादोपगताः करे वा ।।२२।।**

शश पुरुष का मध्य भाग दुर्बल होता है तथा उसके पाँव या हाथ में ढाल, खड्ग, वीणा, पलंग, माला, मृदंग और त्रिशूल के समान रेखा या ऊर्ध्व रेखा होती है।।२२।।

मध्ये मध्यभागे कक्ष्याप्रदेशे कृशः क्षामः। खेटकः फरः। खड्गोऽसिः। वीणा बल्लकी। पर्यङ्कः प्रसिद्धः। आसनम्। माला स्रक्। मुरजो वादित्रविशेषः। एषा खेटकादीनामनुरूपाः सदृश्यो रेखाः। शूलोपमाश्च त्रिशूलसदृश्यः। ऊर्ध्वगता रेखाः शशस्य पादोपगताश्चरण-स्थिताः। करे हस्ततले वा स्थिता भवन्ति।।२२।।

अन्यदपि वयोज्ञानादिकमाह—

**प्रात्यन्तिको माण्डलिकोऽथवायं स्फिक्स्रावशूलाभिभवार्तमूर्तिः।**
**एवं शशः सप्ततिहायनोऽयं वैवस्वतस्यालयमभ्युपैति ।।२३।।**

शश पुरुष म्लेच्छ देश का माण्डलिक या राजा होता है तथा कुल्हे के टूटने आदि के कारण होने वाली पीड़ा से पीडित शरीर वाला होता है। इस तरह सत्तर वर्ष की आयु में वह यम के आलय में जाता है अर्थात् मृत्यु को प्राप्त कराता है।।२३।।

अयं शशः। प्रात्यन्तिको गह्वरवासिनामधिपतिः। माण्डलिकोऽथवा राजा भवति। स्फिक्स्रावे स्फिक्स्रवणे योऽसौ शूलस्तदभिभवेन तत्परिभवेन पीडया चार्तमूर्तिः पीडित-शरीरः। एवंविधः शशोऽयं सप्ततिहायनः सप्ततिवर्षो वैवस्वतस्यालयं यमस्य गृहमभ्युपैति। तथा च सारावल्याम्—

तनुद्विजः शीघ्रगतिः शशोऽयं शठोऽतिशूरो निभृतप्रचारः।
वनाद्रिदुर्गेषु नदीषु सक्तः क्षयोदयी नातिलघुः प्रसिद्धः।।

सेनानाथो बलिनिधिरतो दन्तुरश्चापि किञ्चि-
द्धातोर्वादे भवति निरतश्चञ्चलः कारणेषु।
स्त्रीसंसक्तः परजनगृहे मातृभक्तः सुजङ्घो
मध्ये क्षामो बहुविधमती रन्ध्रवेदी परेषाम्।।
पर्यङ्कशङ्खफरशस्त्रमृदङ्गमाला-
वीणोपमा यदि करे चरणे च रेखाः।

वर्षाणि सप्ततिमितानि करोति राज्यं
प्रात्यन्तिक: क्षितिपति: कथितो मुनीन्द्रै:।।

इति शश:।।२३।।

अधुना हंसलक्षणमाह—

**रक्तं पीनकपोलमुन्नतनसं वक्त्रं सुवर्णोपमं**
**वृत्तं चास्य शिरोऽक्षिणी मधुनिभे सर्वे च रक्ता नखा:।**
**स्रग्दामाङ्कुशशङ्खमत्स्ययुगलक्रत्वङ्गकुम्भाम्बुजै-**
**श्चिह्नैर्हंसकलस्वन: सुचरणो हंस: प्रसन्नेन्द्रिय: ॥२४॥**

लाल मुख वाला, पुष्ट कपोल वाला, ऊँची नासिका वाला, सुवर्ण के समान कान्ति वाला, गोल शिर वाला, शहद के समान आँख वाला, रक्त नखों से युत, माला, अंकुश, शंख, मत्स्ययुगल, यज्ञाङ्ग ( वेदी-स्रुव आदि ), कलश या कमल के समान रेखा से युत हाथ-पाँव वाला, हंस के समान मधुर स्वर वाला, सुन्दर पाँव वाला और निर्मल इन्द्रिय वाला **हंस** पुरुष होता है।।२४।।

जीवेन गुरुणा सह योऽसौ योगो हंसाख्य: समुत्पद्यते तस्येत्थंरूपम्। अस्य हंसस्य वक्त्रं मुखं रक्तवर्णम्। पीनकपोलं समांसलं मुखगण्डम्। उन्नतनसमुन्नतनासिकम्। सुवर्णोपमं कनकसदृशं मुखं भवति। वृत्तं परिवर्तुलं शिर:। अक्षिणी चक्षुषी मधुनिभे मधुसदृशे भवत:। नखा: कररुहा: सर्वे रक्ता रक्तवर्णा:। स्रग्दामो माला। अङ्कुश: प्रसिद्ध:। शङ्ख: प्रसिद्ध एव। मत्स्ययुगलं मीनयुग्मम्। क्रत्वङ्गं यज्ञाङ्गं वेदीस्रुवादि। कुम्भोऽम्बुकलश:। अम्बुजं पद्मम्। एतैश्चिह्नैश्चिह्नित:। हंसकलस्वनो हंसस्येव कलो मधुर: स्वन: शब्दो यस्य। सुचरण: शोभनपाद:। हंस: प्रसन्नेन्द्रिय: प्रसन्नानि निर्मलानि इन्द्रियाणि वाक्पाणिपादपायूपस्थानि यस्य।।२४।।

अन्यच्चास्य मानलक्षणमाह—

**रतिरम्भसि शुक्रसारता द्विगुणा चाष्टशतै: पलैर्मिति:।**
**परिमाणमथास्य षड्युता नवति: सम्परिकीर्तिता बुधै: ॥२५॥**

हंस पुरुष को जल में स्नेह और शुक्रसार होता है तथा इसकी ऊँचाई छियानबे अंगुल होती है।।२५।।

अम्भसि जलमध्ये रतिरस्य भवति। शुक्रसारता शुक्राधिकत्वम्। पलैरष्टशती द्विगुणा षोडशशतानि मितिर्मानम्। अथानन्तरं बुधै: पण्डितैरस्य हंसस्य षड्युता नवति: षण्णवतिरङ्गुलानां परिमाणं पृथुत्वमौच्च्यं चोक्तं कथितम्।।२५।।

अन्यदस्य वयोज्ञानादिकमाह—

**भुनक्ति हंस: खसशूरसेनान् गान्धारगङ्गायमुनान्तरालम्।**
**शतं दशोनं शरदां नृपत्वं कृत्वा वनान्ते समुपैति मृत्युम् ॥२६॥**

नेपाल, शूरसेन, गान्धार, गंगा और यमुना के मध्य का देश—इन देशों का हंस पुरुष भोग करता है तथा नब्बे वर्ष तक राज्य का भोग करके वन के समीप में ही मृत्यु को प्राप्त होता है।।२६।।

हंस खसान् शूरसेनान् गान्धारानेतान् सर्वानेव जनान् गङ्गायमुनान्तरालमन्तर्वेदीमित्यर्थः। एतान् सर्वान् भुनक्ति। शरदां वर्षाणां दशोनं शतं नवतिवर्षाणि नृपत्वं राज्यं कृत्वा वनान्ते वनसमीपे मृत्युं मरणमुपैति प्राप्नोति। तथा च सारावल्याम्—

रक्ताभ्युन्नतनासिकः सुचरणो हंसः प्रसन्नेन्द्रियो
गौरः पीनकपोलरक्तकरजो हंसस्वरः श्लेष्मलः।
शङ्खाब्जाङ्कुशदाममत्स्ययुगलैर्निस्त्रिंशमालाघटै-
श्चिह्नैः पादकराङ्कितो मधुनिभे नेत्रे च वृत्तं शिरः।।
सलिलाशयेषु रमते स्त्रीषु न तृप्तिं प्रयाति कामार्तः।
षोडशशतानि तुलितोऽङ्गुलानि दैर्घ्येण षण्णवतिः।।
पातीह देशांश्च स शूरसेनान् गान्धारगङ्गायमुनान्तरालम्।
जीवेन्नवघ्नीं दशवर्षसङ्ख्यां पश्चाद्वनान्ते समुपैति नाशम्।। इति।।२६।।

अथ रुचकलक्षणमाह—

**सुभ्रूकेशो रक्तश्यामः कम्बुग्रीवो व्यादीर्घास्यः।**
**शूरः क्रूरः श्रेष्ठो मन्त्री चौरस्वामी व्यायामी च ।।२७।।**

रुचक पुरुष सुन्दर भ्रू और केशों से युत, लालिमा लिये हुय श्याम वर्ण वाला, शंख के समान कण्ठ वाला, लम्बा मुख वाला, शूर, क्रूर, श्रेष्ठ, मन्त्री, चोरों का स्वामी और व्यायामी ( परिश्रमी ) होता है।।२७।।

कुजेन भौमेनायं रुचकाख्यो नाम योगः समुत्पद्यते। स त्वेतत्सुरूपो रुचकः। सुभ्रूकेशो भ्रुवः केशाश्च शोभना यस्य। रक्तश्यामः रक्तश्चासौ श्यामो रक्तश्यामः। कम्बुग्रीवो वलित्रयचितग्रीवः। व्यादीर्घास्यः, विशेषेण दीर्घमास्यं मुखं यस्य। शूरः संग्रामप्रियः। क्रूर उग्रस्वभावः। श्रेष्ठः प्रधानः। मन्त्री मन्त्रज्ञः। अथवा मन्त्री सचिवः। चौरस्वामी तस्कर-नाथः। व्यायामी श्रमपरः।।२७।।

अन्यदपि मानलक्षणमाह—

**यन्मात्रमास्यं रुचकस्य दीर्घं मध्यप्रदेशे चतुरस्रता सा।**
**तनुच्छविः शोणितमांससारो हन्ता द्विषां साहससिद्धकार्यः ।।२८।।**

रुचक पुरुष के मुख की लम्बाई के तुल्य उदर के मध्य भाग की चौड़ाई होती है। साथ ही वह थोड़ी कान्ति वाला, शोणित और मांस में सार वाला, शत्रु का नाश करने वाला और अपने साहस से कार्य को सिद्ध करने वाला होता है।।२८।।

रुचकस्य यन्मात्रमास्यं मुखं दीर्घं सा मध्यप्रदेशे उदरमध्ये चतुरस्रता विपुलत्वं

भवति। तनुच्छविः सूक्ष्मत्वक्। शोणितमांससारः—रक्तसारः, मांससारश्च। हन्ता द्विषाम्, शत्रूणां हन्ता घातकः। साहससिद्धकार्यः, साहसेन सिद्धं कार्यं यस्य। असमीक्षितकार्यकरणत्वं साहससिद्धत्वमिति।।२८।।

अन्यदपि करचरणयोश्चिह्नलक्षणमाह—

**खट्वाङ्गवीणावृषचापवज्रशक्तीन्द्रशूलाङ्कितपाणिपादः ।**
**भक्तो गुरुब्राह्मणदेवतानां शताङ्गुलः स्यात्तु सहस्रमानः ॥२९॥**

रुचक पुरुष के हाथ या पाँव में खट्वाङ्ग, वीणा, बैल, धनुष, वज्र, बर्छी, चन्द्र या त्रिशूल के समान चिह्न होते हैं। यह गुरु, ब्राह्मण और देवताओं का भक्त, सौ अंगुल ऊँचा और एक हजार पल शारीरिक भार वाला होता है।।२९।।

खट्वाया अङ्गं खट्वाङ्गम्। वीणा वल्लकी। वृषो दान्तः। चापं धनुः। वज्रमायुधम्। शक्तिरप्यायुधमेव। इन्द्रः। शूलं त्रिशूलम्। एतैरङ्कितौ चिह्नितौ पाणिपादौ हस्तचरणौ यस्य। गुरूणां ब्राह्मणानां देवतानां च भक्तः। शताङ्गुलः स्यात्, अङ्गुलानां शतं दैर्घ्येण पृथुत्वेन च स्याद्भवेत्। सहस्रमानः, सहस्रं पलानां परिमाणं यस्य।।२९।।

अन्यच्च वयोज्ञानादिकमाह—

**मन्त्राभिचारकुशलः कृशजानुजङ्घो**
**विन्ध्यं ससह्यगिरिमुज्जयिनीं च भुक्त्वा ।**
**सम्प्राप्य सप्ततिसमा रुचको नरेन्द्रः**
**शस्त्रेण मृत्युमुपयात्यथवाऽनलेन ॥३०॥**

रुचक पुरुष मन्त्र और अभिचार ( मारण, मोहन, वशीकरण, उच्चाटन और विद्वेषण ) में कुशल तथा कृश जानु और जंघा वाला होता है। यह विन्ध्याचल, सह्याचल और उज्जयिनी में राज्य का भोग कर सत्तर वर्ष की आयु में शस्त्र या अग्नि से मृत्यु को प्राप्त करता है।।३०।।

मन्त्रेषु कुशलः सक्तः। अभिचारेषु विद्वेषोच्चाटनवशीकरणमारणेषु कुशलः। कृशे दुर्बले जानुनी जङ्घे च यस्य। विन्ध्यं गिरिं विन्ध्यं पर्वतं ससह्यगिरिं सह्येन गिरिणा सहितम्। उज्जयिनीं नगरीं च भुक्त्वा नरेन्द्रो राजा सप्ततिसमाः सप्ततिवर्षाणि सम्प्राप्य शस्त्रेणायुधेनानलेनाग्निना वा मृत्युं मरणमुपयाति प्राप्नोति। तथा च सारावल्याम्—

दीर्घास्यः स्वच्छकान्तिर्बहुरुचिचपलः साहसावाप्तकार्य-
श्चारुभ्रूर्नीलकेशः श्रमकरणरतो मन्त्रविच्चौरनाथः।
रक्तश्यामोऽतिशूरो रिपुबलमथनः शङ्खकण्ठः प्रधानः
क्रूरो भक्तो नराणां द्विजगुरुनिरतः क्षाममज्जोऽनुजङ्घः।।

खट्वाङ्गपाशवृषकार्मुकवज्रवीणाशक्त्यङ्कहस्तचरणश्च तथाङ्गुलिश्च।
मन्त्राभिचारकुशलस्तुलया सहस्रं मध्यं च तस्य कथितं मुखदैर्घ्यतुल्यम्।।

विन्ध्याचलमस्तगिरीन् भुक्त्वाऽवन्तीं च सप्ततिं शरदाम् ।
शस्त्रानलकृतमृत्युं प्रयाति देवालयं रुचकः ।।

इति रुचकः ।।३०।।

अथ नृपानुकक्षलक्षणं व्याख्यायते। तत्रादावेव तत्प्रविभागमाह—

**पञ्चापरे वामनको जघन्यः कुब्जोऽथवा मण्डलकोऽथ साची ।**
**पूर्वोक्तभूपानुचरा भवन्ति सङ्कीर्णसंज्ञः शृणु लक्षणैस्तान् ।।३१।।**

पूर्वोक्त पाँच महापुरुषों के अतिरिक्त उनके अनुचररूप संकीर्ण संज्ञक वामनक, जघन्य, कुब्ज, मण्डलक, साची—ये पाँच पुरुष होते हैं। अब इनके लक्षणों को कहता हूँ; उसका श्रवण करो।।३१।।

अतोऽस्मात् पञ्चयोगकादपरेऽन्ये वामनकादय एषामेव भूपानामनुचरा भवन्ति। तद्यथा—वामनको जघन्यः कुब्जः। **अथवेति** । अथशब्द आनन्तर्ये, वाशब्दश्चार्थे। मण्डलकः, अथ साची। एते पूर्वोक्तानां पञ्चानां भूपानामनुचरा भवन्ति। पूर्वोक्ताः प्राक् कथिता ये भूपा राजानो मालव्यादयः। एषामनुचराः सुहृदो भवन्ति ते सङ्कीर्णसंज्ञाः पुरुषाः। तांश्च लक्षणैः शृणु।।३१।।

तत्र वामनकलक्षणमाह—

**सम्पूर्णाङ्गो वामनो भग्नपृष्ठः किञ्चिच्चोरूमध्यकक्ष्यान्तरेषु ।**
**ख्यातो राज्ञां ह्येष भद्रानुजीवी स्फीतो राजा वासुदेवस्य भक्तः।।३२।।**

**वामनक** पुरुष सम्पूर्ण अवयवों से युत, टूटी हुई पीठ वाला, अविकसित ऊरु, मध्य भाग और कक्ष्यान्तर वाला, प्रसिद्ध राजाओं के बीच में भद्र राजा का अनुजीवी, धनी, स्फीत, राजा तथा विष्णु का भक्त होता है।।३२।।

वामनसंज्ञः सम्पूर्णाङ्गः परिपूर्णावयवः। भग्नपृष्ठो भग्नं पृष्ठं यस्य। ऊरूप्रदेशे मध्ये मध्यभागे कक्ष्यान्तरेषु किञ्चिदीषद्भग्न एव किञ्चिदसम्पूर्णाङ्गः। राज्ञां पञ्चानां मध्ये एष वामनको भद्रानुजीवी भवति। भद्रस्यानु पश्चाज्जीवति। ख्यातः कीर्तियुक्तश्च। स्फीत ईश्वरो राजा भवति। स च वासुदेवस्य नारायणस्य च भक्तो भवति।।३२।।

अथ जघन्यलक्षणमाह—

**मालव्यसेवी तु जघन्यनामा**
**खण्डेन्दुतुल्यश्रवणः सुसन्धिः ।**
**शुक्रेण सारः पिशुनः कविश्च**
**रूक्षच्छविः स्थूलकराङ्गुलीकः ।।३३।।**

**क्रूरो धनी स्थूलमतिः प्रतीत-**
**स्ताम्रच्छविः स्यात् परिहासशीलः ।**

**उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाश-**
**परश्वधाङ्कः स जघन्यनामा ॥३४॥**

जघन्य पुरुष मालव्य राजा का सेवक, अर्धचन्द्र के समान कान वाला, सुन्दर अङ्गसन्धि वाला, शुक्रसार, पिशुन ( सूचक ), पण्डित, रूखी शरीरकान्ति वाला और मोटी हस्ताङ्गुलि वाला होता है। यह क्रूर, धनी, स्थूल बुद्धि, प्रसिद्ध, ताम्र वर्ण की तरह कान्ति वाला एवं हास्यप्रिय होता है तथा इसकी छाती, चरण और हाथ तलवार, बर्छी, पाश और परशु के समान रेखाओं से युत होते हैं।।३३-३४।।

जघन्यनामा यः स मालव्यस्य नृपस्यानुचरो भवति। खण्डेन्दुतुल्यश्रवणः खण्डश्चासाविन्दुः खण्डेन्दुः। अर्धचन्द्रसदृशकर्णः। सुसन्धिः शोभनाङ्गसन्धिः। शुक्रेण सारः शुक्राधिकः। पिशुनः सूचकः। कविः पण्डितः। रूक्षच्छविरस्निग्धत्वक्। स्थूलकराङ्गुलीकः स्थूलाः कराङ्गुलयो यस्य।

क्रूरः क्रोधशीलः। धनी धनवान्। स्थूलमतिर्महाबुद्धिः। प्रतीतः प्रख्यातः। ताम्रच्छविः रक्तत्वक्। स्याद् भवेत्। परिहासशीलः परिहसनप्रियः। स च जघन्यनामा। अपरः पाठो वानुचरः स नित्यम्। सर्वकालमेवानुचर इति। उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाशपरश्वधाङ्कः उरो वक्षः, अङ्घ्री पादौ, हस्तौ पाणी, एतेषु असिः खड्गः शक्तिरायुधविशेषः। पाशः सर्पः। अथवा पाशरूप एव। परश्वधमायुधम्। एतैरङ्कितश्चिह्नितो भवति।३३-३४।।

अथ कुब्जलक्षणमाह श्लोकद्वयेन। युगलकम्—

**कुब्जो नाम्ना यः स शुद्धो ह्यधस्तात्**
**क्षीणः किञ्चित् पूर्वकाये नतश्च।**
**हंसासेवी नास्तिकोऽर्थैरुपेतो**
**विद्वान् शूरः सूचकः स्यात् कृतज्ञः ॥३५॥**

**कलास्वभिज्ञः कलहप्रियश्च**
**प्रभूतभृत्यः प्रमदाजितश्च।**
**सम्पूज्य लोकं प्रजहात्यकस्मात्**
**कुब्जोऽयमुक्तः सततोद्यतश्च ॥३६॥**

कुब्ज पुरुष नाभि से नीचे पूर्ण अंग और ऊपर कुछ क्षीण और नत अंग वाला, हंस नामक राजा का सेवक, नास्तिक, धनी, विद्वान्, क्रूर, सूचक और कृतज्ञ होता है। यह कुब्ज पुरुष कलाओं का ज्ञाता, कलहप्रिय, बहुत भृत्यों से युत, स्त्रीजित, लोगों का आदर करके अकस्मात् छोड़ने वाला और सदा उद्यमी होता है।।३५-३६।।

**कुब्जो नाम्नेति**। कुब्जो नाम्ना यः सोऽधस्तादधोभागाच्छुद्धः परिपूर्णाङ्गः पूर्वकाये प्राग्देहभागे किञ्चित् क्षीणः किञ्चिन्नतश्च। हंसासेवी हंसस्यानुचरः। नास्तिकः क्रियारहितो

लौकायतिकप्राय:। अर्थैरुपेतोऽर्थसंयुक्त:। विद्वान् पण्डित:। शूर: संग्रामप्रिय:। सूचक: पिशुन:। स्याद् भवेत्। कृतज्ञ: कृतं जानाति।

**कलास्वभिज्ञ इति**। कलासु गीतनृत्यवाद्येषु अभिज्ञ आभिमुख्येन जानाति। कलहप्रियश्च भवति। प्रभूतभृत्यो बहुभृत्य:। प्रमदाजितश्च स्त्रीभिर्निर्जित:। लोकं जनम्, सम्पूज्यार्चयित्वा अकस्मादेव प्रजहाति त्यजति। अयं कुब्ज उक्त: कथित: सततोद्यत: सर्वकालमुत्साही युगलकम्।।३५-३६।।

अथ मण्डलकलक्षणमाह श्लोकद्वयेन—

**मण्डलकलक्षणमतो रुचकानुचरोऽभिचारवित् कुशल:।**
**कृत्यावेतालादिषु कर्मसु विद्यासु चानरत:।।३७।।**

**वृद्धाकार: खरपरुषमूर्धजश्च शत्रुनाशने कुशल:।**
**द्विजदेवयज्ञयोगप्रसक्तधी: स्त्रीजितो मतिमान्।।३८।।**

**मण्डलक** नामक पुरुष रुचक राजा का सेवक, अभिचार ( मारण, मोहन, उच्चाटन, वशीकरण और विद्वेषण ) का ज्ञाता, समर्थ, कृत्या ( अभिचार मन्त्र के द्वारा शत्रुवध के लिये अग्निमध्य से जो स्त्री उत्पन्न होती है, उसको कृत्या कहते हैं ), वेताल ( मरे हुये को मन्त्र द्वारा उठाने को वेताल कहते हैं ) आदि विद्याओं में सक्त, वृद्ध के समान शरीर वाला, कठोर और रूखे केश वाला, शत्रु को मारने में कुशल, ब्राह्मण, देवता, यज्ञ और योग में आसक्त बुद्धि वाला, स्त्रीजित एवं बुद्धिमान् होता है।।३७-३८।।

**मण्डलकलक्षणमत इति**। अतोऽस्मात् कुब्जादनन्तरं मण्डलकलक्षणं भवति। स च कीदृक्? रुचकानुचरो रुचकस्यानुचर:। रुचकानुजीवी भवति। अभिचारविदभिचारज्ञ:। विद्वेषोच्चाटनवशीकरणेष्वभिज्ञ:। कुशल: समर्थ:। कृत्यावेतालादिषु अभिचारकैर्मन्त्रै: शत्रुवधार्थमग्निमध्याद् या स्त्री उत्थाप्यते सा कृत्या। शवशरीरस्योत्कृष्टस्य मन्त्रै: पुनरुत्थापनं वेताल:। आदिग्रहणाद् यक्षभूतेषु कर्मसु तथा तद्विद्यासु चानुरत: सक्त:।

वृद्धाकारो वृद्धसदृशशरीर:। खरपरुषमूर्धज: खरा: कठिना: परुषा रूक्षा मूर्धजा: केशा यस्य। शत्रुनाशने रिपूणां हनने कुशल: समर्थ:। द्विजानां ब्राह्मणानां देवानां सुराणां यज्ञानामश्वमेधादीनां तथा योगेषु सांख्यादिशास्त्रेषु प्रसक्ता धीर्बुद्धिर्यस्य। केचिद् द्विजदेवयज्ञदोहप्रसक्तधीरिति पठन्ति। अथवा यज्ञं दुहन्ति ये तेऽग्निहोत्रिण:। स्त्रीजित: स्त्रीभि: पराजित:। मतिमान् बुद्धिमानिति युगलकम्।।३७-३८।।

अथ साचिलक्षणम्—

**साचीति य: सोऽतिविरूपदेह: शशानुगामी खलु दुर्भगश्च।**
**दाता महारम्भसमाप्तकार्यो गुणै: शशस्यैव भवेत् समान:।।३९।।**

साचि पुरुष अति कुरूप, शश नामक राजा का सेवक, लोगों का अप्रिय, दानी,

बड़े-बड़े कार्यों को प्रारम्भ करके समाप्त करने वाला और अपने गुणों से शश के समान ही होता है।।३९।।

**साचीति**। यः साची नाम सोऽतिविरूपदेहोऽशोभनशरीरः। शशानुगामी शशस्यानुगामी पश्चाद् गच्छति। शशानुचरः। खल्वित्यव्ययं वाक्यालङ्कारे। दुर्भगो जनानामवल्लभः। दाता दानशीलः। महारम्भसमाप्तकार्यः, महारम्भान् करोति तेषु च समाप्तकार्योऽन्तगः। गुणैः पूर्वोक्तैः शशस्यैवं समानः सदृशस्तुल्यो भवेदित्यर्थः।।३९।।

अथ पुरुषलक्षणस्य प्रभावमाह—

**पुरुषलक्षणमुक्तमिदं मया मुनिमतानि निरीक्ष्य समासतः।**
**इदमधीत्य नरो नृपसम्मतो भवति सर्वजनस्य च वल्लभः ॥४०॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां पञ्चमहापुरुषलक्षणं नामैकोनसप्ततितमोऽध्यायः ॥६९॥**

मुनियों के मतों को देखकर मैंने यह पुरुष-लक्षण कहा है। इसको जानकर मनुष्य राजाओं का इष्ट और सब लोगों का प्रिय होता है।।४०।।

**इति 'विमला'हिन्दीटीकायां पञ्चमहापुरुषलक्षणाध्याय एकोनसप्ततितमः ॥६९॥**

मुनिमतानि ऋषिप्रणीतानि शास्त्राणि निरीक्ष्यावलोक्य समासतः संक्षेपतो मयेदं पुरुषलक्षणमुक्तं कथितम्। इदं च पुरुषलक्षणं नरः पुरुषोऽधीत्य ज्ञात्वा नृपसम्मतो राज्ञां सम्मत इष्टो भवति। सर्वजनस्य च सर्वलोकस्य च वल्लभः प्रियो भवति। यतः पूर्वमेवाचार्येण द्वयं प्रतिज्ञातम्। यथा—

ज्यैतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम्।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये।।

इत्येवं विचार्य सर्वागमतः पुरुषलक्षणं कथितम्। तच्च चिन्तनीयमन्यदूह्यं चेति।।४०।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पञ्चमहापुरुषलक्षणं नामानुचरैः सहैकोनसप्ततितमोऽध्यायः ॥६९॥**

# अथ कन्यालक्षणाध्याय:

अथ कन्यालक्षणं व्याख्यायते। तत्रादावेव पादलक्षणम्—

**स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्या:**
**पादौ समोपचितचारुनिगूढगुल्फौ ।**
**श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या-**
**स्तामुद्वहेद् यदि भुवोऽधिपतित्वमिच्छेत् ।।१।।**

जिस कन्या के पाँव स्निग्ध, ऊँचे, आगे से पतले और लाल नखों से युत, समान, पुष्ट, सुन्दर और छिपे हुये गुल्फ वाले, मिली हुई अंगुली वाले तथा कमल की कान्ति के समान कान्ति वाले हों; उससे पृथ्वीपतित्व की कामना रखने वाले मनुष्य को विवाह करना चाहिये।।१।।

यस्या: कुमार्या: कन्यकाया:। पादौ चरणौ। स्निग्धोन्नताग्रतनुताम्रनखौ स्निग्धौ सस्नेहावुन्नतावुच्चौ कूर्मपृष्ठौ, अग्रे तनू ययो:। ताम्रनखौ रक्तवर्णौ नखौ ययो:। समोपचितचारुनिगूढगुल्फौ समौ तुल्यावुपचितौ समांसलौ चारू दर्शनीयौ निगूढावनुल्बणौ गुल्फौ ययो:। तथाश्लिष्टाङ्गुली श्लिष्टा घना अङ्गुल्य: पादशाखा ययो:। कमलकान्तितलौ कमलस्य पद्मस्येव कान्तिस्तले ययो:। तथाभूतौ पादौ यदि भुवो भूम्या अधिपतित्वं राज्यमिच्छेत् तदा तामुद्वहेत्।।१।।

पुनरपि पादजङ्घाजानूरुगुह्यमणीनां लक्षणमाह—

**मत्स्याङ्कुशाब्जयववज्रहलासिचिह्ना-**
**वस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ ।**
**जङ्घे च रोमरहिते विशिरे सुवृत्ते**
**जानुद्वयं सममनुल्बणसन्धिदेशम् ।।२।।**

**ऊरू घनौ करिकरप्रतिमावरोमा-**
**वश्वत्थपत्रसदृशं विपुलं च गुह्यम् ।**
**श्रोणीललाटमुरुकूर्मसमुन्नतं च**
**गूढो मणिश्च विपुलां श्रियमादधाति ।।३।।**

जिस कन्या के पसीने से रहित कोमल पादतल में मत्स्य, अंकुश, कमल, जौ, वज्र, हल और खड्ग के समान रेखा हो; रोमहीन नाड़ियों से रहित, सुन्दर और गोल जङ्घा हो; स्थूल सन्धि वाले समान जानु हों; घने, हाथी के सूँड़ के समान और रोमरहित ऊरु हो; पीपल के पत्ते के समान विस्तीर्ण भग हो; कछुये के पृष्ठ के समान विस्तीर्ण

कटिप्रदेश हो और छिपी हुई मणि हो, वह बहुत लक्ष्मी प्रदान करती है।।२-३।।

**मत्स्याङ्कुशाब्जेति** । मत्स्यो मीनः। अङ्कुशः प्रसिद्धः। अब्जं पद्मम्, यवो यवाकारः, वज्रमायुधम्। हलं लाङ्गलम्। असिः खड्गः। एतैश्चिह्नैश्चिह्नितौ चरणौ पादौ। तथाऽस्वेदनौ स्वेदरहितौ। मृदुतलौ मृदुनी तले ययोस्तौ तथाभूतौ प्रशस्तौ। तथा च समुद्रः—

स्निग्धौ ताम्रनखौ धन्यौ कूर्मपृष्ठौ सुलोहितौ।
निगूढगुल्फौ सुश्लिष्टौ घनाङ्गुलिसमन्वितौ।।
मत्स्याङ्कुशयवाब्जेषु हलवज्रासिचिह्नितौ।
सुस्पृशौ रोमरहितौ कुमार्याश्चरणौ शुभौ।।
अतो विपर्यस्तगुणौ दुःखदारिद्र्यभागिनौ।
यस्याः पादौ नतौ कन्यामुद्वहेन्न कदाचन।।

**जङ्घे च रोमरहिते इति** । जङ्घे रोमरहिते रोमवर्जिते। विशिरे शिरारहिते। सुवृत्ते परिवर्तुले। जानुयुगं जानुयुगलं समं तुल्यम्। अनुल्बणसन्धिदेशमस्थूलसन्धिदेशम्। सुश्लिष्टे जानुनी यत्र।

**ऊरू घनाविति** । ऊरू घनौ सन्ततौ करिकरप्रतिमौ गजहस्तसदृशौ। अरोमौ रोमवर्जितौ। गुह्यं भगम्, अश्वत्थपत्रसदृशम्, अश्वत्थवृक्षपत्राकारम्, विपुलं विस्तीर्णम्। श्रोण्या ललाटं श्रोणीललाटम्। तच्चोरु विस्तीर्णम्। कूर्मसमुन्नतं कूर्मवदुच्चं कूर्मपृष्ठाकारम्। मणिश्च निगूढोऽदृश्यमानो विपुलां विस्तीर्णां श्रियं लक्ष्मीमादधाति करोति। तथा च समुद्रः—

जङ्घे तु रोमरहिते शिराहीने सुवर्तुले।
सुश्लिष्टे जानुनी धन्ये शिरारोमविवर्जिते।।
गजहस्तसमावूरू सम्पन्नौ सन्ततौ समौ।
सुस्पर्शं कूर्मपृष्ठं वा विपुलं जघनं शुभम्।
मणिर्निगूढः सुश्लिष्टः स्फिजौ च विपुलौ शुभौ।
नाभिदेशः सुगुप्तश्च यस्याः सा धनभागिनी।। इति।।२-३।।

अथ नितम्बनाभीलक्षणमाह—

**विस्तीर्णमांसोपचितो नितम्बः गुरुश्च धत्ते रशनाकलापम्।**
**नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्तगता च शस्ता ।।४।।**

जिन स्त्रियों के विस्तीर्ण, पुष्ट, भारी और काञ्चीकलाप से युत नितम्ब हों, गम्भीर, विस्तीर्ण और दक्षिणावर्त्त नाभि हो, वे शुभ होती हैं।।४।।

नितम्बः कटिभागः, स च विस्तीर्णः पृथुलो मांसोपचितः समांसलः, गुरुश्च गौरवयुक्तो रशनाकलापं धत्ते धारयति। रशनायाः कलापो रशनाकलापः। रशना मेखला, तस्याः कलापो विस्तारः, तं धारयति। तथा च—

जघनं विपुलं यस्याः सुस्पर्शं रोमवर्जितम्।
सुवर्णाभरणैर्युक्ता सा भवेद्राज्यभागिनी।।

**नाभिर्गभीरेति**। अङ्गनानां स्त्रीणां नाभिर्गभीरा गम्भीरा, विपुला विस्तीर्णा, प्रदक्षिणावर्तेन च गता प्रशस्ता धन्या। तथा च—

गम्भीरा विपुला नाभी दक्षिणावर्तमाश्रिता।
शस्ता विपर्यये नेष्टा वामावर्ता विशेषतः।। इति।।४।।

अथ मध्यस्तनोरुवक्षोग्रीवालक्षणमाह—

**मध्यं स्त्रियास्त्रिवलिनाथमरोमशं च**
**वृत्तौ घनावविषमौ कठिनावुरस्यौ।**
**रोमप्रवर्जितमुरो मृदु चाङ्गनानां**
**ग्रीवा च कम्बुनिचितार्थसुखानि दत्ते।।५।।**

जिस स्त्री का मध्यभाग त्रिवलि से युत और रोमरहित हो, गोल, पुष्ट, समान और कठोर दोनों स्तन हों, रोमरहित और कोमल छाती हो तथा शङ्ख के समान तीन रेखाओं से युत कण्ठ हो, वह धन और सुख प्रदान करती है।।५।।

स्त्रियो योषितो मध्यं मध्यभागं त्रिवलिनाथं त्रिवलिस्वामिनं वलित्रयोपविष्टं वलित्रययुक्तमित्यर्थः। अरोमशं रोमरहितम्। तथा च—

मध्यं वलित्रयचितं सुस्पर्शं रोमवर्जितम्।
यस्याः सा राजमहिषी कन्या नास्त्यत्र संशयः।।

**वृत्तौ घनाविति**। उरसि भवावुरस्यौ स्तनौ। वृत्तौ परिवर्तुलौ। घनौ सन्ततौ। अविषमावतुल्यौ। कठिनौ कर्कशौ। तथा च—

स्तनौ सुवर्तुलौ धन्यौ सन्ततौ कठिनौ तथा।
अरोमौ च शिराहीनौ पुत्रसौख्यधनप्रदौ।।

**रोमप्रवर्जितमिति**। अङ्गनानां स्त्रीणामुरो वक्षो रोमवर्जितं रोमरहितं मृदु सुस्पर्शं च शुभम्। तथा च—

वक्षो विलोम सुस्पर्शं विस्तीर्णं पतिसौख्यदम्।
शिराततं च विषमं वैधव्यायासशोकदम्।।

**ग्रीवा चेति**। ग्रीवा शिरोधरा कम्बुनिचिता वलित्रयोपचिता। अर्थान् सुखानि च दत्ते ददाति। तथा च गर्गः—

स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता।
न चातिदीर्घा चतुरङ्गुला च ग्रीवा च दीर्घा भवतीह धन्या।। इति।।५।।

अथाधरदन्तलक्षणमाह—

**बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपभृत्।**
**कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः ॥६॥**

बन्धुजीव पुष्प के समान और सुन्दर बिम्बफल के समान अधर तथा कुन्दपुष्प के समान दाँत स्त्रियों को पतिसुख और बहुत धन देते हैं।।६।।

अधरोऽधरोष्ठो बन्धुजीवकुसुमोपमः, बन्धुजीवकुसुमसदृशोऽतिलोहित इत्यर्थः। मांसलो मांसोपेतः। रुचिरबिम्बरूपभृद् रुचिरस्य दीप्तियुक्तस्य बिम्बस्य बिम्बफलस्य तुल्यं रूपं बिभर्ति धारयति। तथा च—

अधरो बिम्बसङ्काशो मांसलोऽस्फुटितस्तथा।
यस्याः सा राजमहिषी कुमारी नात्र संशयः।।

**कुन्दकुड्मलेति**। द्विजा दन्ताः कुन्दकुड्मलनिभाः कुन्दः पुष्पविशेषः, तस्य कुड्मलानि कलिकाः, तन्निभास्तत्सदृशाः। समास्तुल्याः। योषितां स्त्रीणाम्। पतिसुखं भर्तृसुखम्। अमितमपरिमितं प्रभूतमर्थं धनं च ददति। तथा च गर्गः—

तीक्ष्णाग्रवृत्ताः सुसमा दृढाश्च शुभा मृणालेन्दुसमानवर्णाः।
निरन्तराः स्त्रीषु भवन्ति धन्या द्विजास्तथा ये रजतप्रकाशाः।।

तथा च समुद्रः—

द्वात्रिंशद्दशना यस्याः सर्वे गोक्षीरपाण्डुराः।
सर्वे शिखरिणः स्निग्धा राजभार्या च सा भवेत्।। इति।।६।।

अथ वदननासिकादृशां लक्षणमाह—

**दाक्षिण्ययुक्तमशठं परपुष्टहंस-**
**वल्गु प्रभाषितमदीनमनल्पसौख्यम्।**
**नासा समा समपुटा रुचिरा प्रशस्ता**
**दृङ्नीलनीरजदलद्युतिहारिणी च ॥७॥**

सरस, शठता से रहित, कोकिल या हंस के समान मधुर और दीनतारहित स्त्री का वचन अधिक सुखद होता है। समान, समान पुटों से युत और सुन्दर स्त्री की नासिका प्रशस्त होती है तथा नील कमल की कान्ति को हरण करने वाली स्त्री की दृष्टि शुभ होती है।।७।।

प्रभाषितं वचनं दाक्षिण्ययुक्तमानुकूल्यसंयुक्तं सुरसम्। अशठं शठभावरहितम्। परपुष्टः कोकिलः। हंसः पक्षिविशेषः। तत्सदृशं वल्गु रम्यम्। तथा चादीनं दैन्यरहितं यदि भवति तदानल्पसौख्यं प्रभूतसौख्यम्। तथा च गर्गः—

हंसस्वना दुन्दुभिनेमिघोषा मेघस्वनाः शङ्खनिनादघोषाः।
मयूरचक्रप्रतिमस्वनाश्च स्त्रियस्तथा कोकिलतुल्यशब्दाः।।
कादम्बचक्राह्वयकिङ्किणीषु समस्वना याश्च भवन्ति नार्यः।
सर्वाः प्रशस्ता धनपुत्रवत्यो भवन्ति धर्मानुरताः सदा ताः।।

**नासा समेति।** नासा नासिका समा स्पष्टा। समपुष्टा तुल्या नासापुटा। रुचिरा सुकान्ता। प्रशस्ता शुभा। तथा च—

स्पष्टा समा समपुटा नासा सौभाग्यदा मता।

**दृगिति।** दृग्दृष्टिः, नीलनीरजदलद्युतिहारिणी, नीलं च तन्नीरजं नीलनीरजं नीलोत्पलम्, तस्य दलं पत्रं तस्य द्युतिं कान्तिं हरति तच्छीला नीलनीरजद्युतिहारिणी प्रशस्ता। तथा च—

नीलनीरजपत्राभा दृष्टिर्यस्या भवेत् सदा।
सा राजमहिषी ज्ञेया ज्योतिःशास्त्रविशारदैः।। इति।।७।।

अधुना भ्रूललाटलक्षणमाह—

**नो सङ्गते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे।**
**अर्धेन्दुसंस्थानमरोमशं च शस्तं ललाटं न नतं न तुङ्गम् ।।८।।**

विना मिले, न बहुत चौड़े, न बहुत लम्बे और बाल चन्द्र के समान वक्र स्त्री के भ्रू शुभ होते हैं तथा अर्धचन्द्र के समान, रोमरहित और न नत-न उन्नत ( समान ) स्त्री का ललाट शुभ होता है।।८।।

भ्रुवौ नो सङ्गते न श्लिष्टे। नातिपृथू विस्तीर्णे। न लम्बे नातिसङ्गते। बालशशाङ्कवक्रे। शशाङ्के चन्द्रे बालो यः शशाङ्कश्चन्द्रो द्वितीयायां तिथौ तद्वद्वक्रे कुटिले शस्ते। तथा च—

बालचन्द्रसमे वक्रे न लम्बे नातिसङ्गते।
भ्रुवौ यस्याः कुमार्यास्तां महाराज्ञीं विनिर्दिशेत्।।

**अर्धेन्दुसंस्थानमिति।** ललाटं मुखपृष्ठमर्धेन्दुसंस्थानमर्धचन्द्राकारमरोमशं रोमरहितम् न नतं न निम्नं न तुङ्गं नोच्चम्। समं शस्तं प्रशस्तमित्यर्थः। तथा च—

नोन्नतं न च निम्नं वा शिरो रोमविवर्जितम्।
अर्धचन्द्राकृतिं सौम्यं ललाटं शस्यते स्त्रियाः।। इति।।८।।

अथ कर्णकेशशिरोलक्षणमाह—

**कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समाहितं समम्।**
**स्निग्धनीलमृदुकुञ्चितैकजा मूर्धजाः सुखकराः समं शिरः ।।९।।**

स्त्री के अल्प मांसयुत, कोमल, समान और संलग्न दोनों कान शुभ होते हैं। स्निग्ध, अतिकृष्ण, कोमल, कुटिल और एक रोमकूप में एक रोम सुख देने वाले होते हैं तथा समान ( न नीचा, न ऊँचा ) शिर शुभ होता है।।९।।

कर्णयुग्मं श्रोत्रद्वयमपि युक्तमांसलं न निर्मांसमित्यर्थ:। मृदु कोमलं समं तुल्यं समाहितं संलग्नं शस्यते स्तूयते। तथा च—

नातिलम्बौ मृदू तुल्यौ संलग्नौ युक्तमांसलौ।
कर्णौ यस्या: स्मृता सा तु राजभार्या न संशय:।।

**स्निग्धेति**। मूर्धजा: केशा: स्निग्धा निर्मला नीला अतिकृष्णवर्णा:। मृदव: कोमला: कुञ्चिता: कुटिला:। एकजा एकरोमकूपे भवा:। सुखकरा: सुखं कुर्वन्ति। तथा च—

सुस्निग्धा नीलवर्णाश्च मृदव: कुञ्चिता: कचा:।
शस्यन्ते योषितो नित्यं धनपुत्रप्रदा यत:।।

समं शिर:, शिर: समं न निम्नं नोन्नतं सुखकरमेव। तथा च—

नोन्नतं नाथवा निम्नं शिर: सौख्यप्रदं स्मृतम्।। इति।।९।।

अथ हस्तपादयोर्लक्षणमाह—

**भृङ्गारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभि-**
**र्मालाकुण्डलचामराङ्कुशयवै: शैलैर्ध्वजैस्तोरणै:।**
**मत्स्यस्वस्तिकवेदिकाव्यजनकै: शङ्खातपत्राम्बुजै:**
**पादे पाणितलेऽथवा युवतयो गच्छन्ति राज्ञीपदम्।।१०।।**

जिस स्त्री के पादतल या पाणितल में भृङ्गार ( झारी ), आसन, घोड़ा, हाथी, रथ, बिल्ववृक्ष, यज्ञस्तम्भ, शर, माला, कुण्डल, चामर, अंकुश, जौ, पर्वत, ध्वज, तोरण, मत्स्य, स्वस्तिक, यज्ञवेदी, पंखा, शंख, छत्र और कमल के समान रेखायें हों, वह रानी होती है।।१०।।

भृङ्गारो जलभाण्डं प्रसिद्धम्। आसनं पीठम्। वाजी तुरग:। कुञ्जरो हस्ती। रथ: प्रसिद्ध:। श्रीवृक्षो बिल्व:। यूपो यज्ञयूप:। इषु: शर:। एतैश्चिह्नै:। तथा माला स्रक्। कुण्डलं कर्णाभरणम्। चामरं बालव्यजनम्। अङ्कुश: प्रसिद्ध:। यवो यवाकार:। एतैरपि। शैल: पर्वत:। ध्वज: पताकारूपो बहुपटनिर्मित:। तोरणं प्रसिद्धम्। एतैरपि। तथा मत्स्यो मीन:। स्वस्तिकश्चिह्नविशेष:। वेदिका वेदी चतुरस्रा मध्यक्षामा। व्यजनकं तालवृन्तम्। एतैरपि। शङ्ख: प्रसिद्ध:। आतपत्रं छत्रम्। अम्बुजं पद्म:। एतैर्भृङ्गारादिभिश्चिह्नै: पादे चरणतले पाणितले वा स्थितैर्युवतय: स्त्रिय:। गच्छन्ति राज्ञीपदम्, राज्ञीस्थानं गच्छति प्राप्नुवन्ति। तथा च गर्ग:—

मर्त्य: समुद्रो वसुधा धनं च ध्वजस्तथाद्रिर्दिनकृच्छशी च।
शङ्ख: पुरं चक्रमथासनं च यूपस्तथा व्यञ्जनतोरणं च।।
छत्रं यव: पद्ममथाङ्कुशं च सिंहोऽथवा स्वस्तिक एव वापी।
कूर्म: पताका मकर: पुमांश्च दण्ड: सरित् पूर्णघटो रथश्च।।

पाणौ तथैतानि भवन्ति यासामेकं तथा द्वे च बहूनि वापि।
अत्यन्तसौख्यं बहुपुत्रतां च स्त्रीणां तथा लक्षणमादिशेत॥।

तथा च समुद्रः—

मत्स्यः पाणितले छत्रं कच्छपो वा ध्वजोऽपि वा।
श्रीवत्सं कमलं शङ्खमासनं चामरं तथा॥।
अङ्कुशश्चैव माला च यस्या हस्ते तु दृश्यते।
एकं सा जनयेत् पुत्रं राजानं पृथिवीपतिम्॥।
यस्याः पाणितले दृश्यः कोष्ठागारः सतोरणः।
अपि दासकुले जाता सा राजमहिषी भवेत्॥ इति॥१०॥

अथ हस्तलक्षणमाह—

**निगूढमणिबन्धनौ तरुणपद्मगर्भोपमौ**
**करौ नृपतियोषितस्तनुविकृष्टपर्वाङ्गुली।**
**न निम्नमति नोन्नतं करतलं सुरेखान्वितं**
**करोत्यविधवां चिरं सुतसुखार्थसम्भोगिनीम्॥११॥**

रानी के हाथ नवीन कमलगर्भ के समान पतले और लम्बे पर्वों वाली अंगुलियों से युत और छिपे हुये मणिबन्ध वाले होते हैं। साथ ही न नीचा न ऊँचा और उत्तम रेखाओं से युत करतल वाली स्त्री अविधवा, पुत्रसुख और धन एवं सम्भोगसुख से समन्वित होती है॥११॥

करौ हस्तौ। निगूढमणिबन्धनौ, निगूढावनुल्बणौ मणिबन्धनौ प्रकोष्ठौ ययोः। मणिबन्धनग्रहणेन हस्तमूलमुच्यते। तरुणपद्मगर्भोपमौ, तरुणमभिनवं यत् पद्मं कमलं तस्य गर्भमभ्यन्तरं तदुपमौ तत्सदृशौ। तथा तनुविकृष्टपर्वाङ्गुली तनुः सूक्ष्मा ययोरङ्गुल्यः करशाखाः। तथा विकृष्टानि दीर्घाणि पर्वाणि यासामङ्गुलीनां ताश्च विद्यन्ते ययोः। तथाभूतौ करौ नृपतियोषितो राजपत्न्या भवतः। करतलं हस्ततलं नो निम्नं नातिनीचं नात्युन्नतमुच्चं सुरेखान्वितं शोभनाभी रेखाभिरन्वितं युक्तम्। चिरं चिरकालमविधवां भर्तृसंयुतां सुतसुखार्थसम्भोगिनीं पुत्रसुखधनसम्भोगयुक्तां तथाविधं हस्ततलं तां कन्यकां करोति। तथा च—

निगूढमणिबन्धौ तु पद्मगर्भसमप्रभौ।
विकृष्टाङ्गुलिपर्वाणौ करौ नृपतियोषितः॥।
नोच्चं न निम्नं सुसमं सुरेखाभिः समन्वितम्।
तलं यस्या भवेन्नार्याः सा राजमहिषी स्मृता॥ इति॥११॥

अन्यदप्याह—

**मध्याङ्गुलिं या मणिबन्धनोत्था**
**रेखा गता पाणितलेऽङ्गनायाः।**

मार्ग में गमन करने वाले मनुष्य के ऊपर, सैन्य में राजा के ऊपर, पुर में देवता ( नगर-स्वामी ) के ऊपर, जन-समुदाय में प्रधान के ऊपर, प्रधानों के साम्य में जाति के ऊपर, जातियों के साम्य में विद्या के ऊपर और विद्या के साम्य में वयोधिक के ऊपर शाकुन का फल पड़ता है।।११।।

पथि गच्छतः पुंस आत्मानं स्वशरीरमुद्दिश्य शाकुनं शुभाशुभं लक्षयेत्। सैन्ये सेनायां नृपं राजानमुद्दिश्य। पुरे नगरे देवतां दैवतस्वामिनमुद्दिश्य। पुरग्रहणमुपलक्षणार्थम्। ग्रामाधिपतिमुद्दिश्य। सार्थे जनसमूहे प्रधानमर्थपतिमुद्दिश्य। यदा सार्थे बहवः प्रधाना भवन्ति, तदा साम्ये जातितो जातिसाम्ये विद्याया योऽधिकस्तम्। विद्यासाम्ये या वयसोऽधिकस्तमिति।।११।।

अधुना दिग्लक्षणफलनियमांश्चाह—

**मुक्तप्राप्तैष्यदर्कासु फलं दिक्षु तथाविधम्।**
**अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः ॥१२॥**

सूर्योदय से एक प्रहर दिन उठे तक ऐशानी दिशा मुक्तसूर्या, पूर्वदिशा प्राप्तसूर्या और अग्नि दिशा ऐष्यत्सूर्या होती है। एक प्रहर के बाद दो पहर दिन उठे तक पूर्वदिशा मुक्तसूर्या, आग्नेयी दिशा प्राप्तसूर्या और दक्षिण दिशा ऐष्यत्सूर्या होती है। इसी प्रकार शेष छः प्रहरों में भी जानना चाहिये। मुक्तसूर्या 'अङ्गारिणी', प्राप्तसूर्या 'दीप्ता', ऐष्यत्सूर्या 'धूमिनी' और शेष पाँच दिशायें 'शान्ता' कहलाती हैं।।१२।।

अत्र तावदादित्यस्य भ्रमणवशेनाष्टासु दिक्ष्ववस्थितिर्भवति। तद्यथा—सूर्योदयादारभ्य यावद्दिनस्य प्रहरस्तावदैशानी दिङ्मुक्तसूर्या। पूर्वा प्राप्तसूर्या। आग्नेयी एष्यत्सूर्या। ततः प्रहरादूर्ध्वं यावत्प्रहरद्वयं प्राची मुक्तसूर्या। आग्नेयी प्राप्तसूर्या। दक्षिणैष्यत्सूर्या। ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावदाग्नेयी मुक्तसूर्या। दक्षिणा प्राप्तसूर्या। नैर्ऋती एष्यत्सूर्या। ततः प्रहरत्रयादूर्ध्वमस्तमयं यावद्दक्षिणा मुक्तसूर्या। नैर्ऋती प्राप्तसूर्या। पश्चिमैष्यत्सूर्या। ततोऽस्तमयादूर्ध्वं यावत् प्रथमो रात्रिप्रहरस्तावन्नैर्ऋती मुक्तसूर्या। पश्चिमा प्राप्तसूर्या। वायव्येष्यत्सूर्या। ततो रात्रिप्रहरादूर्ध्वं प्रहरद्वयं यावत् पश्चिमा मुक्तसूर्या। वायवी प्राप्तसूर्या। उत्तरैष्यत्सूर्या। ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावद्वायवी मुक्तसूर्या। उत्तरा प्राप्तसूर्या। ऐशान्यैष्यत्सूर्या। ततः प्रहरत्रयादूर्ध्वं सूर्योदयं यावदुत्तरा मुक्तसूर्या। ऐशानी प्राप्तसूर्या। पूर्वैष्यत्सूर्या। एतासु मुक्तप्राप्तैष्यदर्कासु दिक्षु फलं तथाविधमिति। तासु दिक्षु तथाविधं नामानुरूपं फलमादेश्यम्। अशुभमित्यर्थः। मुक्तसूर्यायां दिशि यदशुभं शाकुनमुक्तं तन्मुक्तं गतम्। तत्फलमतीतमित्यर्थः। प्राप्तसूर्यायां यदशुभं शाकुनं तत्प्राप्तम्। तस्मिन्नेवाहनि भवति। एष्यत्सूर्यायां यदशुभं शाकुनं तदेष्यत् पुरस्ताद्भविष्यति। **अङ्गारदीप्तधूमिन्यश्चेति।** ता दिशो मुक्तप्राप्तैष्यदर्काख्या यथाक्रमेणाङ्गारदीप्तधूमिन्यः। मुक्तसूर्याङ्गारिणी। प्राप्तसूर्या दीप्ता। एष्यत्सूर्या धूमिनी। ततः पराः पञ्च दिशः शान्ताः। उक्तं च—

अङ्गारिणी दिग्रविविप्रमुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता।
प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशान्ताः शुभदाश्च ताः स्युः।।

अत्र केचिद् रात्रेरर्धप्रहरमारभ्य यावद्दिनस्यार्धप्रहरं तावत् प्राचीं दिशं प्राप्तसूर्यामिति वर्णयन्ति। तत ऊर्ध्वं सार्धप्रहरं यावदाग्नेयीम्। शेषास्वप्येवं ज्ञेयम्। अयुक्तमेतत्। यस्माद् भगवान् गर्गः—

उदये दीप्यते पूर्वा पूर्वाह्ने पूर्वदक्षिणा।
मध्याह्ने दक्षिणा दीप्ताऽथापराह्ने तु नैर्ऋती।।
पश्चिमास्तमये दीप्ता वायवी पूर्वरात्रिके।
सौम्या तु मध्यरात्रे स्यादैशान्यपररात्रिके।।
सम्प्राप्तानागतातीता दीप्यन्तेऽत्र सदा दिशः।
व्याहरन्ते मृगास्तासु वेदयन्ति महद् भयम्।।
ताश्च वृत्तमतीतायां दीप्तायां शंसते मृगः।
अनागतायामाशादि दीप्तायां तद्दिने स्मृतम्।। इति।।१२।।

अधुनाऽऽसां दिशां फलनियमानाह—

**तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत्।**
**परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम्।।१३।।**

अङ्गारिणी दिशा के पञ्चमी दिशा में दृष्ट शुभाशुभ शकुन का फल भूत, दीप्ता दिशा के पञ्चमी दिशा में दृष्ट शुभाशुभ शकुन का फल वर्तमान और धूमिनी दिशा के पञ्चमी दिशा में दृष्ट शुभाशुभ शकुन का फल भविष्यत् होता है। शेष अङ्गारित शान्तासन्न और धूमित शान्तासन्न दिशाओं में दृष्ट शुभाशुभ शकुन का फल क्रम से भूत और भविष्यत् जानना चाहिये।।१३।।

तदित्यनेनाङ्गारिण्याद्यानां दिशां परामर्शः। ताभ्यः पञ्चमास्तत्पञ्चमाः। तत्पञ्चमदिशां तुल्यं सदृशं त्रैकाल्यं त्रिकालभवं शुभं फलमादिशेद् वदेत्। एतदुक्तं भवति—अङ्गारिण्या या पञ्चमी दिक् शान्ता तस्यां सौम्ये शकुने शुभं यत् फलं तद्यातम्। तस्यामेव वामे स्थिते शकुनेऽल्पफलमनिष्टं यातम्। दीप्ताया या पञ्चमी दिक् तस्यां शुभे स्थिते शकुने यत् शुभं तत् साम्प्रतम्। तस्यामेव वामे स्थिते शकुनेऽल्पमशुभं साम्प्रतम्। धूमिताया या पञ्चमी दिक् तस्यां शुभे स्थिते शकुने यत् शुभं फलं तदेष्यम्। तस्यामेव वामे शकुने-ऽल्पमशुभमेष्यम्। अङ्गारिण्याद्यानामप्येवं शुभे शकुनेऽल्पं शुभमशुभेऽतीवाशुभं फलमिति सर्वासामूह्यम्। **परिशेषदिशोरिति**। परिशेषयोर्द्वयोर्दिशोर्यथासन्नं येन प्रकारेणासन्नं निकट-वर्ति शुभाशुभं फलं वाच्यं वक्तव्यम्। यस्यां या दिक् प्रत्यासन्ना निकटवर्तिनी दीप्तायां तथा तस्यां यत् फलं तत् तस्यामेव वाच्यम्। एतदुक्तं भवति—ते दिशौ भागद्वयेन परिकल्प्य निश्चयः कार्यः। अङ्गारितशान्तासन्ने भागे पापे शकुने स्थिते यातमल्पमनिष्टं ज्ञेयम्। तस्मिन्नेव सौम्ये स्थिते शकुने शुभं यातम्। धूमितशान्तासन्ने भागे सौम्ये स्थिते शकुने भाव्यल्पमनिष्टम्। तस्मिन्नेव पापे स्थिते शकुने भावि बह्वनिष्टं भवति। उक्तं च—

'यातमुक्तायां साम्प्रतं दीप्तायामेष्यं ज्ञेयं धूपितायामनिष्टं शान्तास्वेवं दिक्षु तत्पञ्चमासु प्रत्यासन्नाशयैः शान्तदीप्तम्' इति।।१३।।

पुनरपि फलनियमार्थमाह—

**शीघ्रमासन्ननिम्नस्थैश्चिरादुन्नतदूरगैः ।**
**स्थानवृद्ध्युपघाताच्च तद्वद् ब्रूयात् फलं पुनः ।।१४।।**

समीप तथा नीच स्थान में स्थित शकुन का फल शीघ्र तथा उच्च और दूर में स्थित शकुन का फल देर से प्राप्त होता है। बढ़ने वाले स्थान पर दृष्ट शुभाशुभ शकुन का फल बढ़ने वाला और घटने वाले स्थान पर दृष्ट शुभाशुभ शकुन का फल घटने वाला होता है।।१४।।

आसन्नैर्निकटवर्तिभिः शकुनैर्निम्नस्थैर्नीचस्थानगतैश्च शीघ्रमाश्वेव शुभमशुभं वा फलं भवति। उन्नतैरुच्चप्रदेशस्थैर्दूरस्थैरनिकटवर्तिभिश्चिराद् बहुकालेन शुभमशुभं वा फलं भवति। तथा च पराशरः—

शिलष्टेषु तु भवेत् क्षिप्रं शुभं वा यदि वेतरत्।
दूरस्थेषु तु सर्वेषु चिरात् सम्पद्यते फलम्।।

स्थानवृद्ध्युपघाताद्धेतोस्तद्वत् तेनैव प्रकारेण फलं ब्रूयाद् वदेत्। वर्द्धमाने स्थाने यत्र प्रत्यहं वृद्धिर्दृश्यते तत्रस्थोऽशुभः शकुने उपघातं करोति।

अत्रैव शुभं किञ्चिदेवं विचार्य पुनर्भूयः शुभाशुभं फलं ब्रूयात्। तथा च पराशरः—

दग्धवक्रातुरच्छिन्नशुष्ककण्टकिवृक्षगाः ।
अश्मनिम्नकपालास्थिसिकताकेशभस्मसु ।।
श्मशानाङ्गारवल्मीका ऊषरापांसुमत्सराः।
शीर्णजीर्णाशुच्यशुभ्रदेशस्था दीप्तसंज्ञिताः।।
मनोज्ञस्निग्धफलितक्षीरपुष्पतरुस्थिताः ।
समप्रशस्तभूमिष्ठाः शान्ताः स्युर्मृगपक्षिणः।।

अत्र दीप्तशुभाः शान्ताः शुभा इति।।१४।।

अधुना दशप्रकारस्य दीप्तस्य शकुनस्य लक्षणमाह—

**क्षणतिथ्युडुवातार्कैर्देवदीप्तो यथोत्तरम् ।**
**क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ।।१५।।**

क्षण ( दारुण और उग्रसंज्ञक नक्षत्र के मुहूर्त ) में दृष्ट शकुन क्षणदीप्त; तिथियों ( चतुर्थी, षष्ठी, अष्टमी, नवमी और चतुर्दशी ) में दृष्ट शकुन तिथिदीप्त; नक्षत्रों ( मूल ) ज्येष्ठा, आर्द्रा, आश्लेषा, पूर्वात्रय, भरणी और मघा ) में दृष्ट शकुन नक्षत्रदीप्त; वात ( भयंकर, खर, कठोर और प्रतिलोम वायु ) में दृष्ट शकुन वायुदीप्त एवं सूर्याभिमुख

स्थित शकुन सूर्यदीप्त—ये पाँच देवदीप्त हैं। ये सभी दीप्त यथोत्तर क्रम से दीप्त हैं; जैसे—क्षणदीप्त से तिथिदीप्त, तिथिदीप्त से नक्षत्रदीप्त, नक्षत्रदीप्त से वायुदीप्त और वायुदीप्त से सूर्यदीप्त अधिक दीप्त है। गति, स्थान, भाव, स्वर और चेष्टा—ये क्रिया-दीप्त हैं। ये भी यथोत्तर क्रम से दीप्त होते हैं।।१५।।

क्षणो मुहूर्तः शिवादिकः। तत्र दारुणोग्राणां नक्षत्राणां ये मुहूर्तास्तेषु क्षणेषु दीप्तः शकुनः। तिथिर्नन्दादिकस्तत्र चतुर्थीषष्ठ्यष्टमीनवमीचतुर्दश्यो दीप्ताः। एतासु तिथिषु दीप्तः शकुनः। दारुणोग्रनक्षत्रेषु तत्र दीप्तः शकुनः। उडूनि नक्षत्राण्युच्यन्ते। एवमुडुदीप्तः। चण्डखर-परुषप्रतिलोममारुतो वातदीप्तः। आदित्याभिमुखो वातदीप्तदिक्स्थश्चार्कदीप्तः। एवं यथोत्तरं शकुनः पञ्चप्रकारो दैवदीप्तः। एतदुक्तं भवति—क्षणदीप्तात् तिथिदीप्तोऽधिकः। तस्मान्नक्षत्र-दीप्तः। तस्माद्वातदीप्तः। तस्मादर्कदीप्त इति दैवदीप्तः। विद्युदुल्कार्कमरुतामभिमुखे यो धावति स गतिदीप्तः। छिन्नभिन्नवक्रदिग्धपाणिजग्धशीर्णाशुचिस्थानस्थितः स्थानदीप्तः। भावः सत्ता, सत्ता संवित्तिः। तद्विहीनो भावदीप्तः। विषमविप्लुताक्षरक्षामजर्जरस्वरः स्वरदीप्तः। पक्षपाततुण्डविधूननिपातपरोच्चावचभावकुट्टनैश्चेष्टादीप्तः। एवमेषोऽपि यथोत्तरं दीप्त इति। तथा चात्रोक्त ऋषिपुत्रोक्तवाक्यैर्निश्चयः। तद्यथा—

'चतुर्थीषष्ठ्यष्टमीचतुर्दशीषु तिथिदीप्ताः। विष्ट्यां करणे करणदीप्ताः। मूलेन्द्रसर्परौ-द्रेन्द्राग्नेययाम्यपित्र्याग्नेयपूर्वासु नक्षत्रदीप्ताः। मुहूर्तेऽथैतेषामेव मुहूर्तदीप्ताः। विसंज्ञाः स्वल्प-संज्ञा भावदीप्ताः। स्वरपरुषभिन्नभैरवार्तोद्विजनीयविषमविप्लुताक्षरक्षामजर्जरस्वराः स्वरदीप्ताः। अशनिहतपतितच्छिन्नभिन्नभग्नोन्मूलितार्धदलितोपमृष्टशुष्कव्याधितापत्राफलाक्षीरमलिनशीर्ण-वित्वगासारविरसकत्वाम्ललवणतिक्तक्वथितायतविषमसंश्रितसङ्कटितलतावितानावनत-निरोधान्याक्रान्तकटाग्निदग्धेषु तरुषु। प्राकारगोपुराट्टालकककुब्भूमिसंस्थाः स्थानदीप्ताः। ये शीर्णविषमनिम्नसङ्करकेशास्थिकपालवल्मीकाङ्गारपलालविनष्टायुधाग्न्याधारकलहसर्पविद्यु-दुल्कार्कमारुतायुधाग्नीनुपधावन्ते ते गतिदीप्ताः। पक्षविपातोत्तुण्डविधूननैर्निपातपरोच्चावच-भावकुट्टनैश्च चेष्टादीप्ताः। चण्डपरुषप्रतिलोममारुता वातदीप्ताः। अर्काभिमुखा दीप्तदिक्स्था रविदीप्ता इत्याह भगवानिन्द्रः'।।१५।।

अत्र विशेषमाह—

**दशधैवं प्रशान्तोऽपि सौम्यस्तृणफलाशनः।**
**मांसामेध्याशने रौद्रो विमिश्रोऽन्नाशनः स्मृतः॥१६॥**

पूर्वोक्त दश प्रकार के शान्त शकुन हैं। उनमें तृण और फल को खाने वाले सौम्य, मांस और विष्ठा आदि अपवित्र पदार्थ को खाने वाले रौद्र और अन्न को खाने वाले मिश्र ( न सौम्य न रौद्र ) कहे गये हैं।।१६।।

एवमनेन प्रकारेण दशधा दशभिः प्रकारैरपि शान्तः शकुनो भवति। तथापि यदि तृणाशनस्तृणभक्षः, फलाशनो वा फलान्यश्नाति, तदा सौम्यः शुभफलः। अथ मांसामेध्याशनो मांसमामिषममेध्यं विष्ठादि वाऽश्नाति तदा रौद्रो दीप्तः। अन्नाशनोऽन्नमश्नाति। अन्नभोजी

विमिश्रः शान्तो दीप्तश्च स्मृत उक्तः। उक्तं च—

पिशिताशुचिभोजनः प्रदीप्तस्तृणफलभुक् च निसर्गतः प्रशान्तः।
उभयः कथितस्तथान्नभोजी दिक्स्थानोदयकालतश्च चिन्त्यः।। इति।।१६।।

अथान्यदप्याह—

**हर्म्यप्रासादमङ्गल्यमनोज्ञस्थानसंस्थिताः ।**
**श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च ।।१७।।**

महल, देवमन्दिर, मंगलस्थान ( देवता, ब्राह्मण और गायों से अध्यासित ) मनोज्ञ ( हरी घास और शीतल द्रुम की छाया ), मधुर फल वाले, दूध वाले, फल वाले और फूल वाले वृक्ष—इन सब पर स्थित शकुन शुभ फल देने वाले होते हैं।।१७।।

हर्म्यं गृहम्। प्रासादो देवप्रासादः। मङ्गल्यस्थानानि देवब्राह्मणगोभिरध्यासितानि। मनोज्ञानि हरितशाद्वलासु शीतलद्रुमच्छायासंयुक्तानि। एतेषु स्थानेषु ये संस्थिताः शकुनास्ते श्रेष्ठाः शुभफलाः। तथा मधुरेषु सुस्वादफलेषु वृक्षेषु। तथा सक्षीरेष्वर्कादिषु। फलवृक्षेषु बीजपूरादिषु पुष्पवृक्षेषु च स्थिताः श्रेष्ठा एव।।१७।।

अधुना शाकुनानां बलविशेषफलमाह—

**स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः ।**
**क्लीबस्त्रीपुरुषा ज्ञेया बलिनः स्युर्यथोत्तरम् ।।१८।।**

दिन में दिनचर शकुन पर्वत के ऊपर और रात्रि में रात्रिचर शकुन जलप्राय देश में स्थित हों तो बली होते हैं तथा नपुंसक से स्त्री और स्त्री से पुरुष जाति का शकुन बली होता है।।१८।।

स्वकाले आत्मीयसमये गिरितोयस्थाः पर्वतजलस्था यथासंख्यं द्युनिशाचरा बलिनो वीर्यवन्तो भवन्ति। द्युचरा दिवसे गिरिस्था बलिनः। गिरिशब्द उच्चदेशोपलक्षणार्थः। निशा-चरा निश्यनूपे च। तथा च मनुधर्माः—

गिरौ दिवा दिवाचारी निश्यनूपे निशाचराः।
रोधवाक् शकुनो ज्ञेयो विभजेद् बलमन्यथा।।

**क्लीबस्त्रीपुरुषा इति ।** एषां शकुनानां यथोत्तरं यथासंख्यं क्लीबस्त्रीपुरुषा बलिनः। क्लीबेभ्यः स्त्रियो बलिन्यः। स्त्रीभ्यः पुरुषा इति। उक्तं च—

द्युनिशोभयचारिणः स्वकाले पुरवनमिश्रचराः स्वभूमिसंस्थाः।
सफला विफला विपर्ययस्था गमनेच्छोः पुरपार्थिवाः शुभास्ते।। इति।।१८।।

अन्यदप्याह—

**जवजातिबलस्थानहर्षसत्त्वस्वरान्विताः ।**
**स्वभूमावनुलोमाश्च तदूनाः स्युर्विवर्जिताः ।।१९।।**

यदि दो आदि शकुनों का दर्शन हो तो गति, जाति, बल, स्थान, हर्ष सत्त्व, स्वर—इनमें जो बली हो, उसी के अनुसार शुभाशुभ फल प्राप्त होता है। अपने स्थान से अनुलोम गति वाले शकुन बली होते हैं; लेकिन इनसे विपरीत होने पर सभी शकुन निर्बल होते हैं।।१९।।

जवो वेगो गतिरित्यर्थः। जातिर्योनिविभागः। बलं प्रमाणं वा। स्थानं स्थितिः। हर्षश्चित्त-हर्षः। सत्त्वं सौन्दर्यनिर्भयमित्यर्थः। स्वरः शब्दः। एतैर्ये बलवत्तराः। वक्ष्यति च—'ग्राह्यो यो बलवत्तरः।' तत्र न ज्ञायते शकुनानां बलं तदर्थमुक्तम्। द्वयोर्मध्ये यः शकुनो जवेनाधिकः। यश्च जातेरधिकः। यश्च बलाधिकः। यश्च स्थाने शोभने स्थितः। यश्च हर्षयुक्तः। यश्च सत्त्वयुक्तः। यश्च शोभनः स्वरान्वितः। यश्च स्वभूमावानुलोम्येन स्थितः स एव बली। तदूनाः स्युर्विवर्जिताः, तदित्यनेन जवादयः परामृश्यन्ते। तैरूना रहिता बलवर्जिताः स्युर्भवेयुः।।१९।।

अधुनैतेषां जातिविभानेन दिग्बलमाह—

**कुक्कुटेभपिरिल्यश्च शिखिवञ्जुलछिक्कराः।**
**बलिनः सिंहनादश्च कूटपूरी च पूर्वतः ॥२०॥**

मुर्गा, हाथी, पिरिली ( पक्षिविशेष ), मयूर, खदिरचञ्चु, छिक्कर ( मृग जाति ), सिंहनाद ( पक्षिविशेष ), करायिका—ये सभी पूर्व दिशा में बली होते हैं।।२०।।

कुक्कुटः कृकवाकुः। इभो हस्ती। पिरिली पक्षिविशेषः। शिखी मयूरः। वञ्जुलः खदिरचञ्चुः। छिक्करो मृगजातिः। सिंहनादः पक्षिविशेषः। कूटपूरी करायिका। एते पूर्वतः पूर्वस्यां दिशि बलिनः। प्राजापत्यात्र पूर्वा ज्ञेया, न यातुर्वशेनेत्येवं सर्वत्र ज्ञेयम्।।२०।।

अथ दक्षिणस्यामाह—

**क्रोष्टुकोलूकहारीतकाककोकर्क्षपिङ्गलाः ।**
**कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥२१॥**

सियार, उल्लू, तोता, कौआ, चकवा, चकई, भालू, उलूक, चेटिका, कबूतर, रोना, चिल्लाना, क्रूर शब्द—ये सभी दक्षिण दिशा में बली होते हैं।।२१।।

क्रोष्टुकः शृगालः। उलूकहारीतौ पक्षिविशेषौ। काको वायसः। कोकः पक्षी। ऋक्षः प्राणी। पिङ्गला उलूकचेटिका। कपोतः पक्षी। रुदितं रोदनम्। आक्रन्दमाक्रन्दितम्। अन्ये क्रूरशब्दा अप्रियाभिधायिनः। ते च सर्वे याम्यतो दक्षिणस्यां दिशि बलिनः।।२१।।

अथ पश्चिमायामाह—

**गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।**
**विडालोत्सववादित्रगीतहासाश्च वारुणाः ॥२२॥**

गाय, खरहा, क्रौञ्च पक्षी, लोमड़ी, हंस, कुरब पक्षी, कपिञ्जल पक्षी, मार्जार, विवाह आदि उत्सव, बाजे, गीत, हास्य—ये सभी पश्चिम दिशा में बली होते हैं।।२२।।

गौः प्रसिद्धा। शशः प्राणिविशेषः। क्रौञ्चः पक्षी। लोमाशः प्राणी। हंसः। उत्क्रोशाख्याः कुरवः। कपिञ्जलाख्यः। सर्व एव पक्षिविशेषाः। विडालो मार्जारः। उत्सवो विवाहादिकः। वादित्राणि वीणामुरुजमर्दलकरटाभेरीपणवगोमुखपटहादयः। गीतं प्रसिद्धम्। हास उपहासः। एते वारुणाः पश्चिमायां बलिनः।।२२।।

अथोत्तरस्यामाह—

**शतपत्रकुरङ्गाखुमृगैकशफकोकिलाः ।**
**चाषशल्यकपुण्याहघण्टाशङ्खरवा उदक् ।।२३।।**

दार्वाघाट पक्षी, हरिण, चूहा, मृग, घोड़ा, गदहा, कोयल, चाष, बिल में रहने वाले जीव, पुण्याहवाचन का शब्द, घण्टा, शंख—ये सभी उत्तर दिशा में बली होते हैं।।२३।।

शतपत्रः पक्षी, दार्वाघाट इति प्रसिद्धः। कुरङ्गो हरिणः। आखुर्मूषकः। मृगः प्रसिद्धो हरिणः। एकशफावश्वगर्दभौ। कोकिलः परभृतः। चाषः पक्षी। शल्यको विलेशयः प्राणी। पुण्याहरव आशीःसंयुक्तः शब्दः। घण्टाशङ्खौ प्रसिद्धौ। एषां सर्वेषां रवाः शब्दा उदगुत्तरस्यां दिशि बलिनः।।२३।।

अधुना तेषां प्रतिभागमाह—

**न ग्राम्योऽरण्यगो ग्राह्यो नारण्यो ग्राम्यसंस्थितः ।**
**दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा ।।२४।।**

वन में गाँव के शकुन, गाँव में वन के शकुन, रात्रि में दिन के शकुन और दिन में रात्रि के शकुन का ग्रहण नहीं करना चाहिये।।२४।।

ग्राम्यशब्दः शकुनोऽरण्यगोऽरण्यस्थितः शुभोऽशुभो वा न ग्राह्यः। एवमारण्योऽपि ग्रामसंस्थितो न ग्राह्यः। दिवाचरो दिवसचरः शर्वर्यां रात्रौ न ग्राह्यः। नक्तञ्चरो रात्रिञ्चरो दिवसे न ग्राह्यः।।२४।।

पुनरतिप्रतिषेधार्थमाह—

**द्वन्द्वरोगार्दितत्रस्ताः कलहामिषकाङ्क्षिणः ।**
**आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ।।२५।।**

द्वन्द्व ( सारसभिन्न नर-मेदिन का जोड़ा ), रोग से पीड़ित, भीत, कलह करने की इच्छा वाले, मांसाभिलाषी, नदी के दूसरे किनारे पर स्थित और ऋतुकाल के कारण सदर्प शकुनों का ग्रहण नहीं करना चाहिये।।२५।।

द्वन्द्वं युग्मं तच्च सारयुग्मं विना यतस्तदिष्टफलं वक्ष्यति च—'सारसकूजितमिष्टफलं तद्युगपद्विरुतं मिथुनस्य' इति। रोगार्दितो गदपीडितः। त्रस्तो भीतः। कलहकाङ्क्षी कलहेच्छुः। आमिषकाङ्क्षी मांसाभिलाषी। आपगान्तरिता नद्यन्तरिताः। मत्ता ऋतुकालवशेन सदर्पाः। एवंविधाः शकुनाः सदसत्फलेषु न क्वचिदपि ग्राह्याः। उक्तं च—

द्वन्द्वादिरोगार्दितभीतमत्तवैरान्तयुद्धामिषकाङ्क्षिणश्च ।
सीमान्तनद्यन्तरिताश्च सर्वे न चिन्तनीयाः सदसत्फलेषु।। इति।।२५।।

अधुना चैतेषामृतुकालज्ञानं निष्फलत्वं चाह—

**रोहिताश्वाजवालेयाः कुरङ्गोष्ट्रमृगाः शशः ।**
**निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलौ ।।२६।।**

शिशिर काल में रोहित मृग, घोड़ा, बकरा, गदहा, कुरङ्ग, ऊँट, मृग और खरहा तथा वसन्त काल में कौवा और कोयल निष्फल होते हैं।।२६।।

रोहितो मृगजातिः। अश्वस्तुरगः। अजश्छागः। वालेयो गर्दभः। कुरङ्गो मृगजातिः। उष्ट्रः करभः। मृगो हरिणः। शशः प्राणी। एते सर्वे शिशिरे माघफाल्गुनयोः सदसत्त्वान्निष्फला ज्ञेया ज्ञातव्याः। वसन्ते चैत्रवैशाखयोः काको वायसः, कोकिलः परभृतः। एतौ सदसत्त्वा-न्निष्फलावेव।।२६।।

अन्येष्वाह—

**न तु भाद्रपदे ग्राह्याः सूकरश्ववृकादयः ।**
**शारद्याब्जादगोक्रौञ्चाः श्रावणे हस्तिचातकौ ।।२७।।**

भाद्रपद मास में सूअर, कुत्ता, भेड़िया आदि ( बिल में रहने वाले जन्तु ) का, शरत्काल में पानी से उत्पन्न होने वाले पक्षी बगुला आदि, गाय और क्रौञ्च पक्षी का तथा श्रावण मास में हाथी और चातक का ग्रहण नहीं करना चाहिये।।२७।।

भाद्रपदे मासि सूकरो वराहः। श्वा सारमेयः। वृकः प्राणी। आदिग्रहणाद् मृगादयो बिलेशयाः। एते न ग्राह्याः। सदसत्त्वाद्वा निष्फलाः। शारद्याश्विनकार्तिकयोः। अब्जादा हंसादयः। अप्सु जायत इत्यब्जजम्। तददन्ति भक्षयन्ति इति अब्जादाः। गौः प्रसिद्धा। क्रौञ्चः पक्षि-विशेषः। एते सदसत्त्वान्निष्फलाश्च ग्राह्याः। श्रावणे मासि हस्तिचातकौ न ग्राह्यौ। हस्ती गजः। चातकः पक्षिविशेषः।।२७।।

अथान्येष्वप्याह—

**व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेशयाः ।**
**हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानुषाः ।।२८।।**

हेमन्त में बाघ, भालू, बन्दर, चीता, भैंसा, साँप और मनुष्य को छोड़कर समस्त शिशु निष्फल होते हैं।।२८।।

व्याघ्रः प्रसिद्धः प्राणी नखी। ऋक्षः प्राणी। वानरः कपिः। द्वीपी चित्रकः। महिषः प्रसिद्धः। एते सबिलेशयाः, बिलेशयैः प्राणिभिः सहिताः। बिले शेते बिलेशयः, श्वाविन्न-कुलादयः। विमानुषा मानुषवर्जिताः सर्वे प्राणिनः। बालाः शिशवः। हेमन्ते मार्गशीर्ष-पौषयोर्निष्फला ज्ञेया ज्ञातव्याः। मानुषा बालाः पुनः सफला एव। एतेषां यच्छुभाशुभचेष्टितं

तत्सफलमेव। अत्र ऋतुकाललक्षणं भगवत्पराशरकृतं विस्तृतं लिख्यते—

'अथ शकुनेषु कोकिलमयूरजीवजीवकप्रियपुत्रराजपुत्रीगोदापुत्रशतपत्रदात्यूहमदनसारिका-वर्षाभूकोयष्टिमहामुक्तकमषकदण्डिमाणवकवायसकुक्कुटवकोत्क्रोशशार्ङ्गप्लवकचित्रक-पोतपुष्परथोष्ट्ररथादीनां वसन्तो मदकालः। शतपत्रोत्क्रोशभृङ्गराजमयूरकोकिलवकवलाहकाप्ल-ववाकधन्वनचातकसारङ्गाणां वर्षाः। चकोरकादम्बमदनशारिकाकीरपुष्करचातकहंसचक्रवाक-सारसकुररक्रौञ्चकारण्डवभ्रमराणां शरत्। श्येनकुररक्रौञ्चसारसादीनां हेमन्ते शिशिरे एवमादयः शकुनानां मदकालश्च। मृगाणां पुनः पुरुषाणां च शिवाशशजम्बूकसृमरचमरवानरमार्जारनकुल-गजगवयसिंहव्याघ्रकूर्मवराहादीनां प्रायः सर्वेषां मदकालश्च विशेषतश्च सारससृमरसिंहव्याघ्रादीनां ग्रीष्मे। हरिणगजवृषभादीनां प्रावृट्। वृषभरुरुमहिषगवयसृमरचमराणां शरत्, गोगवयवृषादीनां हेमन्तः शिशिरः' इति।।२८।।

अधुना द्वात्रिंशद्भेदभिन्नस्य दिक्चक्रस्य प्रविभागप्रदर्शनार्थमाह—

**ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः।**
**कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् ।।२९।।**

पूर्व और अग्निकोण के अन्तर्गत प्रदेश के त्रिभाग में प्रदक्षिण क्रम से कोशाध्यक्ष, अग्निजीवी और तपस्वी—ये तीन स्थित होते हैं।।२९।।

ऐन्द्री पूर्वा दिक्, अनला आग्नेयी। अनयोर्मध्येऽन्तरे त्रयस्त्रिभागास्तेषु व्यवस्थिताः क्रमेण कोशे गञ्जेऽध्यक्षः स चैकस्मिन् भागे। द्वितीये अनलाजीवी अग्न्युपजीवकः सुवर्ण-कारादिकः। तृतीये तपोयुक्तस्तापसः। एत एव प्रदक्षिणं प्रादक्षिण्येनेति।।२९।।

अन्येष्वाह—

**शिल्पी भिक्षुविवस्त्रा स्त्री याम्यानलदिगन्तरे।**
**परतश्चापि मातङ्गगोपधर्मसमाश्रयाः ।।३०।।**

दक्षिण और अग्निकोण के अन्तर्गत प्रदेश के त्रिभाग में क्रम से कारीगर, भिक्षुक और नङ्गी स्त्री—ये तीन स्थित होते हैं। दक्षिण और नैर्ऋत्य कोण के अन्तर्गत प्रदेश के त्रिभाग में क्रम से हाथी, गोप और धार्मिक लोग स्थित लोग हैं।।३०।।

याम्या दक्षिणा, अनला आग्नेयी। अनयोरन्तरे मध्ये ये त्रयो भागास्तेषु क्रमेण व्यव-स्थिताः। शिल्पी चित्रकरलेखकरवर्धकिप्रायाः प्रथमे त्रिभागे। भिक्षुर्यतिर्द्वितीये। विवस्त्रा स्त्री नग्ना स्त्री तृतीये। परतो दक्षिणनैर्ऋत्योर्मध्ये ये त्रयस्त्रिभागास्तेषु प्रथमे मातङ्गो हस्ती तत्समा-श्रितः पुमान्। द्वितीये गोपालकस्तत्समाश्रितः पुमान्। तृतीये धर्मसमाश्रयो धर्मानुरतः।।३०।।

अन्येष्वाह—

**नैर्ऋतीवारुणीमध्ये प्रमदासूतितस्कराः।**
**शौण्डिकः शाकुनी हिंस्रो वायव्यापश्चिमान्तरे ।।३१।।**

पश्चिम और नैर्ऋत्य कोण के अन्तर्गत प्रदेश के त्रिभाग में क्रम से स्त्री, प्रसूता स्त्री

और चोर स्थित रहते हैं। वायव्य और पश्चिम दिशा के अन्तर्गत प्रदेश के त्रिभाग में कलाल, पक्षी को मारने वाले और हिंसा करने वाले स्थित रहते हैं।।३१।।

नैर्ऋती दक्षिणपश्चिमा, वारुणी पश्चिमा, अनयोर्मध्ये ये त्रयस्त्रिभागा मध्ये स्थितास्तेषु प्रथमे प्रमदा स्त्री। द्वितीये सूतिः प्रसवः। तृतीये तस्कराश्चौराः। वायव्यापश्चिमान्तरे ये त्रयस्त्रिभागा मध्ये स्थितास्तेषु प्रथमे शौण्डिको मधुपानसक्तः। कल्पपाल इति केचित्। द्वितीये शाकुनी धीवरः। तृतीये हिंस्रः क्रूरः।।३१।।

अन्येष्वाह—

**विषघातकगोस्वामिकुहकज्ञास्ततः परम्।**
**धनवानीक्षणीकश्च मालाकारः परं ततः ।।३२।।**

वायव्य और उत्तर दिशा के अन्तर्गत प्रदेश के त्रिभाग में क्रम से विष को नाश करने वाले, गोस्वामी ( गोमान् ) और इन्द्रजाल विद्या जानने वाले स्थित रहते हैं। उत्तर और ईशान कोण के अन्तर्गत प्रदेश के त्रिभाग में धनी, दैवज्ञ और माली—ये तीन स्थित रहते हैं।।३२।।

ततः परमनन्तरम्। वायव्योत्तरयोरन्तरे ये त्रयस्त्रिभागाः। तत्र प्रथमे विषघातकः। विषं घातयति मारयति। द्वितीये गोस्वामी गोमान्। तृतीये कुहकज्ञ इन्द्रजालवित्। ततः परमुत्तरैशान्योरन्तरे ये त्रयो भागास्तेषु प्रथमे धनवान्। द्वितीये ईक्षणीको दैवज्ञः। तृतीये मालाकारः पुष्पप्रचायकः।।३२।।

अन्येष्वप्याह—

**वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः।**
**द्वात्रिंशदेवं भेदाः स्युः पूर्वदिग्भिः सहोदिताः ।।३३।।**

ईशान कोण और पूर्व दिशा के अन्तर्गत प्रदेश के त्रिभाग में क्रम से वैष्णव, चरक एवं सहीस—ये तीन स्थित रहते हैं। इस प्रकार पूर्व आदि आठ दिशाओं के बत्तीस भेद होते हैं।।३३।।

ऐशानीपूर्वयोरन्तरे त्रयस्त्रिभागास्तेषु प्रथमे वैष्णवो विष्णुभक्तः। द्वितीये चरकश्चरः। तृतीये वाजिनामश्वानां रक्षणे पालने रतः सक्तः। एवमनेनैव प्रकारेण द्वात्रिंशद्भेदाः पूर्वदिग्भिः प्रागुक्ताभिरष्टाभिर्दिग्भिः सह साकमुदिताः कथिताः स्युर्भवेयुः।।३३।।

अधुनाष्टासु दिक्ष्वधिपतीनाह—

**राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः।**
**राजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ।।३४।।**

पूर्व आदि आठ दिशाओं के प्रदक्षिणक्रम से राजा, कुमार, सेनापति, दूत, सेठ, गुप्तचर, ब्राह्मण और गजाध्यक्ष—ये आठ तथा पूर्व आदि चार दिशाओं के क्षत्रिय आदि ( क्षत्रिय, वैश्य, शूद्र, ब्राह्मण ) चार अधिपति होते हैं।।३४।।

राजा नृपः पूर्वस्यां दिशि। कुमारो राजपुत्र आग्नेय्याम्। नेता सेनापतिर्दक्षिणस्याम्। दूतो गमागमिको नैर्ऋत्याम्। श्रेष्ठी पश्चिमायाम्। चरो गूढपुरुषो वायव्याम्। द्विजो ब्राह्मण उत्तरस्याम्। गजाध्यक्षो हस्तिशालाध्यक्ष ऐशान्याम्। एते पूर्वाद्या ज्ञेया। क्षत्रियाद्याश्चतुर्दिशम्। पूर्वाद्यासु चतसृषु दिक्षु क्षत्रियाद्या वर्णाः। तद्यथा—पूर्वस्यां क्षत्रियाः। दक्षिणस्यां वैश्याः। पश्चिमायां शूद्राः। उत्तरस्यां ब्राह्मणाः।।३४।।

अथ चक्रस्य प्रविभागमाह—

**गच्छतस्तिष्ठतो वापि दिशि यस्यां व्यवस्थितः।**
**विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः ।।३५।।**

यात्रा में गमन करते हुये या एक स्थान पर स्थित पुरुष के जिस दिशा में स्थित होकर शकुन शब्द करे, उस दिशा में स्थित प्राणी के साथ समागम कहना चाहिये। जैसे पूर्व और आग्नेय कोण के प्रथम त्रिभाग में शकुन हो तो कोशाध्यक्ष, द्वितीय में हो तो अग्निजीवी, तृतीय त्रिभाग में तापस इत्यादि के साथ समागम कहना चाहिये।।३५।।

पुंसो गच्छतो यात्रायां व्रजतः। तिष्ठत एकदेशस्थस्य निश्चलस्य वाऽपि यस्यां दिशि व्यवस्थितः समवस्थितः। शकुनः प्राणी पक्षी वा विरौति शब्दं करोति, तद्दिग्जेन यस्यां दिशि यो जातस्तेन कथितेन सह तस्मिन् दिने तस्य समागमः संयोगो वाच्यो वक्तव्यः। यथेन्द्रानलदिशोर्मध्ये प्रथमत्रिभागस्थे शकुने कोशाध्यक्षेण सह संयोगः। द्वितीये-ऽनलाजीविना। तृतीये तापसेनेत्यादि सर्वत्रोदाहार्यम्।।३५।।

अत्र शिष्यजनभ्रान्तिनिरासाय चक्रविन्यासः प्रदर्श्यते—

अधुना रुतान् शुभाशुभानाह—

**भिन्नभैरवदीनार्तपरुषक्षामजर्जराः ।**
**स्वना नेष्टाः शुभाः शान्तहृष्टप्रकृतिपूरिताः ॥३६॥**

विषम, भयंकर, दीन, जर्जर ( फूटते हुये भाण्ड से उत्पन्न )—ये सभी शब्द शुभ नहीं होते। अर्काभिमुख होकर, मधुर स्वर से और हर्षपूर्वक किये हुये सभी शब्द शुभ होते हैं।।३६।।

ये स्वनाः शब्दा भिन्ना विषमाः। भैरवाः क्रूराः। दीना दैन्यमागताः। जर्जरा भिन्नभाण्ड-समुद्भूतशब्दसदृशाः। ते सर्व एव नेष्टा न शुभाः। ये स्वनाः शान्तेन शान्तदिक्स्थेनार्काभिमुखेन मधुरस्वरेण च हृष्टप्रकृतिना सहर्षेण पूरिताः कृतास्ते च शुभाः।।३६।।

अथ यातुर्वामभागगता ये शुभा गतास्तेषां नामान्याह—

**शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका ।**
**सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥३७॥**

सियार, पोतकी, कलहकारिका, छछुन्दर, उलूकचेटिका, पल्ली, सूअर, कोयल, पुरुषसंज्ञक जन्तु—ये सभी गमन करने वाले के बाँयीं तरफ शुभ होते हैं।।३७।।

शिवा श्रृगालिका। श्यामा पोतकी। रला कलहकारिका। छुच्छुः छुच्छुन्दरी मूषकजातिः। पिङ्गला उलूकचेटिका। गृहगोधिका पल्ली। सूकरी प्रसिद्धा। परपुष्टा च कोकिला। ये चान्ये पुन्नामानः पुरुषसंज्ञास्ते यातुर्वामतो वामभागगताः शुभाः। उक्तं च—

छुच्छुन्दरी सूकरिका शिवा च श्यामा रला पिङ्गलिकाऽन्यपुष्टा।
शस्ताः प्रयाणे गृहगोधिका च पुंसंज्ञिता ये च पतत्रिणः स्युः।। इति।।३७।।

अथ यातुर्दक्षिणभागगता ये शुभास्तेषां नामान्याह—

**स्त्रीसंज्ञा भासभषककपिश्रीकर्णधिक्कराः ।**
**शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥३८॥**

भासपक्षी, भषक, वानर, श्रीकर्ण पक्षी, धिक्कर ( मृग जाति ), बाज, स्त्रीसंज्ञक जन्तु—ये सभी गमन करने वाले के दक्षिण भागगत शुभ होते हैं।।३८।।

ये च स्त्रीसंज्ञाः स्त्रीनामानः। तथा च भगवान् पराशरः—'तेषां शिवागोधाकालका-राजपुत्रीभरद्वाजबलाकापोतकीसूकरिकापिप्पीकास्नुतक्षिप्रचलापिण्डीकपिङ्गलाद्याः स्त्रीसंज्ञाः शेषाः पुन्नामानः।'

तथा भासः पक्षी। भषकः करायिका। कपिर्वानरः। श्रीकर्णः पक्षी। धिक्करो मृगजातिः। श्येनो वाजिकः। एते दक्षिणा यातुर्दक्षिणभागगताः शुभाः। उक्तं च—

श्येनो रुरुः पूर्वकुटः कपिश्च श्रीकर्णधिक्कारकपिप्पिकाजाः।
स्त्रीसंज्ञिता ये च शिखिद्विपौ च याने हिता दक्षिणभागसंस्थाः।। इति।।३८।।

अथान्येषामपि वामदक्षिणभागानां शुभाशुभफलमतिदिशन्नाह—

**क्ष्वेडास्फोटितपुण्याहगीतशङ्खाम्बुनिःस्वनाः ।**
**सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥३९॥**

क्ष्वेड ( मुख का शब्द ), आस्फोट ( हाथों का शब्द ), पुण्याह शब्द, शंख का शब्द, जल का शब्द, तुरही का शब्द और वेदध्वनि–ये सभी पुरुष की तरह ( वाम-भागस्थित ) शुभ होते हैं तथा अन्य मांगलिक शब्द स्त्रीवत् ( दक्षिण भागस्थित ) शुभ होते हैं।।३९।।

क्ष्वेडो मुखशब्दः, शोडनिकेति प्रसिद्धा। आस्फोटितं करशब्दः। करास्फोटः, वक्षः-स्थस्य बाहोर्द्वितीयहस्तेन ताडनम्। पुण्याहशब्दः प्रशस्तवादः। शङ्खः प्रसिद्ध एव। अम्बु जलम्। एषां सर्वेषां निःस्वनाः शब्दाः सतूर्याध्ययनाः, तूर्येण च सहिताः। अध्ययनशब्दा वेदनिर्घोषाः। एते सर्व एव पुंवच्छुभाः। वामभागस्था इत्यर्थः। स्त्रीवदन्या गिरः शुभाः। अन्याः सर्वा गिरो वाचः स्त्रीवच्छुभाः। माङ्गलिकवाचा दक्षिणभागस्थाः शुभा इत्यर्थः। उक्तं च—

आक्ष्वेडितस्फोटितशङ्खतूर्यपुण्याहगीतध्वनिगीतशब्दाः ।
वामाः प्रशस्ताः शुभदा नराणामाक्रन्दितो दक्षिणतः परेषाम्।। इति।।३९।।

अधुना ग्रामस्वराणां शुभाशुभत्वमाह—

**ग्रामौ मध्यमषड्जौ तु गान्धारश्चेति शोभनाः ।**
**षड्जमध्यमगान्धारा ऋषभश्च स्वरा हिताः ॥४०॥**

यात्रा में मध्यम, षड्ज, गान्धार—ये तीनों स्वर शुभ और षड्ज, मध्यम, गान्धार, ऋषभ—ये चार स्वर हितकारी होते हैं।।४०।।

याने यात्रायां ग्रामौ मध्यमषड्जौ तु शस्तौ शोभनौ। गान्धारश्चेति शोभन एव। इति-शब्दः प्रकारार्थः। स च गान्धारो देवेषु गीयते। मानुषेषु तथा षड्जमध्यमगान्धारा ऋषभश्चेति स्वराः शस्ताः। उक्तं च—

गान्धारषड्जऋषभः खलु मध्यमश्च याने स्वराः शुभकरा न तु येऽवशेषाः।
ग्रामौ शुभावपि हि मध्यमषड्जसंज्ञौ गान्धारगीतमपि भद्रमुशन्ति देवाः।।४०।।

अथान्यच्छुभाशुभशकुनमाह—

**रुतकीर्तनदृष्टेषु भारद्वाजाजबर्हिणः ।**
**धन्या नकुलचाषौ च सरटः पापदोऽग्रतः ॥४१॥**

भारद्वाज, बकरा, मयूर—इनका शब्द, नामकीर्तन और देखना धन्य है तथा नेवला, चाष और सरट—इनका आगे में आना अशुभ है।।४१।।

भरद्वाजः पक्षिविशेषः। लाटेति प्रसिद्धः। अजश्छागः। बर्हो मयूरः। एते सर्वे रुतेन

शब्देन कीर्तनेन नामसङ्कीर्तनेन दृष्टेन दर्शनेन च धन्याः शुभाः। नकुलचाषौ, नकुलः प्राणी, चाषः पक्षिविशेषः। एतावपि च शब्दौ धन्यावेव रुतकीर्तनदृष्टेष्विति। सरटः प्राणी पक्षिभेदः। कृकलास इति केचित्। स चाग्रतः पुरतः पापदोऽनिष्टफलः।।४१।।

अथान्यदप्याह—

**जाहकाहिशशक्रोडगोधानां कीर्तनं शुभम्।**
**रुतं सन्दर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ।।४२।।**

यात्रा के समय में जाहक, सर्प, खरगोश, सूअर और गोह का नाम लेना शुभकारी है। इससे उलटा वानर तथा भालू का फल होता है। अर्थात् यात्रा-समय में वानर तथा भालू का नाम लेना अशुभ तथा शब्द और दर्शन शुभ है।।४२।।

जाहकः प्राणी। अहिः सर्पः। शशः प्राणी। क्रोडः सूकरः। गोधा प्राणिविशेषः। एतेषां कीर्तनं नामग्रहणं शुभम्। एतेषामेव रुतं शब्दः सन्दर्शनमवलोकनं नेष्टं शुभम्। प्रतीपं वानरर्क्षयोः, वानरः कपिः, ऋक्षः प्राणी। एतयोः प्रतीपमेतद्विपरीतम्। एतयो रुतं सन्दर्शनमिष्टम्, न कीर्तनमित्यर्थः। उक्तञ्च—

भारद्वाज्यजवन्तिचाषनकुलाः सङ्कीर्तनाद् दर्शनात्
क्रोशन्तश्च शुभप्रदा न सरटो दृष्टः शिवाय क्वचित्।
गोधासूकरजाहकाहिशशकाः पापा रुतालोकने
धन्यं कीर्तनमृक्षवानरकलं तद्व्यत्ययाच्छोभनम्।। इति।।४२।।

अन्यदप्याह—

**ओजाः प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः।**
**चाषः सनकुलो वामो भृगुराहापराह्णतः ।।४३।।**

विषमसंख्यक ( १, ३, ५, ७ आदि ) मृग, नकुल और अण्डज प्राणी वाम पार्श्व से आगे आकर दक्षिण पार्श्व में आ जायँ तथा नकुल के साथ चाप पक्षी दक्षिण पार्श्व से आकर वाम पार्श्व में आ जायँ तो शुभ होते हैं। भृगु का मत है कि ये सभी अपराह्ण में शुभकारी होते हैं, पूर्वाह्ण में नहीं।।४३।।

मृगा हरिणाः। सनकुलाण्डजा नकुलाः प्राणिनः। अण्डजाः पक्षिणः। ते चोजा विषमसङ्ख्याः। एकस्त्रयः पञ्च सप्त नव इत्यादि। प्रादक्षिण्येन शस्ता शुभाः। यातुर्वामपार्श्वादग्रत आगत्य प्रदक्षिणेन पार्श्वेन क्रामति यत् तत् प्रदक्षिणं सव्यं च। एतद्विपरीतं दक्षिणपार्श्वाद्वामपार्श्वगमनं यत् तदपसव्यम्। एतत्सर्वं शाकुने विज्ञेयम्। यस्मादाचार्य एव ज्ञापकः—

ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः।
कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम्।। इति।

**चाष: सनकुलो वाम इति।** चाष: सनकुलो नकुलेन सहितो वामो वामभागगतो धन्य:। भृगुराहापराह्णत:, भृगुर्नाम मुनिरेवमाहोक्तवान्। यथाऽपराह्णतोऽपराह्णात् परतो वामगौ धन्यौ, न पूर्वाह्णे। तथा भृगु:—

वामगौ चाषनकुलावपराह्णे शुभप्रदौ।

श्वशृगालयोरिदं व्यत्यासेन फलं प्रशस्यते। चाषौ नकुलश्च वामगो दिवसार्धात् परत: शुभप्रद:।।४३।।

अथान्येषामप्याह—

**छिक्कर: कूटपूरी च पिरिली चाह्नि दक्षिणा:।**
**अपसव्या: सदा शस्ता दंष्ट्रिण: सबिलेशया: ।।४४।।**

दिन में सियार, करायिका और पिरली पक्षी दक्षिण भाग में शुभ होते हैं तथा दंष्ट्री ( सूअर आदि ) और बिल में रहने वाले प्राणी वाम भाग में शुभ होते हैं।।४४।।

छिक्कर: श्रृगाल:, कूटपूरी करायिका, पिरिली पक्षिविशेष:, तेऽह्नि दिवसे दक्षिणा: शस्ता:। दंष्ट्रिणो वराहादय:। बिले शेते ते बिलेशया: श्वाविन्नकुलादय:। दंष्ट्रिणो बिलेशयै: सह अपसव्या वामभागगता: शस्ता: शोभना:।।४४।।

अधुना दिग्वशेन शाकुनानां शुभाशुभमाह—

**श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे।**
**कन्यकादधिनी पश्चादुदग्गोविप्रसाधव: ।।४५।।**

पूर्व में घोड़ा और सफेद वस्तु, दक्षिण में शव और मांस, पश्चिम में कन्या और दही तथा उत्तर में गाय, ब्राह्मण और सज्जन पुरुष श्रेष्ठ होते हैं।।४५।।

हयोऽश्व:। सित: श्वेतवर्णो य: कश्चिद्वस्तुरूप:। एते प्राच्यां पूर्वदिशि यातु: श्रेष्ठे शोभने। शवो मृतपुरुष:। मांसमामिषम्। एते दक्षिणे दक्षिणस्यां दिशि शुभे। कन्यका कुमारी। दधि क्षीरविकार:। एते पश्चिमे पश्चिमायां दिशि शोभने। गौ: प्रसिद्धा। विप्रो ब्राह्मण:। साधु: सज्जन:। एत उदग् उत्तरस्यां दिशि शोभना:। उक्तं च—

द्रव्याणि श्वेतानि तुरङ्गमश्च पूर्वेण याम्येन शवं समांसम्।
पश्चात् कुमारी दधि चातिशस्तं सौम्येन गोब्राह्मणसाधवश्च।। इति।।४५।।

अथाशुभानाह—

**जालश्वचरणौ नेष्टौ प्राग्याम्यौ शस्त्रघातकौ।**
**पश्चादासवषण्ढौ च खलासनहलान्युदक् ।।४६।।**

पूर्व में जाल के साथ चलने वाले और कुत्ते के साथ चलने वाले, दक्षिण में शस्त्र और वधिक, पश्चिम में आसव ( मद्य आदि ) और नपुंसक तथा उत्तर में आसन और हल अशुभ होते हैं।।४६।।

जाल: प्रसिद्धः। सूत्रतन्तुविरचितो जाल: पक्षिणो यत्र बध्यन्ते। जालेन चरति शुना चरतीति जालश्वचरणौ। एतौ प्राक् पूर्वस्यां दिशि नेष्टावशुभौ। शस्त्रमायुधवर्जितमन्यद्यत् किञ्चित्। घातको बाधकः। एतौ याम्यायां दक्षिणस्यां दिशि न शुभौ। आसव: पानविशेषः। षण्ढ: क्लीब:। एतौ पश्चात् पश्चिमायां दिशि न शुभौ। खलो दुर्जन:। आसनं प्रसिद्धम्। पर्यङ्कादि। हलं लाङ्गलम्। एतान्युदगुत्तरस्यां दिशि न शोभनानि। उक्तं च—

जालकरश्वकरौ न शुभौ प्राग् घातकशस्त्रकरौ यमदिक्स्थौ।
षण्ढकमद्यकरावपि पश्चादासनशीरखलैः सह चोदक्।। इति।।४६।।

अधुना कर्मादौ शकुनानां विशेषमाह—

**कर्मसङ्गमयुद्धेषु प्रवेशे नष्टमार्गणे।**
**यानव्यस्तगता ग्राह्या विशेषश्चात्र वक्ष्यते।।४७।।**

कर्मर ( जो करते हैं ), संगम ( किसी वृद्ध आदि के साथ संयोग ) युद्ध, प्रवेश ( गृहप्रवेश आदि ) और नष्ट द्रव्य के अन्वेषण में यात्रा में कथित प्रदेश से विरुद्ध प्रदेश में स्थित शकुन शुभ होता है। जैसे यात्रा में जो दक्षिण में शुभ हैं वे यहाँ पर वाम में, यात्रा में जो वाम में शुभ हैं वे यहाँ पर दक्षिण में, यात्रा में जो आगे में शुभ हैं वे यहाँ पर पीछे में, यात्रा में जो पीछे में शुभ हैं वे यहाँ पर आगे में, यात्रा में जो पूर्व दिशा में शुभ हैं वे यहाँ पर पश्चिम में, यात्रा में जो पश्चिम में शुभ हैं वे यहाँ पर पूर्व में, यात्रा में जो दक्षिण में शुभ हैं वे यहाँ पर उत्तर में और यात्रा में जो उत्तर में शुभ हैं वे यहाँ पर दक्षिण में शुभ होते हैं।।४७।।

कर्म यत् किञ्चित् क्रियते। सङ्गम: केनचिद्वृद्धादिना सह संयोगः। युद्धः संग्रामम्। एतेषु। तथा प्रवेशे गृहप्रवेशादौ। नष्टमार्गणे नष्टस्यापहृतस्य वस्तुनो मार्गणेऽन्वेषणे। एतेषु सर्वेषु यानव्यस्तगता ग्राह्याः। याने यात्रायां येन प्रकारेणोक्तास्तद्व्यत्ययेनैतेषु ग्राह्याः। एतदुक्तं भवति—यात्रायां ये दक्षिणे शस्तास्तेऽत्र वामतः। यात्रायां वामतस्तेऽत्र दक्षिणतः। यात्रायां ये च पुरस्तात् तेऽत्र पृष्ठतः। यात्रायां ये च पृष्ठतस्तेऽत्राग्रत इति। दिक्ष्वप्येवमेव विपर्यया विज्ञातव्याः। तेन यात्रायां ये पूर्वस्यां दिशि तेऽत्र पश्चिमायाम्। ये च पश्चिमायां ते च पूर्वस्याम्। ये च दक्षिणस्यां त उत्तरस्याम्। य उत्तरस्यां ते दक्षिणस्यामिति। अत्रास्मिन्नर्थे कर्मसङ्गमादिके यो विशेष: स वक्ष्यते कथयिष्यते। उक्तं च—

नष्टावलोकनसमागमयुद्धकर्मवेश्मप्रवेशमनुजेश्वरदर्शनेषु।
..........................................यानप्रतीपविधिना शुभदा भवन्ति।। इति।।४७।।

अथात्रैव विशेषमाह—

**दिवा प्रस्थानवद्ग्राह्याः कुरङ्गरुरुवानराः।**
**अह्नश्च प्रथमे भागे चाषवञ्जुलकुक्कुटाः।।४८।।**

**पश्चिमे शर्वरीभागे नप्तृकोलूकपिङ्गलाः।**
**सर्व एव विपर्यस्ता ग्राह्याः सार्थेषु योषिताम्।।४९।।**

दिन में पूर्वोक्त कर्म आदि करना हो तो वहाँ पर कुरङ्ग, रुरु ( मृगजाति ) और वानर को; पूर्वाह्न में चाष, वञ्जुल और मुर्गा को तथा रात्रि के अन्त भाग में नप्तृक, उल्लू और पिङ्गला को यात्रा की तरह ग्रहण करना चाहिये; किन्तु स्त्रियों के लिये उपर्युक्त समस्त शकुन विपरीतक्रम से ग्रहण करना चाहिये।।४८-४९।।

**दिवा प्रस्थानवदिति**। कर्मादिषु दिवा दिवसे। कुरङ्गरुरुवानराः, कुरङ्गो हरिणः, रुरुर्मृगजातिः, वानरः कपिः, एते प्रस्थानवद् ग्राह्याः। यथा प्रस्थाने यात्रायां गृह्यते तथात्रापि। अह्नो दिवसस्य प्रथमे भागे चाषवञ्जुलकुक्कुटाः सर्व एते पक्षिणः प्रस्थानवद् ग्राह्याः।

शर्वरी रात्रिः, तस्याः पश्चिमेऽन्त्ये भागे। नप्तृका उलूका पिङ्गला एते सर्व एव पक्षिणः। पिङ्गलोलूकचेटिका, एते प्रस्थानवद् ग्राह्याः। योषितां स्त्रीणां केवलानां सार्थेषु सर्व एव विपर्यस्ता विपरीतगता ग्राह्याः। यात्रायां कर्मसङ्गमादिष्वपि सर्वत्र विपरीता ग्राह्या इति।।४८-४९।।

अन्यदप्याह—

**नृपसन्दर्शने ग्राह्यः प्रवेशेऽपि प्रयाणवत्।**
**गिर्यरण्यप्रवेशेषु नदीनां चावगाहने ।।५०।।**

**वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ।**

यात्रा में जो वाम और दक्षिणगत शकुन शुभ हैं, वे राजा के दर्शन, गृहप्रवेश आदि, पर्वतप्रवेश, वनप्रवेश और नदी के पार होने में क्रम से आगे और पीछे में शुभ होते हैं। जैसे—यात्रा में जो वाम में शुभ हैं, वे यहाँ पर आगे में और यात्रा में जो दक्षिण में शुभ हैं, वे यहाँ पर पीछे में शुभ होते हैं।।५०-१/२।।

नृपो राजा तस्य सन्दर्शनेऽवलोकने। यद्यपि प्रवेशो राजगृहे भवति, तथापि प्रयाणवद् ग्राह्यः। एवं यद्यपि प्रवेशस्तथापि तस्मिन् प्रयाणवद् ग्राह्यः। उक्तं च—

केचिज्जगुर्गमनवन्नृपदर्शनेषु .................... । इति।

गिरिप्रवेशे पर्वतप्रवेशे। अरण्यप्रवेशे अटव्याम्। नदीनां सरितामेवावगाहने उत्तरणे।

यौ शकुनौ यात्रायां वामदक्षिणगौ शस्तौ तावग्रपृष्ठगाविति प्रवेशदिशि शस्तौ। यात्रायां ये वामतः शस्तास्तेऽत्राग्रतः पुरतः। यात्रायां ये दक्षिणतस्तेऽत्र पृष्ठत इति।।५०।।

अथान्येष्वाह—

**क्रियादीप्तौ विनाशाय यातुः परिघसंज्ञितौ ।।५१।।**

**तावेव तु यथाभागं प्रशान्तरुतचेष्टितौ।**
**शकुनौ शकुनद्वारसंज्ञितावर्थसिद्धये ।।५२।।**

क्रियादीप्ति में गमन करने वाले के दोनों पार्श्व में शकुन दिखाई दे तो 'परिघ'संज्ञक शकुन होता है। परिघसंज्ञक शकुन होने पर गमन करने वाले का नाश होता है; किन्तु वे

दोनों शकुन यथाभाग ( दक्षिण भाग वाले दक्षिण भाग में और वाम भाग वाले वाम भाग में ) स्थित होकर शान्तिपूर्वक शब्द करें तो 'शकुनद्वार'संज्ञक होते हैं। इनमें गमन करने वाले के अभीष्ट अर्थ की सिद्धि होती है।।५१-५२।।

क्रियादीप्तस्य लक्षणं प्रागुक्तम्—'क्रियादीप्तो गतस्थानभावस्वरविचेष्टितैः' इति। क्रियादीप्तौ शकुनौ यातुर्जिगमिषोर्यदि परिघसंस्थितौ उभयपार्श्वस्थितौ भवतस्तदा विनाशाय यातुरेव भवतस्तावेव शकुनौ परिघसंज्ञितौ।

यथाभागं यथास्थितौ भवतः। यः शकुनो दक्षिणस्थितः स च तत्रैव शुभः, यश्च वामभागस्थः स च वामभाग एव शुभः। तौ च प्रशान्तरुतचेष्टितौ, प्रशान्तं रुतं शब्दश्चेष्टितं च ययोस्तौ तथाभूतौ शकुनौ शकुनानां शुभानामर्थानां द्वारसंज्ञितौ मार्गभूतावर्थानां च सिद्धये भवतः।।५१-५२।।

अधुना मतान्तरेण शकुनद्वारमाह—

**केचित्तु शकुनद्वारमिच्छन्त्युभयतः स्थितैः।**
**शकुनैरेकजातीयैः शान्तचेष्टाविराविभिः ।।५३।।**

किसी का मत है कि एक जाति वाले, शान्त चेष्टा से शब्द करने वाले, दोनों पार्श्व में स्थित शकुनों से शकुनद्वार संज्ञक शकुन बनता है।।५३।।

चेष्टालक्षणं वक्ष्यति—'तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम्।' एवं शान्तचेष्टा विरावः शब्दश्च येषां तैः शकुनैरेकजातीयैरेकयोन्युद्भवैरुभयतः स्थितैः पार्श्वद्वयगतैः केचित् शकुनद्वारमिच्छन्ति कथयन्ति। तथा च नन्दिः—

एकयोन्युद्भवैः शान्तैः शान्तचेष्टैर्व्यवस्थितैः।
यथाभागगतैस्तैश्च शकुनद्वारमिष्यते।। इति।।५३।।

अन्यदप्याह—

**विसर्जयति यद्येक एकश्च प्रतिषेधति।**
**स विरोधोऽशुभो यातुर्ग्राह्यो यो बलवत्तरः ।।५४।।**

यदि यात्रा के समय एक शकुन यात्रा करने की आज्ञा दे और दूसरा निषेध करे तो वह 'विरोध'संज्ञक शकुन अशुभ फल देने वाला होता है अथवा उन दोनों में जो बली हो, उसका ग्रहण करना चाहिये।।५४।।

एकः शकुनो यदि विसर्जयति यश्चात्र सिद्धिमाचष्टे। एकश्चान्यः प्रतिषेधति विरोधमाचष्टे स च यातुर्गच्छतो विरोधसंज्ञः, अशुभश्च, अथवा तयोर्द्वयोर्बलवत्तरोऽतिशयेन बली स ग्राह्यः। बलं च प्रागेवोक्तम्—'जवजातिबलस्थानम्' इति।।५४।।

अन्यदप्याह—

**पूर्वं प्रावेशिको भूत्वा पुनः प्रास्थानिको भवेत्।**
**सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययात् ।।५५।।**

यदि यात्राकाल में पहले प्रवेशकालिक शकुन होकर बाद में यात्राकालिक शकुन हो तो सुखपूर्वक कार्य की सिद्धि होती है तथा गृहप्रवेश आदि काल में इसके विपरीत ( पहले यात्राकालिक शकुन होकर बाद में प्रवेशकालिक शकुन ) हो तो सुखपूर्वक कार्य की सिद्धि होती है।।५५।।

पूर्वं प्रथमं शकुनः प्रावेशिको भूत्वा पुनः पश्चात् प्रास्थानिकः प्रायाणिको यदि भवति, प्रयाणे यद्धितं तत् करोति। प्रवेशे नष्टमार्गणे यानव्यस्तगतो ग्राह्य इति। एवमादौ प्रावेशिकः। तदा स शकुनः सुखेनाक्लेशेन यातुः सिद्धिमाचष्टे कथयति। प्रवेशे तद्विपर्ययात्। प्रवेशो यात्रायां निर्वर्त्य स्वगृहे याता प्रविशति, तस्मिन् प्रवेशे तद्विपर्ययादुक्तविपर्ययाद् ग्राह्यः। पूर्वं प्रायाणिकः पश्चात् प्रावेशिको यदि भवति, तदा सुखेन सिद्धिमाचष्ट इति।।५५।।

अथान्यदप्याह—

**विसर्ज्य शकुनः पूर्वं स एव निरुणद्धि चेत्।**
**प्राह यातुररेर्मृत्युं डमरं रोगमेव वा ।।५६।।**

जो शकुन पहले शुभ चेष्टा करके बाद में यात्रा का निषेध करे तो वह शत्रु द्वारा गमन करने वाले की मृत्यु, शस्त्रकलह या रोग को सूचित करता है।।५६।।

शकुनः प्रथमं पूर्वं विसर्ज्य यात्रायां शुभचेष्टितं कृत्वा स एव पुनर्यदि निरुणद्धि यात्रां प्रतिषेधयति, तदा यातुर्गच्छतः, अरेः शत्रोः सकाशान्मृत्युं मरणं प्राह कथयति। अथवा डमरं शस्त्रकलहं रोगमेव वा कथयति।।५६।।

अथान्यदप्याह—

**अपसव्यास्तु शकुना दीप्ता भयनिवेदिनः ।**
**आरम्भे शकुनो दीप्तो वर्षान्तिस्तद्भयङ्करः ।।५७।।**

दीप्त दिशा में स्थित होकर बाईं तरफ शकुन हो तो भय को सूचित करता है तथा कार्य के प्रारम्भ में ही दीप्त शकुन दिखाई दे तो एक वर्ष तक उस कार्य में भय को अभिव्यक्त करता है।।५७।।

अपसव्या अप्रदक्षिणाः शकुनास्ते च दीप्तदिक्स्थाः सूर्याभिमुखं भयनिवेदिनो भयं निवेदयन्ति कथयन्ति। आरम्भे कार्यप्रारम्भे शकुनो दीप्तो वर्षान्तिर्वर्षमध्ये तद्भयङ्करः। तस्मिन्नेव कार्ये तद्भयं करोति।।५७।।

अधुना चेष्टादीप्तस्य लक्षणं तत्फलं चाह—

**तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम् ।**
**धनसैन्यबलाङ्गेष्टकर्मणां स्युर्भयङ्कराः ।।५८।।**

तिथि, वायु, नक्षत्र, सूर्य, स्थान और चेष्टा दीप्त हों तो क्रम से धन, सैन्य, बल, अंग, इष्ट और कर्म के लिये भयकारी होते हैं।।५८।।

तिथिदीप्त:। वायुदीप्त:। अर्कदीप्त:। नक्षत्रदीप्त:। स्थानदीप्त:। चेष्टादीप्त:। एतेषां लक्षणं प्रागेवोक्तम्। कस्यचिद्विघातं कर्तुमिच्छु:। एवंविधा दीप्ता:। यथाक्रमं धनसैन्य-बलाङ्गेष्टकर्मणां भयङ्करा: स्युर्भवेयु:। तद्यथा—तिथिदीप्त: शकुनो धनभयं करोति। वायुदीप्त: सैन्यस्य। अर्कदीप्तो बलस्य। नक्षत्रदीप्तोऽङ्गस्य शरीरावयवस्य। स्थानदीप्त इष्टस्याभिप्रेतस्य वल्लभस्य वा। चेष्टादीप्त: कर्मण:।।५८।।

अन्यदप्याह—

**जीमूतध्वनिदीप्तेषु भयं भवति मारुतात्।**
**उभयो: सन्ध्ययोर्दीप्ता: शस्त्रोद्भवभयङ्करा: ।।५९।।**

मेघ की ध्वनि से दीप्त शकुन वायु से भय और दोनों सन्ध्याओं में दीप्त शकुन शस्त्र से भय उत्पन्न करता है।।५९।।

जीमूतो मेघ:। जीमूतध्वनिना मेघशब्देन दीप्तेषु शकुनेषु मारुताद्वायोर्भयं भवति। उभयोर्द्वयो: सन्ध्ययो: सूर्योदयास्तमययोर्दीप्ता: शकुना: शस्त्रोद्भवं शस्त्रसमुत्थं भयं कुर्वन्ति।

अथान्यदप्याह—

**चितिकेशकपालेषु मृत्युबन्धवधप्रदा: ।**
**कण्टकीकाष्ठभस्मस्था: कलहायासदु:खदा: ।।६०।।**

**अप्रसिद्धिं भयं वापि नि:साराश्मव्यवस्थिता: ।**
**कुर्वन्ति शकुना दीप्ता: शान्ता याप्यफलास्तु ते ।।६१।।**

यदि शकुन चिता, केश और कपाल पर बैठे हों तो क्रम से मृत्यु, बन्धन और वध को करने वाले होते हैं तथा काँटेदार वृक्ष, काष्ठ और भस्म पर बैठे हों तो क्रम से कलह, उपद्रव और दु:ख देने वाले होते हैं। यदि शकुन निस्सार वस्तु पर बैठे हों तो कार्य की असिद्धि और पत्थर पर बैठे हों तो भय करते हैं। ये सब दीप्त शकुनों के फल हैं। शान्त शकुन बहुत कम अशुभ फल देने वाले होते हैं।।६०-६१।।

**चितिकेशकपालेष्विति**। चितौ शवदाहाग्निसमीपे मृत्युं मरणं ददाति। केशेषु मूर्धजेषु स्थितो बन्धं ददाति। कपालेऽस्थिशकले स्थितो वधं मरणं तथा कण्टकीवृक्षे स्थित: शकुन: कलहं ददाति। काष्ठे स्थित: आयासमुपद्रवं ददाति। भस्मनि स्थितो दु:खम्।

तथा नि:साराश्मव्यवस्थिता: अप्रसिद्धिं भयं वापि कुर्वन्ति। नि:सारेऽन्त:सुषिरे स्थित: कार्याणामप्रसिद्धिं करोति। अश्मनि पाषाणे स्थितो भयं करोति। **कुर्वन्ति शकुना दीप्ता इति**। यदेतत् प्रागुक्तं चितिकेशकपालेषु, तद्दीप्ता: शकुना: कुर्वन्ति, शान्तास्तु ते पुनर्याप्य-फला भवन्ति। याप्यमीषत् फलं भवति।।६१।।

अन्यदप्याह—

**असिद्धिसिद्धिदौ ज्ञेयौ निर्हाराहारकारिणौ ।**
**स्थानाद्द्रुवन् व्रजेद्यात्रां शंसते त्वन्यथागमम् ।।६२।।**

मल का त्याग करने वाले और भोजन करने वाले शकुन क्रम से कार्य की असिद्धि और सिद्धि करने वाले होते हैं। यदि शब्द करते हुये शकुन अपने स्थान से चले जायँ तो गमन और पुनः अपने स्थान पर आकर बैठ जायँ तो किसी के आगमन को सूचित करते हैं।।६२।।

निर्हाराहारकारिणौ शकुनौ यथासङ्ख्यमसिद्धिसिद्धिदौ ज्ञेयौ ज्ञातव्यौ। निर्हारं पुरीषोत्सर्गः। निर्हारकारी शकुनोऽसिद्धिं कार्याणां करोति। आहारकारी भोजनकृल्लीलासिद्धिकरः। **स्थानाद्रुवन्निति**। यस्मिन् स्थाने स्थितस्तस्माद्रुवन् शब्दं कुर्वन् यदि व्रजेद् गच्छेत्, तदा यात्रां गमनं शंसते कथयति। अयथा विपर्ययं आगमं शंसते कथयति। एतदुक्तं भवति—वाच्यमानः स्थानमागत्य उपविशति तदा शकुनः कस्यचिदागमं शंसते।।६२।।

अथान्यदप्याह—

**कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः।**
**उच्चमादौ स्वरं कृत्वा नीचं पश्चाच्च दोषकृत्।।६३।।**

स्वरदीप्त शकुन में कलह, स्थानदीप्त में विग्रह और पहले जोर से शब्द करके बाद में मन्द हो जायँ तो दोष करने वाले होते हैं।।६३।।

स्वरो दीप्तो येषां तेषु शकुनेषु कलहो भवति। स्थाने दीप्ता ये स्थितास्तेषु विग्रहो भवति। आदौ प्रथममुच्चं स्वरं कृत्वा पश्चान्नीचमल्पं करोति, तदा दोषकृद्दोषं करोति।।६३।।

अन्यदप्याह—

**एकस्थाने रुवन् दीप्तः सप्ताहाद् ग्रामघातकः।**
**पुरदेशनरेन्द्राणामृत्वर्धायनवत्सरात् ।।६४।।**

यदि एक स्थान पर स्थित शकुन दीप्त होकर सात दिन तक शब्द करता रहे तो गाँव के नाश को, दो मास तक शब्द करता रहे तो पुर के घात को, तीन मास तक शब्द करता रहे तो देश के घात को और एक वर्ष तक शब्द करता रहे तो राजा के घात को सूचित करता है।।६४।।

दीप्तः शकुन एकस्मिन् स्थाने रुवन् क्रोशन् सकलमेव दिनं तिष्ठति, तदा सप्ताहात् सप्तभिर्दिनैः पुरतो ग्रामघातको ग्रामविनाशं करोति। न केवलं यावत् पुरदेशनरेन्द्राणामृत्वर्धायनवत्सराद् विनाशं करोति। पुरं नगरं तत्र चैकस्थाने रुवन् ऋतुना मासद्वयेन घातं करोति। एवमर्धायनेन त्रिभिर्मासैर्देशघातं करोति। नृपस्य राज्ञो वत्सराद् वर्षाद् घातं करोति। एकस्थाने रुवन्निति सर्वत्रानुवृत्तिः।।६४।।

अन्यदप्याह—

**सर्वे दुर्भिक्षकर्त्तारः स्वजातिपिशिताशिनः।**
**सर्पमूषकमार्जारपृथुलोमविवर्जिताः ।।६५।।**

सर्प, चूहा, बिल्ली और मछली के अतिरिक्त कोई भी शकुन यदि अपनी ही जाति का मांसभक्षण करने लगे तो दुर्भिक्षकारी होता है।।६५।।

सर्वे शकुनाः स्वजातिपिशिताशिनः स्वजातीनां पिशितं मांसमश्नन्ति भक्षयन्ति, तथाभूता दुर्भिक्षं कुर्वन्ति, किन्तु सर्प उरगः, मूषक आखुः, मार्जारो बिडालः, पृथुलोमा मत्स्यः। एतान् वर्जयित्वा एषां सर्वेषां पिशिताशित्वं स्वभाव एव अन्येषामुत्पातः। उक्तं च—

विहाय सर्पाखुविडालमत्स्यान् स्वजातिमांसान्युपभुञ्जते वा।
व्रजन्ति वा मैथुनमन्यजात्याम्........................................ ।। इति।।६५।।

अन्यदप्याह—

**परयोनिषु गच्छन्तो मैथुनं देशनाशनाः।**
**अन्यत्र वेसरोत्पत्तेर्नृणां चाजातिमैथुनात् ।।६६।।**

खच्चर की उत्पत्ति को ( घोड़े के साथ गदहे के मैथुन से खच्चर की उत्पत्ति होती है, उसको ) तथा मनुष्यों के अजाति मैथुन को छोड़कर कोई शकुन अन्य जाति के साथ मैथुन करे तो देश का नाश होता है।।६६।।

परयोनिष्वन्ययोनिषु मैथुनं व्रजन्तो गच्छन्तो देशनाशं कुर्वन्ति, किन्तु अन्यत्र वेसरोत्पत्तेरिति। वेसरोऽश्वतरस्तदुत्पत्तेस्तत्सम्भवादन्यत्र तां वर्जयित्वा तत्राश्वायां गर्दभो याति। नृणां पुंसां चाजातिमैथुनादन्यत्र। यतो नरा मनुष्या अजातौ वडवादिषु यान्ति। एवमादिकं वर्जयित्वा यतस्तदुत्पत्तिरूपं न भवति।।६६।।

अन्यदप्याह—

**बन्धघातभयानि स्युः पादोरूमस्तकान्तिगैः।**
**शष्पापःपिशितान्नादैर्दोषवर्षक्षयग्रहाः ।।६७।।**

पाद, ऊरु और शिर के निकट होकर शकुन चला जाय तो क्रम से बन्धन, घात और भय को सूचित करता है। घास खाता हुआ शकुन दिखाई दे तो दोष उत्पन्न करने वाला, जल पीता हुआ दिखाई दे तो वर्षा करने वाला, मांस खाता हुआ दिखाई दे तो अंगक्षत करने वाला और अन्न खाता हुआ शकुन दिखाई दे तो किसी बन्धु का समागम कराने वाला होता है।।६७।।

पादोरुमस्तकान्तिगैः शकुनैर्यथाक्रमं बन्धघातभयानि स्युर्भवेयुः, यदा शकुनः पादान्तिगः पादनिकटे याति तदा बन्धं करोति। अथोरुप्रदेशे ऊर्वोर्निकटे याति, तदा घातमभिघातं करोति। अथ मस्तके याति, तदा भयं करोति। **शष्पापःपिशितान्नादैरिति।** शष्पापस्तृणाशी शकुनः नृणां नाशेन दोषं करोति। अपोऽदो जलाशी शकुनो वर्षं वृष्टिं करोति। पिशितादो मांसभक्षी क्षतमङ्गक्षतं करोति। अन्नादोऽन्नभक्षी ग्रहं संयोगं केनचिद्बन्धुना सह करोति।।६७।।

अधुना शकुनोपदेशेऽनागन्तूनां लक्षणमाह—

**क्रूरोग्रदोषदुष्टैश्च प्रधाननृपवृत्तकैः ।**
**चिरकालेन दीप्ताद्यास्वागमो दिक्षु तन्नृणाम् ।।६८।।**

दीप्त दिशा में स्थित शकुन क्रूर के साथ किसी पुरुष का आगमन, धूमित दिशा में स्थित शकुन दण्ड के साथ किसी पुरुष का आगमन, शान्त दिशा में स्थित शकुन दोष-युक्त पुरुष के साथ किसी पुरुष का आगमन, इसके बाद दुष्ट पुरुष के साथ, इसके बाद प्रधान पुरुष के साथ, इसके बाद राजा के साथ, इसके बाद श्रावक के साथ और इसके बाद अङ्गारित दिशा में स्थित शकुन बहुत देर के बाद किसी पुरुष के आगमन को सूचित करता है।।६८।।

दीप्ताद्यास्वष्टसु दिक्षु स्थिते शकुने क्रूराद्युपलक्षितानां नृणां पुरुषाणामागमो भवति। तन्नृणां तन्नृशकुनोपलक्षितानाम्। तेन दीप्तायां दिशि स्थितः शकुनः कस्यचित् पुरुषस्य क्रूरेण हिंस्रेण संयुतस्यागमं करोति। धूमितायां दिशि स्थितः शकुनः कस्यचिदुग्रेण दण्डेन सह नरस्यागमं करोति। तत्परं शान्तायां दिशि स्थितः कस्यचिद्दोषयुक्तेन नरेण सहितस्यागमं करोति। तत्परं दुष्टेन संयुक्तस्य। तत्परं प्रधानेन युक्तस्य। तत्परं नृपेण राज्ञा संयुक्तस्य। तत्परं वृत्तकेन श्रावकेण संयुक्तस्य। तत्परमङ्गारितायां दिशि स्थितः शकुनश्चिरकालेन प्रभूतसमयेन सहितस्य नरस्यागमं करोति। एवं केचिद् व्याचक्षते। अन्ये चतस्रो दिश इच्छन्ति। दीप्ता दीपिता शान्ताङ्गारिणी चेति। तत्र दीप्तदिक्स्थे शकुने क्रूरेण सहितस्य नरस्यागमम्। धूमितदिक्स्थे उग्रेण तीव्रतरेण दोषेण दुष्टो यस्तेन सहितस्यागमम्। शान्त-दिक्स्थे प्रधानस्य नृपस्य नहुषादेर्वृत्तं चरितं यः कथयति, तेन सहितस्य। अङ्गारितास्थे चिरकालेन सहितस्येति सहयोगे तृतीया। एषैव व्याख्या ज्यायसी।।६८।।

अथ य आगच्छति तस्य सद्रव्यनिर्द्रव्यत्वज्ञानमाह—

**सद्रव्यो बलवांश्च स्यात् सद्रव्यस्यागमो भवेत् ।**
**द्युतिमान् विनतप्रेक्षी सौम्यो दारुणवृत्तकृत् ।।६९।।**

जिस दिन किसी भक्ष्य द्रव्य के साथ बली शकुन दिखाई दे, उस दिन द्रव्य का लाभ होता है। यदि दीप्तियुत और अधोमुख दृष्टि वाला शुभ शकुन भी दिखाई दे तो भयानक वृत्तान्त को सूचित करता है।।६९।।

शकुनः सद्रव्यो येन केनचिद् भक्ष्यद्रव्येण संयुक्तः स च बलवांश्च बलयुक्तः स्याद् भवेत्। तदा सद्रव्यस्यागमो भवेत् स्यात्। य आगच्छति तद्दिने स द्रव्ययुक्तः, अन्यथा शून्यहस्तः। अथ शकुनो द्युतिमान् दीप्तियुक्तः स एव यदि विनतप्रेक्षी अधोदृष्टिर्भवति, तदा सौम्योऽपि शुभोऽपि दारुणं तीव्रं वृत्तं करोति। वृत्तं कथनं यः सूचयति स वृत्तकृद् दुष्टं फलं करोति। य आगच्छति सद्रव्यः पुमान् स उपद्रवं करोतीत्यर्थः।।।६९।।

अन्यदप्याह—

**विदिक्स्थः शकुनो दीप्तो वामस्थेनानुवाशितः ।**
**स्त्रियाः संग्रहणं प्राह तद्दिगाख्यातयोनितः ।।७०।।**

यदि विदिशा में स्थित दीप्त शकुन वाम भाग में स्थित अन्य शकुन के द्वारा शब्द करे तो उस दिशा में उक्त पुरुष के द्वारा किसी स्त्री का संयोग सूचित करता है।।७०।।

शकुनो विदिक्स्थो विदिशि स्थितो दीप्तः सूर्याभिमुखः स च वामस्थेन वामभाग-समवस्थितेनान्येन शकुनेनानुवाशितो यदि भवति, तदा तद्दिगाख्यातयोनितः तस्यां दिशि आख्याता उक्ता योनिरुत्पत्तिर्यस्य नरस्य तस्य सकाशात् स्त्रिया योषितः संग्रहणं संयोगं प्राह कथयति। पुरुषस्तां स्त्रियं ददातीत्यर्थः। अथवा तस्यां विदिशि यस्याः स्त्रिया आख्याता योनिस्तस्याः संयोगमाहेति।।७०।।

अन्यदप्याह—

**शान्तः पञ्चमदीप्तेन विरुतो विजयावहः ।**
**दिग्नरागमकारी वा दोषकृत् तद्विपर्यये ।।७१।।**

शान्त शकुन अपने से पाँचवीं दीप्त दिशा में स्थित दीप्त शकुन द्वारा शब्दायमान हो तो उस दिशा में स्थित पुरुष का आगमन कहता है। उससे विपरीत ( दीप्त शकुन अपने से पाँचवीं शान्त दिशा में स्थित शान्त शकुन द्वारा शब्दायमान ) हो तो दोष करने वाला होता है।।७१।।

शान्तः शकुनः पञ्चमदीप्तेनान्येन विरुतः। तस्माच्छकुनाद्यः पञ्चम्यां दिशि दीप्तायां स्थिता दीप्तः स एवार्काभिमुखस्तेन। विरुतः कृतशब्दो विजयावहो भवति विजयमावहति। दिग्नरागमकारी वा। तस्यां दिशि यो नरः पुरुषस्तस्य वाऽऽगमं करोति। तत आगच्छतीत्यर्थः। दोषकृत् तद्विपर्यये। यस्तस्मात् पूर्वोक्ताद् विपर्यये विपरीते स दोषकृत्। दीप्तः पञ्चमशान्तेन विरुतस्तदा दोषकृद्भवति, दोषमशुभं करोतीत्यर्थः।।७१।।

अन्यदप्याह—

**वामसव्यगतो मध्यः प्राह स्वपरयोर्भयम् ।**
**मरणं कथयन्त्येते सर्वे समविराविणः ।।७२।।**

मध्य स्थित शकुन वाम पार्श्वगत शकुन के द्वारा शब्दायमान हो तो आत्मीय जनों से और दक्षिण पार्श्वगत शकुन के द्वारा शब्दायमान हो तो शत्रुओं से भय को सूचित करता है तथा ये सभी एक ही समय में यदि बराबर शब्द करें तो होने वाले मरण को सूचित करते हैं।।७२।।

मध्यो मध्यमभागस्थः शकुनो वामसव्यगतो यथाक्रमं स्वपरयोर्भयं प्राह कथयति। मध्यस्थः शकुनो वामभागस्थेन शकुनेन विरुतः स्वभयं स्वीयेभ्य आत्मीयेभ्यो भयं प्राह। स एव मध्यमः सव्येन दक्षिणभागस्थेन विरुतः पराच्छत्रोर्भयं प्राह। अर्थादेवं द्वाभ्यां

विरुतो मध्यस्थः स्वपरयोरेव भयं प्राह। सर्व एते त्रयः समविराविणो युगपदुद्भवन्तो मरणं कथयन्ति प्रवदन्ति।।७२।।

अन्यदप्याह—

**वृक्षाग्रमध्यमूलेषु गजाश्वरथिकागमः ।**
**दीर्घाब्जमुषिताग्रेषु नरनौशिबिकागमः ॥७३॥**

यदि वृक्ष के अग्रभाग पर शकुन बैठा हो तो गजारूढ़ मनुष्य का, वृक्ष के मध्य में शकुन बैठा हो तो अश्वारूढ़ मनुष्य का और वृक्ष के मूल में शकुन बैठा हो तो रथारूढ़ मनुष्य का आगमन सूचित करता है। यदि लम्बी वस्तु पर शकुन बैठा हो तो नरारूढ़ मनुष्य का, कमलपुष्प पर बैठा हो तो नाव का और छिन्नाग्र भाग वाले वस्तु पर बैठा हो तो पालकी का आगमन सूचित करता है।।७३।।

वृक्षाग्रे स्थितः शकुनो गजारूढस्य नरस्यागमं करोति। वृक्षमध्ये स्थितोऽश्वारूढस्य। वृक्षमूले रथिकस्य रथारूढस्य। दीर्घे आयामिनि वस्तुनि स्थितः शकुनो नरारूढस्य नरस्यागमं करोति। अब्जे पद्मादौ स्थितो नाव आगमनं करोति। मुषिताग्रे छिन्नाग्रे स्थितः शिबिकागमनं युग्यस्यागमनं करोति। युग्यस्थस्येत्यर्थः।।७३।।

अथान्यदप्याह—

**शकटेनोन्नतस्थे वा छायास्थे छत्रसंयुते ।**
**एकत्रिपञ्चसप्ताहात् पूर्वाद्यास्वन्तरासु च ॥७४॥**

किसी उच्च प्रदेश ( पर्वत आदि ) पर शकुन बैठा हो तो शकटारूढ़ मनुष्य का और छाया में शकुन बैठा हो तो छत्रसंयुत पुरुष का आगमन सूचित करता है। पूर्व आदि दिशा और आग्नेय आदि विदिशा में पूर्वोक्त शकुन बैठे हों तो क्रम से एक, तीन, पाँच और सात दिन में शुभाशुभ फल प्रदान करते हैं। जैसे पूर्व दिशा में शकुन बैठे हों तो एक दिन में तथा उत्तर दिशा में बैठे हों तो सात दिन में शुभाशुभ फल देते हैं। आग्नेय कोण में शकुन बैठे हों तो एक दिन में, नैर्ऋत्य कोण में बैठे हों तो तीन दिन में, वायव्य कोण में बैठे हों तो पाँच दिन में और ईशान कोण में शकुन बैठे हों तो सात दिन में शुभाशुभ फल प्रदान करते हैं।।७४।।

शकटेनोन्नतस्थे। उच्चभागसमवस्थिते पर्वतादौ व्यवस्थिते। शकटेन गन्त्र्या कश्चिदागच्छति। छायास्थे शकुने छत्रसंयुत आतपत्रेण संयुक्त आगच्छति। तद्यथा—शकुने शुभमशुभं चोक्तं गन्त्र्याद्यागमनं वा; तत् कस्मिन् काले भवतीत्याह—**एकत्रिपञ्चसप्ताहादिति।** प्राच्यादिषु दिक्ष्वन्तरासु च विदिक्ष्वेकत्रिपञ्चसप्ताहाद् भवति। पूर्वस्यां दिशि स्थितेन शकुनेन यत् सूचितं शुभाशुभफलं कस्यचिद् वाऽऽगमनं केनचिद् वा संयोगस्तदेकाहादेकेनैव दिवसेन भवति। एवं दक्षिणस्यां त्र्यहात्। पश्चिमायां पञ्चाहात्। उत्तरस्यां सप्ताहात्। अन्तरासु च विदिक्षु, चशब्दादेवमेव। तेनाग्नेय्यामेकाहात्। नैर्ऋत्यां त्र्यहात्। वायव्यां पञ्चाहात्। ऐशान्यां सप्ताहादिति।।७४।।

नासापुटाश्रुपातप्रोथशिरोलोचने च रजनीषु।
विजयाय प्रज्वलनं ताम्रासितहरितशवलानाम्।।
विजयाय सर्वदैव हि सुशुक्लशुकवर्णयोर्ज्वलनमेषु।
एवं च यथासम्भवमन्येष्वपि वाहनेषु फलम्।। इति।।४।।

अन्यदपि चेष्टितमाह—

**प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद्विना**
**कम्पो वा वदनाच्च रक्तपतनं धूमस्य वा सम्भवः।**
**अस्वप्नश्च विरोधिनां निशि दिवा निद्रालसध्यानता**
**सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम्।।५।।**

विना कारण घास और पानी से विरक्ति, गिरना, पसीने का आना, काँपना, मुँह से खून निकलना, रात्रि में किसी से द्वेष करते हुये जागना, दिन में नींद, आलस्य और चिन्ता का आना, साद ( सुस्ती होना ), नीचे मुख करना, ऊपर देखना—घोड़े की ये सभी चेष्टायें अशुभ होती हैं।।५।।

**प्रद्वेषो यवसेति।** यवसस्य तृणादेरम्भसामपां च। प्रद्वेषो विरक्तो। तथा प्रपतनं प्रपातः। स्वेदो घर्मः। निमित्तं कारणम्। तस्माद्विना तद्व्यतिरेकेण। कम्पो वा निमित्ताद्विना। वदनान्मुखाद्वा कर्णादि रक्तस्य शोणितस्य पतनं स्रावः। **अस्वप्नश्च विरोधिनां निशीति।** निशि रात्रौ विरोधिनां वैरं कुर्वतामस्वप्नो जागरणम्। दिवा दिवसे निद्रालसत्वं ध्यानता चिन्ता। सादो वक्षाधः। अधोमुखताऽनूर्ध्वनिरीक्षणम्। वाजिनामश्वानामिदं विचेष्टितं चेष्टितं नेष्टमशुभं स्मृतमुक्तम्। उक्तं च—

निद्रानिरोधालसनीलनेत्राः प्रध्यानशून्यस्मृतयो दिनेषु।
निशासु चान्योन्यविरोधनिद्रानष्टास्तुरङ्गा न शिवाय भर्तुः।। इति।।५।।

अन्यदपि चेष्टितमाह—

**आरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः।**
**उपवाह्यतुरङ्गमस्य वा कल्पस्यैव विपन्नशोभना।।६।।**

पर्याण ( तंग तरहा, पुरुष आदि ) से युत घोड़े के ऊपर दूसरे घोड़े का चढ़ना, नीरोग और उपवाह्य ( सवार को पीठ पर लेकर चलते-चलते कुछ नहीं खाने वाले ) घोड़े का विपत्ति में आना शुभ नहीं होता है।।६।।

वाजिनोऽश्वस्य पर्याणादियुतस्य पर्याणसंयुक्तस्य। आदिग्रहणात् पुरुषसहितस्य। अन्यवाजिनामन्याश्वानामारोहणम्। पर्याणादियुतश्चान्योऽश्व आरोहति तन्न शोभनम्। **उपवाह्यतुरङ्गगमस्य चेति।** यस्मिन्नारुह्य गमनं प्रत्युपवाह्यते तस्योपवाह्यतुरङ्गमस्याश्वस्य कल्पस्यारोग्यस्य विपन्नशोभना नेष्टेति।।६।।

अधुना ह्रेषितलक्षणमाह—

**क्रौञ्चवद्रिपुवधाय ह्रेषितं ग्रीवया त्वचलया च सोन्मुखम्।**
**स्निग्धमुच्चमनुनादि हृष्टवद्ग्रासरुद्धवदनैश्च वाजिभिः ॥७॥**

घोड़े का क्रौञ्चपक्षी की तरह शब्द करना तथा गर्दन को स्थिर और ऊपर मुख करके शब्द करना, उच्च स्वर से बार-बार मधुर शब्द करना या ग्रास से मुख बन्द रहने पर भी आनन्दपूर्वक शब्द करना शत्रु के वध के लिये होता है।।७।।

क्रौञ्चः पक्षी। यस्य ह्रेषितं शब्दितं क्रौञ्चपक्षिसदृशं तद्रिपुबधाय शत्रुविनाशाय। तथा ग्रीवया कन्धरया त्वचलया स्थिरया च सोन्मुखं सह ऊर्ध्वेन मुखेन वर्तत इति सोन्मुखम्, तदपि रिपुबधायैव। स्निग्धं मधुरमुच्चमुच्चैः कृत्वा स्पष्टतरम्। अनुनादि घण्टाशब्दवदनुनदति पश्चाच्छब्दं करोति। हृष्टवत् परितोषयुक्तैर्ग्रासरुद्धवदनैः। ग्रासेन कवलेन रुद्धं वदनं मुखं येषां तैस्तथाभूतैस्तद्ध्रेषितं रिपुवधायैव भवति।।७।।

अन्यदप्याह—

**पूर्णपात्रदधिविप्रदेवतागन्धपुष्पफलकाञ्चनादि वा।**
**द्रव्यमिष्टमथवा परं भवेद्ध्रेषतां यदि समीपतो जयः ॥८॥**

यदि शब्द करते हुये घोड़े के पास में किसी शुभ द्रव्य से पूर्ण पात्र, दही, ब्राह्मण, देवता, सुगन्धित द्रव्य, फूल, फल, सोना आदि ( रजत, मणि, मोती आदि ) या अन्य शुभ द्रव्य आ जायँ तो जय होती है।।८।।

पूर्णं च तत् पात्रं च पूर्णपात्रम्। पात्रं भाजनम्। पूर्णं केनचिच्छुभद्रव्येण सर्षपाक्षत-तण्डुलादिकेनेति। दधि क्षीरविकारः। विप्रो ब्राह्मणः। देव एव देवता। गन्धः सुगन्धद्रव्यविशेषः। अगुरुकर्पूरकस्तूरिकादिः। पुष्पाणि कुसुमानि। फलं श्रीफलादि। काञ्चनं सुवर्णम्। आदिग्रहणाद् रजतमणिमुक्ताफलादि। अथवा परमन्यदिष्टं शुभद्रव्यं सिद्धार्थगोरोचनादि वा। ह्रेषतां शब्दं कुर्वतामश्वानां यदि समीपतः सन्निकर्षे निकटे भवेत्, तदा जयो भवति।।८।।

अन्यदप्याह—

**भक्ष्यपानखलिनाभिनन्दिनः पत्युरौपयिकनन्दिनोऽथवा।**
**सव्यपार्श्वगतदृष्टयोऽथवा वाञ्छितार्थफलदास्तुरङ्गमाः ॥९॥**

खाने की सामग्री, जल और लगाम को आनन्दपूर्वक ग्रहण करने वाले, स्वामी की इच्छा के अनुकूल चलने वाले तथा दक्षिण पार्श्व में दृष्टि रखने वाले घोड़े अभीष्ट फल प्रदान करने वाले होते हैं।।९।।

भक्ष्यं भक्षणीयं द्रव्यम्। पानं जलम्। खलिनं कविका। एतानि यद्यभिनन्दयन्ति, अथवा पत्युर्भर्तुरौपयिकं यदुपयुज्यते तदभिनन्दयन्ति। अथवा सव्यपार्श्वे आत्मीयदक्षिणपार्श्वे गतदृष्टयो वीक्ष्यमाणाः। एवंविधास्तुरङ्गमा वाञ्छितार्थफलदा वाञ्छितस्याभीष्टस्यार्थस्य फलं ददति। उक्तं च—

इष्टानिष्टव्यञ्जकमतः परं ह्रेषितं समवधार्यम्।
तच्च चलितप्रसारितशिरोधरोद्भूतमिष्टफलम्।।
ग्रासान्तर्वक्त्राणामुच्चैः स्निग्धानुनादि गम्भीरम्।
द्विजपूर्णभाजनेष्टद्रव्यस्रग्गन्धसुरमूलैः ।।
खलिनान्नपानधर्मस्वाम्युपकरणाभिनन्दिता चैषाम्।
सर्वार्थसिद्धये स्याद् दक्षिणपार्श्वे विलोकयताम्।। इति।।९।।

अधुनाशुभचेष्टितमाह—

**वामैश्च पादैरभिताडयन्तो महीं प्रवासाय भवन्ति भर्तुः।**
**सन्ध्यासु दीप्तामवलोकयन्तो ह्रेषन्ति चेद् बन्धपराजयाय ॥१०॥**

बाँयें पैर से पृथ्वी को खोदने वाले घोड़े स्वामी के विदेश-गमन के कारण होते हैं तथा सन्ध्याओं ( सूर्योदय, मध्याह्न, सूर्यास्त और अर्ध रात्रि ) में दीप्त दिशा को देखते हुये शब्द करें तो स्वामी के बन्धन और पराजय के कारण होते हैं।।१०।।

महीं भूमिं वामैश्च पादैरपसव्यचरणैरभिताडयन्तो घ्नन्तो भर्तुः पत्युः प्रवासाय भवन्ति। सन्ध्यासु चतसृषु सूर्योदयमध्याह्नास्तमयार्धरात्रिषु। दीप्तां दिशमवलोकयन्तः प्रेक्षमाणा यदि ह्रेषन्ति शब्दं कुर्वन्ति, तदा बन्धपराजयाय भवन्ति। स्वामिनो बन्धनं पराजयं च कुर्वन्ति इति।।१०।।

अन्यदप्याह—

**अतीव ह्रेषन्ति किरन्ति वालान् निद्रारताश्च प्रवदन्ति यात्राम्।**
**रोमत्यजो दीनखरस्वराश्च पांशून् ग्रसन्तश्च भयाय दृष्टाः ॥११॥**

यदि घोड़े बहुत शब्द करें, पूंछ के बालों को इधर-उधर फैलावें या शयन करें तो यात्रा को सूचित करते हैं तथा यदि बालों को गिरावें, दीन गदहे की तरह शब्द करें या धूली-भक्षण करें तो भय के लिये देखे जाते हैं।।११।।

अतीवात्यर्थं ह्रेषन्ति शब्दं कुर्वन्ति, तथा वालान् पुच्छवालान् किरन्ति विक्षिपन्ति। निद्रारताः स्वप्नशीलाश्च यात्रां गमनं प्रवदन्ति। तथा रोमत्याजो रोमाणि त्यजन्त्युत्सृजन्ति। दीनखरस्वराः, दीनस्वनाः क्षामशब्दाः। खरस्वना रूक्षध्वनयः। पांशून् मृत्तिका ग्रसन्तो भक्षयन्तो भयाय दृष्टाः। स्वामिनो भयमावेदयन्ति। उक्तं च—

सन्ध्यासु दीप्तदिङ्मुखसम्भ्रमगाढप्रनष्टनिद्राश्च।
ह्रेषन्तो भयजनना वधबन्धपराजयकराश्च।।
वक्रीकृतवालधयो दक्षिणपार्श्वानुशायिनो नेष्टाः।
वामचरणैः क्षितितलं घ्नन्तो ज्ञेयाः प्रवासाय।। इति।।११।।

अथ शुभनिमित्तान्याह—

**समुद्रवद्दक्षिणपार्श्वशायिनः पदं समुत्क्षिप्य च दक्षिणं स्थिताः।**
**जयाय शेषेष्वपि वाहनेष्विदं फलं यथासम्भवमादिशेद् बुधः ॥१२॥**

समुद्र ( पात्रविशेष = डिब्बा आदि ) की तरह जानुओं को मोड़ कर दक्षिण पार्श्व से शयन करने वाला तथा दाहिने पाँव को उठा कर पृथ्वी पर खड़ा होने वाला घोड़ा स्वामी की जय के लिये होता है। शेष ( हाथी, ऊँट आदि ) वाहनों में भी पूर्वोक्त यथासम्भव ( धूम, अग्निकण के विना ) फलों का आदेश करना चाहिये।।१२।।

समुद्गवज्जानुनी ढौकयित्वा समुद्रवद्दक्षिणेन सव्येन पार्श्वेण शरीरार्द्धेन स्वप्नशीला:। तथा सव्यं दक्षिणं पदं चरणं समुत्क्षिप्य भूमाववनाववस्थाप्य च स्थितास्तिष्ठन्ति। एवम्भूतास्तुरगा: प्रभोर्जयाय भवन्ति। **शेषेष्वपीति**। शेषेष्वन्येषु गजकरभादिषु वाहनेष्विदं शुभाशुभं फलं यथासम्भवं यत् सम्भवति; धूमाग्निकणाश्च न सम्भवन्ति, अन्यत् सम्भवति। तद्वद् बुध: पण्डित आदिशेत् कथयेत्।।१२।।

अथान्यदपि शुभचेष्टितमाह—

**आरोहति क्षितिपतौ विनयोपपन्नो**
**यात्रानुगोऽन्यतुरगं प्रतिह्रेषते च।**
**वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं**
**योऽश्व: स भर्तुरचिरात् प्रचिनोति लक्ष्मीम्॥१३॥**

राजा के चढ़ जाने पर जो घोड़ा विनय से युक्त होकर जिस दिशा में राजा को जाने की इच्छा हो, उसी दिशा में चले तथा अन्य घोड़े के शब्द करने पर शब्द करे या मुँह से अपने दक्षिण पार्श्व का स्पर्श करे तो शीघ्र ही स्वामी की लक्ष्मी की वृद्धि करता है।।१३।।

क्षितिपतौ राज्ञि राजनि वाऽऽरोहति उत्कषति योऽश्वस्तुरगो विनयोपपन्नो नीतिसंयुक्तो भवति, तथा यात्रानुगो यात्रादिगभिमुख:। यां दिशं गच्छति राजा तस्यामेव गच्छति। अन्यतुरगं प्रतिह्रेषते च। अन्यस्मिन् तुरगे ह्रेषिते शब्दं कुर्वति सति प्रतिह्रेषितं करोति। अथवा वक्त्रेण मुखेनात्मपार्श्वं दक्षिणं सव्यं स्पृशति, स भर्तु: प्रभोरचिराच्छीघ्रमेव लक्ष्मीं श्रियं प्रचिनोति वृद्धिं नयति।।१३।।

अथाशुभनिमित्तान्याह—

**मुहुर्मुहुर्मूत्रशकृत् करोति न ताड्यमानोऽप्यनुलोमयायी।**
**अकार्यभीतोऽश्रुविलोचनश्च शिवं न भर्तुस्तुरगोऽभिधत्ते॥१४॥**

जो घोड़ा बार-बार मल-मूत्र का त्याग करे, मारने पर भी अभीष्ट दिशा में न चले, विना कारण डरे और जिसके नेत्र अश्रुपूर्ण हो जायँ, वह अपने स्वामी का मंगल नहीं करता है।।१४।।

यस्तुरगोऽश्वो मुहुर्मुहु: प्रतिक्षणं मूत्रं शकृत् पुरीषं च करोति। ताड्यमानोऽपि कषादिभिर्नानुलोमयायी अनुलोमामभीष्टां दिशं न गमनशील:। अकार्यभीत:, अकार्यादनिमित्ताद् भीत:। महिषसूकरादिभिर्विना भयमाशङ्कते। अश्रुविलोचनोऽश्रुपरिपूर्णनयन:। स भर्तु: पत्यु: शिवं श्रेयो नाभिधत्ते न ददाति।।१४।।

**उक्तमिदं हयचेष्टितमत ऊर्ध्वं दन्तिनां प्रवक्ष्यामि।**
**तेषां तु दन्तकल्पनभङ्गम्लानादिचेष्टाभिः ॥१५॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां शाकुनेऽश्वेङ्गितं नाम त्रिनवतितमोऽध्यायः ॥९३॥**

यह घोड़ों की चेष्टायें कही गयी हैं। इसके बाद हाथियों की चेष्टायें कहता हूँ। उन हाथियों के दाँतों का काँपना, टूटना, मलिन होना आदि चेष्टाओं से फल होते हैं।।१५।।

**इति 'विमला'हिन्दीटीकायां शाकुनेऽश्वेङ्गिताध्यायस्त्रिनवतितमः ॥९३॥**

इदं हयानामश्वानां चेष्टितं कथितम्, अतोऽस्मादूर्ध्वमनन्तरं दन्तिनां गजानां सम्प्रवक्ष्यामि कथयिष्यामि। तेषां तु दन्तकल्पनेन दन्तभङ्गेनास्फोटनेन दन्तानां म्लानत्वेन वैकल्येन चेष्टया चेष्टितेन। आदिग्रहणादन्यैः पार्थिवोपकरणादिभिः फलानि भवन्ति।।१५।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुनेऽश्वेङ्गितं नाम त्रिनवतितमोऽध्यायः ॥९३॥**

## अथ हस्तिचेष्टिताध्यायः

अथ हस्तिचेष्टितं व्याख्यायते। तत्रादावेव दन्तकल्पनविधानमाह—

**दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेच्छेषम्।**
**अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित्॥१॥**

गजदन्त के मूल में जितनी अङ्गुलात्मक परिधि हो, उसको द्विगुणित करने पर जो प्राप्त हो तत्तुल्य मूल से परित्याग कर शेष भाग से समस्त कल्पनायें करनी चाहिये। जलप्राय देश के हाथियों में उससे कुछ अधिक और पर्वतचारी हाथियों में उससे कुछ कम भाग का परित्याग करना चाहिये।।१।।

मूले परिधिर्मूलपरिधिः। परिधिः पारिमण्डल्यम्। दन्तस्य रदस्य मूले यः परिधिः परिणाहस्तं द्विरायतं द्वौ वारौ द्विगुणमायतं दीर्घं प्रोह्य त्यक्त्वा शेषं कल्पयेत् छिन्द्यात्। एतदुक्तं भवति—दन्तमूलात् पारिमण्डल्येन सूत्रेण मित्वा तत् सूत्रं द्विगुणं कृत्वा यद्भवति तावत् प्रमाणं दन्तमूलाद् दैर्घ्यं त्यक्त्वा शेषं कल्पयेत्। **अधिकमनूपचराणामिति**। अनूपो बहूदको देशः। अनूपचराणां हस्तिनां दन्तमूलपरिधिं द्विरायताधिकं प्रोह्य शेषं कल्पयेत्। गिरिचराणां पर्वते सदैव ये चरन्ति तेषां न्यूनं किञ्चिद् दन्तमूलपरिधिं द्विरायतं प्रोह्य शेषं कल्पयेत्। उक्तं च—

दन्तमूलपरिणाहदीर्घतां द्विः प्रमुच्य परतोऽपि कल्पयेत्।। इति।।१।।

अथ परिकल्पितस्य दन्तस्य लक्षणमाह—

**श्रीवत्सवर्धमानच्छत्रध्वजचामरानुरूपेषु ।**
**छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥२॥**

काटने के समय हाथी के दाँत में बिल्ववृक्ष, वर्धमान, छत्र, ध्वज या चामर की तरह चिह्न दिखाई दे तो आरोग्य, धन की वृद्धि और सुख होता है।।२।।

श्रीवत्सो वर्धमानः। एतौ चिह्नविशेषौ। छत्रमातपत्रम्। ध्वजः प्रसिद्धः। चामरं वालव्यजनम्। एषामनुरूपेण सदृशेषु चिह्नेषु छेदे दृष्टेषु अवलोकितेष्वारोग्यमरोगित्वं विजयो धनवृद्धिः सौख्यमेतानि भवन्ति।।२।।

अन्यदप्याह—

**प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रनष्टदेशाप्तिः।**
**लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः॥३॥**

शस्त्र के समान चिह्न दिखाई दे तो जय, नदी के आवर्त्त ( जलभ्रम ) के समान

चिह्न दिखाई दे तो नष्ट देश की प्राप्ति और ढ़ेले के समान चिह्न दिखाई दे तो पूर्व में प्राप्त देश की प्राप्ति होती है।।३।।

प्रहरणं खड्गादि। प्रहरणसदृशेषु तदाकारेषु छेदे दृष्टेषु जयो भवति। नन्द्यावर्तश्चिह्न-विशेषः। नद्यावर्तसदृशच्छेदे दृष्टे प्रनष्टस्यापहृतस्य देशस्याप्तिर्लाभो भवति। लोष्टे लोष्ट-सदृशे तु मृत्खण्डाकृतौ लब्धपूर्वस्य देशस्य सम्प्राप्तिर्भवति। पूर्वं लब्धो लब्धपूर्वः। नाम-मात्रेण लब्धो न हस्तीभूतस्तस्य सम्प्राप्तिर्लाभो भवति।।३।।

अन्यदप्याह—

**स्त्रीरूपेऽश्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः ।**
**कुम्भेन निधिप्राप्तिर्यात्राविघ्नश्च दण्डेन ।।४।।**

स्त्री के समान चिह्न दिखाई दे तो धन का नाश, भृङ्गार के समान चिह्न दिखाई दे तो पुत्र की उत्पत्ति, घड़े के समान चिह्न दिखाई दे तो निधि की प्राप्ति और दण्ड के समान चिह्न दिखाई दे तो यात्रा में विघ्न होता है।।४।।

स्त्रीरूपे योषिदाकृतौ छेदे दृष्टेऽश्वानां तुरगाणां विनाशः क्षयो भवति। भृङ्गारो वार्धानी। भृङ्गाराकृतावभ्युत्थिते उत्पन्ने सुतस्य पुत्रस्योत्पत्तिः सम्भवो भवति। कुम्भेन घटसदृशेन निधिप्राप्तिर्निधिलाभो भवति। दण्डेन दण्डाकारेण यात्राविघ्नो गमननिषेधो भवति।।४।।

अन्यदप्याह—

**कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् ।**
**गृध्रोलूकध्वांक्षश्येनाकारेषु जनमरकः ।।५।।**

गिरगिट, छिपकली, वानर या सर्प की तरह चिह्न हो तो दुर्भिक्ष, व्याधि और शत्रु के अधिकार में रहना होता है तथा गिद्ध, उल्लू, काक या बाज के समान चिह्न हो तो मरकी होती है।।५।।

कृकलासः प्राणिविशेषः। कपिर्वानरः। भुजङ्गः सर्पः। एतेषु छेदे दृष्टेषु असुभिक्षं व्याधयः पीडा रिपुवशित्वं शत्रूणां विधेयत्वमिति। गृध्रः, उलूकः। एतौ प्रसिद्धौ पक्षिणौ। ध्वांक्षः काकः। श्येनो वाजिकः। एषामाकारेषु सदृशेषु छेदे दृष्टेषु जनमरको जनानां मरको भवति।।५।।

अन्यदप्याह—

**पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते ।**
**कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ।।६।।**

पाश ( फाँसी ) या कबन्ध ( विना शिर का पुरुष ) के समान चिह्न हो तो राजा की मृत्यु, काटने पर रक्त निकले तो मनुष्यों के ऊपर विपत्ति तथा काला, पीला, रूखा या दुर्गन्धि हो तो अशुभ होता है।।६।।

पाशः सर्पाकारः। कबन्धो विच्छिन्नशिराः पुरुषः। तत्सदृशे छेदे दृष्टे नृपमृत्युर्नृपस्य राज्ञो मृत्युर्मरणं भवति। रक्ते शोणिते स्रुते जनानां विपदापदो भवन्ति। कृष्णे कृष्णवर्णे। श्यावे मलिने। रूक्षे अस्निग्धे। दुर्गन्धे दुष्टगन्धे। छेदे दृष्टे अशुभमनिष्टं भवति। उक्तं च—

श्यावपूतिमलरक्तदर्शनं सर्पसत्त्वसदृशं च पापदम्।। इति।।६।।

अथ शुभच्छेदलक्षणमाह—

**शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः।**
**गलनम्लानफलानि च दन्तस्य समानि भङ्गेन ।।७।।**

यदि दाँत का छेद सफेद, समान, सुगन्धि या निर्मल हो तो शुभ होता है। ये सब आसन के फल हैं। इसी तरह पूर्वोक्त सब लक्षण शय्या में भी फल देते हैं।।७।।

शुक्लः। समः सर्वभागेषु तुल्यः। सुगन्धिः शोभनगन्धिः। स्निग्धः सस्नेहः। एवंविधश्छेदः शुभावहः शुभं करोति। उक्तं च—

पार्थिवोपकरणोपमं यदा चिह्नमुद्वहति कल्पिते रदे।
श्रीजयार्थबलवृद्धयस्तदा स्निग्धशुक्लरुचिराश्च शोभनाः।।

**गलनम्लानफलानीति**। गलनं स्थानस्यैव विशरणं स्रावो वा। म्लानं म्लानता वैवर्ण्यम्। एतेषां यानि फलानि तानि दन्तस्य भङ्गेन स्फोटनेन समानि। यादृशं दन्तभङ्गफलं वक्ष्यमाणं तादृशमपि गलनम्लानफलम्।।७।।

अन्यच्छुभाशुभमाह—

**मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात् ततः।**
**स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ।।८।।**

हाथी के दाँत के मूल, मध्य और अग्रभाग में क्रम से देवता, दैत्य और मनुष्य निवास करते हैं। जैसे दन्तमूल में देवता, मध्य में दैत्य और दन्ताग्र में मनुष्य निवास करते हैं। साथ ही मूल में वक्ष्यमाण में फल पुष्ट, मध्य में मध्यम और अग्र में अल्प होता है; इसी तरह मूल में वक्ष्यमाण फल शीघ्र ( सप्ताह के मध्य में ), मध्य में मध्यकाल में ( एक मास के अन्दर ) और प्रान्त में देर से होता है।।८।।

यथाक्रमं गजस्य दन्तमूले दन्तमध्ये दन्ताग्रे च देवदैत्यमनुजाः क्रमात् स्थिताः। तद्यथा—दन्तमूले देवा व्यवस्थिताः। दन्तमध्ये दैत्याः। दन्ताग्रे मनुजा देवविशेषाः। ततस्तस्माद् भागत्रयात् स्फीतमध्यपरिपेलवं फलं भवति। तत्र मूले वक्ष्यमाणं फलं स्फीतं परिपुष्टं भवति। मध्ये मध्यमं नात्यल्पं नातिबहु। प्रान्ते परिपेलवं स्वल्पम्। तथा शीघ्रमध्यचिरकालसम्भवम्। मूले वक्ष्यमाणं फलं शीघ्रकालेन सप्ताहमध्ये सम्भवति। मध्ये मध्यमेन कालेन मासान्तः। प्रान्ते चिरकालेन मासान्ते सम्भवतीत्यागमविधिः।।८।।

अत्रैव पुनरपि विशेषमाह—

**दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम्।**
**वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान्॥९॥**

यदि दक्षिण भाग का दाँत मूल से टूट जाय तो राजा को भागने का भय, मध्य से टूट जाय तो देश को भागने का भय और अग्र भाग से टूट जाय तो सेना को भागने का भय रहता है। यदि वाम भाग का दाँत मूल आदि से टूट जाय तो क्रम से राजपुत्र, पुरोहित, साधनपति तथा सेना, स्त्री और प्रधान पुरुष को मारता है॥९॥

अत्रास्मिन् भागत्रये दन्तभङ्गफलम्। दक्षिणे मूलाद् भग्ने भूपस्य राज्ञो विद्रवप्रदं विद्रवं पलायनभयं ददाति। मध्याद् भग्ने देशस्य जनपदस्य विद्रवप्रदम्। प्रान्तभग्ने बलस्य सेनाया विद्रवप्रदम्। **वामतः सुतपुरोहितेभयानिति**। वामतो वामे रदे मूलाद्भग्ने सुतं राजपुत्रं हन्ति। मध्याद्भग्ने पुरोहितमाचार्यं हन्ति। अग्रे इभयान् साधनपतीन् हन्ति। तथा साटविकदारनायकान् क्रमेण। वामदन्ते मूलाद्भग्ने साटविकं बलं हन्ति। मध्याद्भग्ने दाराः कलत्रम्। अग्राद्भग्ने नायकान् प्रधानपुरुषान् हन्ति। गलनम्लानफलान्येवमेव ज्ञातव्यानि॥९॥

पुनरप्यत्र विशेषफलमाह—

**आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम्।**
**सौम्यलग्नतिथिभादिभिः शुभं वर्धतेऽशुभमतोऽन्यथा वदेत्॥१०॥**

यदि हाथी के दोनों दाँत टूट जायँ तो राजा के सम्पूर्ण कुल का क्षय होता है। शुभ ग्रह के लग्न ( वृष, मिथुन, कर्क, कन्या, तुला, धनु और मीन ), शुभ तिथि ( रिक्तावर्जित तिथि ), शुभ नक्षत्र ( दारुण उग्र नक्षत्र को छोड़कर शेष नक्षत्र ) आदि में उत्पन्न हाथी हो तो शुभ फलों की वृद्धि होती है और इससे विपरीत समय में उत्पन्न हो तो पाप फलों की वृद्धि होती है॥१०॥

उभयोर्दन्तयोर्द्वयोर्भङ्गदर्शनात्। भङ्गः स्फोटनं यदि दृश्यते तदा पार्थिवस्य राज्ञः सकलं निःशेषं कुलक्षयं वंशविनाशमादिशेद् वदेत्। निःशेषं नृपकुलं विनश्यति। गलनम्लान-फलान्येवमेव। सौम्यलग्नतिथिभादिभिः शुभं वर्धते। सौम्यस्य शुभग्रहस्य लग्नेन सौम्यग्रहाणां लग्नानि वृषमिथुनकर्कटकन्यातुलधन्विमीनाः। येषां शुक्रबुधाक्षीणेन्दुजीवा अधिपतयः। एवं सौम्यलग्नेन सौम्यतिथिना रिक्तावर्जितः सौम्यस्तिथिः। नन्दाभद्राविजयापूर्णाः सौम्या-स्तिथयः। सौम्यं भं नक्षत्रं दारुणोग्रवर्जम्। आदिग्रहणात् सौम्यदर्शनेन लग्नस्य सौम्यसंस्थित्या वा सन्नामदर्शनादिना पूर्णं शुभं चिह्नं शुभेनोत्पन्नं वर्धते वृद्धिं याति। अशुभमतोऽन्यथा वदेत्। अतोऽस्मादुक्तादन्यथा पापलग्नेन पापसंस्थित्या पापदर्शनेन सदोषतिथिना नक्षत्रेण चाधिकमशुभं पापचिह्नं वर्धते वृद्धिं याति। व्यामिश्रेण व्यामिश्रम्। अशुभेन लग्नादिना वाऽशुभं चिह्नं शुभेन वा शुभं यत्र तत्र व्यामिश्रं वा फलमूह्यमिति॥१०॥

अधुना दन्तभङ्गस्य विशेषफलमाह—

**क्षीरमृष्टफलपुष्पपादपेष्वापगातटविघट्टितेन वा ।**
**वाममध्यरदभङ्गखण्डने शत्रुनाशकृदतोऽन्यथा परम् ।।११।।**

यदि वाम भाग का दाँत दूध वाले, मधुर फल वाले या फूल वाले वृक्षों के घर्षण या नदी के तट को विघट्टित करने पर मध्य से टूट जाय तो शत्रुनाश करता है। इसके विपरीत (दुष्ट वृक्षों के घर्षण से वाम दन्त का अग्र या मूल टूट जाय) तो शत्रु की वृद्धि करता है।।११।।

अत्र वामस्यापसव्यस्य रदस्य दन्तस्य मध्याद्भङ्गः स्फोटनं खण्डनं भेदनं वा यदि क्षीरवृक्षस्यार्कादेर्घट्टितेन चालनेन भवति। मृष्टफलपादपस्य मधुरफलवृक्षस्य वा चालनेन भवति। पुष्पपादपस्य कुसुमवृक्षस्य वा चालनेनोत्पद्यते, तदा शत्रुनाशकृच्छत्रुनाशं करोति। आपगातटविघट्टितेन वा आपो गच्छन्ति यासु ता आपगा नद्यस्तासां तटविघट्टितेन तीर-चालनेन चोत्पद्यते; तथापि शत्रुनाशं करोति। अतोऽन्यथा परम्, अतोऽस्मादुक्तप्रकाराद् अन्यथा दुष्टवृक्षादिघट्टितेन वामस्य दन्तस्य मूले वाग्रे यो भङ्गः खण्डनं वा तदा शत्रुवृद्धि-कृदित्यर्थः। दक्षिणस्य मूलमध्याग्रेष्वपि भङ्गदर्शनाच्छत्रुवृद्धिकृदिति।।११।।

अधुना गजेङ्गितमाह—

**स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः**
**श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।**
**द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो**
**भयकृदहितभक्षी नैकशोऽसृक्शकृत्कृत् ।।१२।।**

चलते हुए हाथी की गति अचानक रुक जाय, कान हिलना बन्द हो जाय, अत्यन्त दीनतापूर्वक सूँड को भूमि पर रखकर धीरे-धीरे लम्बी-लम्बी सांस लेकर चकित और अर्धोन्मिलित दृष्टि हो जाय, बहुत देर तक शयन, उलटा चलने लगे, अभक्ष्य वस्तु का भक्षण करे तथा बहुत बार रक्तमिश्रित मलत्याग करे तो भय देने वाला होता है।।१२।।

**स्खलितगतिरकस्मादिति ।** अकस्माद्विना निमित्तं स्खलितगतिः, स्खलिता गतिर्यस्य सः। अकस्मात् त्रस्तकर्णो वित्रस्तश्रोत्रः। अतिदीनोऽतीव दैन्यं गतः। **श्वसिति मृदु सुदीर्घमिति ।** पृथिव्यां भूमौ न्यस्तहस्तो विन्यस्तकरो मृदु कृत्वा सुदीर्घं चिरकालं श्वसिति श्वासं विमुञ्चति। द्रुतमुकुलितदृष्टिः, द्रुता चकिता मुकुलिताऽर्द्धोन्मीलिता वा दृष्टिश्चक्षुषी यस्य सः। स्वप्नशीलो बहुकालं स्वपिति। विलोमो विपरीतगतिः। यत्र प्रेर्यते तत्र न याति। एवंविधो भयकृद्भयं करोति। तथाहितभक्षी, अहितमनिष्टं भक्षयति। अपथ्याशी। नैकशो-ऽसृक्शकृत्कृत्। नैकशो बहून् वारानसृग्रक्तं शकृत् पुरीषं करोति, तदाऽपि भयकृत्।।१२।।

अधुना शुभचेष्टितमाह—

**वल्मीकस्थाणुगुल्मक्षुपतरुमथनस्वेच्छया हृष्टदृष्टि-**
**र्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः ।**

**कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा**
**तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणं च ॥१३॥**

यदि हाथी अपनी इच्छा से वल्मीक, स्थाणु ( शाखारहित वृक्ष ), गुल्म, घास या अन्य किसी वृक्ष को मथन करते-करते हर्षित दृष्टि और ऊँचा मुख करके शीघ्र गति से यात्रा के अनुकूल चले तथा हौदा कसने के समय जलबिन्दु उड़ावे, गर्जन करे, मदयुक्त हो जाय या सूँड़ से दाहिने दाँत को लपेटे तो जय देने वाला होता है।।१३।।

**वल्मीकस्थाणुगुल्मेति**। एवंविधो गजो जयकृत्, राज्ञो जयं करोति। यदि वल्मीककृतं मृत्स्तूपं मथ्नाति। स्थाणुर्निःशेषशाखाच्छिन्नो वृक्षः शुष्कवृक्षो वा। गुल्म एकमूलः शाखासमूहः। क्षुपं शष्पम्। तरुर्वृक्षः। एतेषामन्यतमं यदि स्वेच्छया आत्मेच्छया मथ्नाति। तथा हृष्टदृष्टिः, हृष्टा दृष्टिर्यस्य सः। **यायाद्यात्रानुलोममिति**। त्वरितपदगतिः शीघ्रगामी वक्त्रं मुखमुच्चैरुन्नाम्योत्क्षिप्य यात्रानुलोमं यात्रादिशं यायाद् गच्छेत्। तथा कक्ष्यासन्नाहकाले मध्यबन्धनप्रतिवेलायां जनयत्युत्पादयति मुहुर्मुहुः पुनः पुनः शीकरं वक्त्रोदककणान् मुञ्चति। बृंहितं घनगर्जितं वा करोति। तत्काले वा मदाप्तिर्मदप्रादुर्भावः। तथा रदं दन्तं दक्षिणं वेष्टयन् करेणालम्बयन् इति।।१३।।

अन्यदपि चेष्टितमाह—

**प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य।**
**ग्राहं गृहीत्वोत्तरणं नृपस्य तोयात् स्थलं वृत्तिकरं नृभर्तुः ॥१४॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां शाकुने हस्तिचेष्टितं**
**नाम चतुर्नवतितमोऽध्यायः ॥९४॥**

यदि हाथी को पकड़ कर ग्राह जल में प्रवेश कर जाय तो राजा का नाश और ग्राह को पकड़ कर हाथी जल से बाहर निकल जाय तो राजा की वृद्धि करता है।।१४।।

**इति 'विमला' हिन्दीटीकायां शाकुने हस्तिचेष्टिताध्यायश्चतुर्नवतितमः ॥९४॥**

वारणस्य गजस्य ग्राहेण जलप्राणिना वारिणि जलमध्ये प्रवेशनं नृपस्य राज्ञो नाशाय भवेत् स्यात्। तथा द्विपस्य हस्तिनो ग्राहं जलप्राणिनं नीत्वाऽऽक्रम्य तोयाद् जलात् स्थल उत्तरणं नृभर्तृ राज्ञो वृद्धिकरं भवतीति।।१४।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने हस्तिचेष्टितं**
**नाम चतुर्नवतितमोऽध्यायः ॥९४॥**

## अथ वायसविरुताध्याय:

अथ वायसविरुतं व्याख्यायते। तत्रादावेव प्रविभागप्रदर्शनार्थमाह—

**प्राच्यानां दक्षिणतः शुभदाः काकाः करायिका वामाः।**
**विपरीतमन्यदेशेष्ववधिर्लोकप्रसिद्ध्यैव ॥१॥**

पूर्व देशवासियों के दक्षिण भाग में कौआ और वाम भाग में करायिका तथा अन्य देशवासियों के वाम भाग में कौआ और दक्षिण भाग में करायिका शुभ होती है। लोक-प्रसिद्धि से पूर्व आदि देशों को जानना चाहिये।।१।।

प्राच्यां पूर्वस्यां दिशि भवाः प्राच्याः। तेषां प्राच्यानां दक्षिणतो दक्षिणभागे काका वायसाः शुभदाः। करायिकाः कूटपूर्यः। वामा वामभागस्थास्तेषामेव शुभदाः। अन्यदेशेषु प्राग्देशवर्जितेषु विपरीतं विपर्यस्तम्। काको वामः करायिका दक्षिणेति देशे प्रविभागमाह— **अवधिर्लोकप्रसिद्ध्यैव**। अवधिः परिच्छित्तिः सा च लोकप्रसिद्ध्यैव लोकप्रसिद्ध्या लोकतो विज्ञेया। यथा इमे जनाः प्राच्याः, इमे दक्षिणाः, इमे पश्चिमाः, इम उत्तरा इति। आचार्येणापि कूर्मप्रविभागे प्रदर्शिता इति।।१।।

अथ चेष्टितमाह—

**वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता।**
**निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे ॥२॥**

यदि कौआ वैशाख मास में उपद्रवरहित वृक्ष के ऊपर घोंसला बनावे तो सुभिक्ष और मंगल करने वाला होता है तथा निन्दित, काँटेदार या सूखे हुये वृक्ष पर घोंसला बनावे तो उस देश में दुर्भिक्ष का भय होता है।।२।।

वैशाखे वैशाखमासे निरुपहते निरुपद्रवे वृक्षे तरौ नीड आलयः सुभिक्षशिवदाता भवति। सुभिक्षं श्रेयश्च ददाति। निन्दिते कुत्सिते। कण्टकिनि सकण्टके। शुष्के नीरसे वृक्षे। यस्मिन् देशे एतेषु नीडं करोति। तद्देशे असुभिक्षभयानि भवन्ति।।२।।

अथ नीडवशेन फलमाह—

**नीडे प्राक्शाखायां शरदि भवेत्प्रथमवृष्टिरपरस्याम्।**
**याम्योत्तरयोर्मध्यात् प्रधानवृष्टिस्तरोरुपरि ॥३॥**

**शिखिदिशि मण्डलवृष्टिर्नैर्ऋत्यां शारदस्य निष्पत्तिः।**
**परिशेषयोः सुभिक्षं मूषकसम्पच्च वायव्ये ॥४॥**

यदि कौआ शरत्काल में वृक्ष के पूर्व दिशा में स्थित शाखा पर घोंसला बनावे तो

पश्चिम दिशा में पहले वर्षा होती है तथा दक्षिण या उत्तर दिशा में घोंसला बनावे तो प्रधान वृष्टि होती है। अग्निकोण में घोंसला बनावे तो मण्डल वृष्टि ( कहीं पर वृष्टि और कहीं पर अवृष्टि ) होती है। नैर्ऋत्य कोण में घोंसला बनावे तो शारदीय धान्यों की अच्छी निष्पत्ति होती है। परिशेष ( वायव्य और ईशान ) कोण में घोंसला बनावे तो सुभिक्ष और वायव्य कोण में घोंसला होने से अधिक चूहे भी होते हैं।।३-४।।

**नीडे प्राक्शाखायामिति** । नीडे आलये तरौ वृक्षे प्राक्शाखायां पूर्वस्यां दिशि शाखायां कृते शरदि शरत्काले। आश्वयुजकार्तिकयोर्वृष्टिर्वर्षणं भवेत्। अपरस्यां पश्चिमायां दिशि स्थिते नीडे प्रथमवृष्टिर्वर्षासु श्रावणभाद्रपदयोर्वृष्टिर्भवति। याम्योत्तरयोर्दक्षिणसौम्ययोर्दिशि स्थिते नीडे मध्याद् भाद्रपदाश्वयुजयोर्वृष्टिर्भवति। तरोर्वृक्षस्योपरि प्रधानशाखायां दिशि स्थिते नीडे प्रधाना श्रेष्ठा चतुर्ष्वपि मासेषु श्रावणादिषु वृष्टिर्भवति।

**शिखिदिशीति** । शिखिदिशि आग्नेयदिशि स्थिते नीडे मण्डलवृष्टिर्भवति। क्वचिद्वृष्टिः क्वचिदवृष्टिः। नैर्ऋत्यां दिशि स्थिते नीडे शरदस्य सस्यस्य निष्पत्तिर्भवति। परिशेषयोर्वायव्यैशान्योः स्थिते नीडे सुभिक्षं भवति। वायव्ये कोणे मूषकानां सम्पद् बाहुल्यं भवति।

अथान्यच्चेष्टितमाह—

**शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु ।**
**शून्यो भवति स देशश्चौरानावृष्टिरोगार्तः ।।५।।**

जिस देश में कौआ शरकण्डा, कुशा, गुल्म, लता, धान्य, प्रासाद, गृह और निम्न स्थान में घोंसले का निर्माण करे, वह देश चोर, अनावृष्टि और रोग से पीड़ित होकर शून्य हो जाता है।।५।।

शरः प्रसिद्धः। दर्भः प्रसिद्ध एव। गुल्म एकमूलः शाखासमूहः। वल्ली प्रसिद्धा। धान्यं प्रसिद्धम्। प्रासादो देवप्रासादः। गेहं वेश्म। निम्नं श्वभ्रम्। एतेषु स्थानेषु यत्र काकस्य नीडो भवति स देशः शून्यो भवति। स देशश्चौरानावृष्टिरोगार्तः, चौरैस्तस्करैरनावृष्ट्या अवर्षणेन रोगैर्गदैश्चार्तः पीडितो भवति। उक्तं च यात्रायाम्—

शस्तो नीडस्तु वैशाखे पादपे निरुपद्रवे।
देशोत्थानं तु वल्मीकचैत्यधान्यगृहादिषु।। इति।।५।।

अन्यच्चेष्टितमाह—

**द्वित्रिचतुःशावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम् ।**
**अण्डावकिरणमेकाण्डताप्रसूतिश्च न शिवाय ।।६।।**

यदि कौए के दो, तीन या चार बच्चे हों तो सुभिक्ष, पाँच बच्चे हों तो दूसरे राजा का अधिकार तथा यदि उसका अण्डा ही गिर जाय अथवा एक ही अण्डा दे या दे ही नहीं तो अमंगल होता है।।६।।

शावः शिशुः। अपत्यमित्यर्थः। द्वित्रिचतुःशावत्वं द्वयोस्त्रयाणां चतुर्णां वा शावकानां भावो द्वित्रिचतुःशावत्वम्। तच्च सुभिक्षदम्। पञ्चभिः शावैर्नृपान्यत्वमन्यस्य राज्यं करोति। द्वितीयो राजा भवतीत्यर्थः। अण्डावकिरणमण्डविक्षेपः। एकाण्डता एकाण्डभावः। अप्रसूतिश्च प्रसवाभावः। एते सर्व एव न शिवाय न श्रेयसे भवन्ति।।६।।

अथैतेषामेव विशेषमाह—

**चौरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैस्तु वह्निभयम्।**
**विकलैर्दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः ।।७।।**

यदि कौए के बच्चे का वर्ण गन्धद्रव्य के समान हो तो चोरों की उत्पत्ति, चित्र-वर्णवत् हो तो मृत्यु, सफेद वर्ण हो तो अग्नि का भय और किसी अंग हीन से हो तो दुर्भिक्ष का भय होता है।।७।।

चौरकं गन्धद्रव्यम्। तद्वर्णैः शिशुभिश्चौरास्तस्करा भवन्ति। चित्रैश्चित्रवर्णैर्नानाकारैर्मृत्यु-र्भवति। सितैः शुक्लैस्तु वह्निभयमग्निभयम्। विकलैर्दुर्भिक्षभयम्। विकलैरङ्गहीनैः काकानां ध्वांक्षाणां शिशुभिर्बालैर्दुर्भिक्षभयं निर्दिशेद् वदेत्। उक्तं च—

काकानां स्रवणे द्वित्रिचतुःशावाः शुभावहाः।
चोरचित्रकश्वेताश्च वर्णाश्चौराग्निमृत्युदाः।।
अण्डावकिरणैर्ध्वांक्ष्या दुर्भिक्षमरकावुभौ।
शावानां विकलत्वे वा निःशावत्वे कृतौ तथा।। इति।।७।।

अन्यदप्याह—

**अनिमित्तसंहतैर्ग्राममध्यगैः क्षुद्भयं प्रविरुवद्भिः।**
**रोधश्चक्राकारैरभिघातो वर्गवर्गस्थैः ।।८।।**

यदि कौवे विना कारण गाँव के बीच में एकत्र होकर बहुत शब्द करें तो दुर्भिक्ष का भय, चक्र की तरह इकट्ठे होकर स्थित हों तो नगर का रोध और वर्ग-वर्ग करके स्थित हों तो उपद्रव होता है।।८।।

अनिमित्तमकारणं संहतैः समेतैर्ग्राममध्यगैर्ग्राममध्यस्थितैर्वायसैः प्रविरुवद्भिर्वाशितैः क्षुद्भयं दुर्भिक्षभयं भवति। चक्राकारैश्चक्रवत्पारिमाण्डल्येन स्थितै रोधः पुररोधो भवति। वर्गवर्गस्थैरकारणसमेतैर्बहुभिः समूहैः स्थितैरभिघात उपद्रवो भवति। उक्तं च—

अकार्यसंहतैर्भेदो रोधश्चक्राकृतिस्थितैः।
वर्गगैश्चाभिघातः स्याद्रिपुवृद्धिश्च निर्भयैः।। इति।।८।।

अन्यदप्याह—

**अभयाश्च तुण्डपक्षश्चरणविघातैर्जनानभिभवन्तः।**
**कुर्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम् ।।९।।**

यदि कौवे भयरहित होकर चोंच, पंख और पञ्जों से मनुष्यों को मारें तो शत्रुवृद्धि तथा रात्रि में विचरण करें तो जन की क्षति होती है।।९।।

अभया भयरहिता:। तुण्डैश्चञ्च्वग्रै:। पक्षैरङ्गरुहै:। चरणविघातै: पादप्रहारै:। जनान् लोकानभिभवन्त: पराभवन्त: शत्रुवृद्धिं रिपुवृद्धिं कुर्वन्ति। निशि रात्रौ विचरन्तो जनानां लोकानां विनाशं कुर्वन्ति।।९।।

अन्यदप्याह—

**सव्येन खे भ्रमद्भि: स्वभयं विपरीतमण्डलैश्च परात्।**
**अत्याकुलं भ्रमद्भिर्वातोद्भ्रामो भवति काकै: ।।१०।।**

यदि कौवे आकाश में प्रदक्षिणक्रम से भ्रमण करें तो आत्मीय जनों से और अपसव्य क्रम से भ्रमण करें तो शत्रुओं से भय होता है तथा अति आकुलता के साथ भ्रमण करें तो देखने वाले की अनवस्थिति होती है।।१०।।

सव्येन प्रादक्षिण्येन खे आकाशे भ्रमद्भि: काकैर्वायसै: पूर्वदक्षिणपश्चिमोत्तरा इत्यनेन क्रमेण भ्रमद्भि: स्वेभ्य आत्मीयेभ्यो भयं भवति। विपरीतमण्डलै: पूर्वोत्तरपश्चिमदक्षिणा इत्यनेन क्रमेण भ्रमद्भि: पराच्छत्रोर्भयं भवति। अत्याकुलं सोद्यमं भ्रमद्भि: काकैर्वातोद्भ्रामो भवत्यनवस्थितिरित्यर्थ:। उक्तं च—

पुरसैन्योपरि व्योम्नि व्याकुलैरनिलाद्भयम्।
सव्यमण्डलगै: स्वोत्थमपसव्यै: पराद्भयम्।। इति।।१०।।

अन्यदप्याह—

**ऊर्ध्वमुखाश्चलपक्षा: पथि भयदा: क्षुद्भयाय धान्यमुष:।**
**सेनाङ्गस्था युद्धं परिमोषं चान्यभृतपक्षा: ।।११।।**

यदि कौवे ऊपर को मुँह उठाकर पंखों को चलावें तो मार्ग में भय, धान्यों को चुरावें तो दुर्भिक्ष का भय, सेना के अंगों पर बैठ जायँ तो युद्ध और कोयल के समान अति काले पंख कौवे के हों तो चोर का भय होता है।।११।।

ऊर्ध्वमुखा ऊर्ध्ववदना:। चलपक्षा: चलिताङ्गरुहा:। पथि भयदा:, अध्वनि भयं ददति। धान्यमुषो धान्यं चोरयन्त: क्षुद्भयाय दुर्भिक्षाय भवन्ति। सेनाङ्गानि पर्याणखलीनप्रभृतीनि तेषु स्थिता युद्धं संग्रामं सूचयन्ति। अन्यभृत: कोकिल:। अन्यभृतस्येव पक्षो येषामतिकृष्णपक्षास्ते परिमोषं चौरभयं कुर्वन्ति। उक्तं च—

युद्धं सेनाङ्गसंस्थेषु मोषकृत् स्वविलेखने।
चरन्निशि विनाशाय दुर्भिक्षं चान्नमोषकृत्।। इति।।११।।

अन्यदप्याह—

**भस्मास्थिकेशपत्राणि विन्यसन् पतिवधाय शय्यायाम्।**
**मणिकुसुमाद्यवहनने सुतस्य जन्माप्यथाङ्गनायाश्च ।।१२।।**

यदि कौवे शय्या के ऊपर भस्म, हड्डी, केश और पत्ते डालें तो शय्या के स्वामी का वध; मणि, फूल और फल डालें तो पुत्रजन्म तथा तृण, काष्ठ आदि डालें तो कन्या का जन्म होता है।।१२।।

शय्यायामास्तरणे। भस्म। अस्थि। केशा मूर्धजा:। पत्रं पर्णम्। एतानि विन्यसन् विक्षिपन् पतिवधाय भवन्ति। शय्याया य: पति: स्वामी तस्य। उक्तं च—

तृणभस्मास्थिकेशाश्च शयने स्वामिमृत्युदा:।

**मणिकुसुमाद्यवहनन इति**। मणिना रत्नेन। कुसुमेन पुष्पेण। आदिग्रहणात् फलेन। यदि शय्यायामवहननं ताडनं करोति, तदा सुतस्य पुत्रस्य जन्म भवति। अन्यथाऽनेन प्रकारेण मणिकुसुमानि वर्जयित्वा तृणकाष्ठादिनाऽवहननं करोति तदाङ्गनाया: स्त्रिया जन्म भवति।।१२।।

अन्यदप्याह—

**पूर्णाननेऽर्थलाभ: सिकताधान्यार्द्रमृत्कुसुमपूर्वै:।**
**भयदो जनसंवासाद्यदि भाण्डान्यपनयेत् काक: ।।१३।।**

यदि कौवे रेत, धान्य, गिली मिट्टी, पुष्प या फल मुँह में भर कर अपने स्थान पर आवें तो धन का लाभ होता है तथा जल के समीप से कुछ बर्तन लेकर जायँ तो भय देते हैं।।१३।।

सिकता वालुका। धान्यं प्रसिद्धम्। आर्द्रमृत् सरसा मृत्तिका। कुसुमं पुष्पम्। पूर्वग्रहणात् फलं शाद्वलं च। एतै: पूर्णानने परिपूरितवदने काकेऽर्थलाभो भवति। तथा काको जनसंवासाद् जननिकटाद्यदि भाण्डान्यपनयेदपनयति तदा भयदो भयं ददाति।।१३।।

अन्यदप्याह—

**वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम्।**
**तत्पूजायां पूजा विष्ठाकरणेऽन्नसम्प्राप्ति: ।।१४।।**

जिसके वाहन, शस्त्र, जूते और छत्र की छाया को कौआ कूटे उसका मरण, उन वाहन आदि की फूल आदि से पूजा करे तो उसकी पूजा और उन पर वीट करे तो उसको भोजन का लाभ होता है।।१४।।

वाहनं यानम्। शस्त्रं खड्गादि। उपानत् प्रसिद्धा। छत्रच्छाया आतपत्रच्छाया। अङ्गं शरीरम्। एषां कुट्टने ताडने मरणं भवति। तत्पूजायां तेषामेव वाहनादीनां पूजायां पुष्पादिपूजनेन पूजा भवति। एषामेव विष्ठाकरणे पुरीषकरणे अन्नसम्प्राप्तिर्भोजनलाभो भवति। उक्तं च—

उपानच्छस्त्रयानाङ्गच्छत्रच्छायावकुट्टने।
मृत्युं तत्स्वामिनो ब्रूयात् पूजा स्यात्तत्रपूजने।। इति।।१४।।

अन्यदप्याह—

**यद्द्रव्यमुपनयेत्तस्य लब्धिरपहरति चेत् प्रणाशः स्यात्।**
**पीतद्रव्यैः कनकं वस्त्रं कार्पासिकैः सितै रूप्यम्॥१५॥**

कौआ जो कहीं से उठा कर ले आवे, उसका लाभ और जो ले जाय उसका नाश होता है। पीले द्रव्य से सोना, कपाससम्बन्धी वस्तु से वस्त्र और सफेद वस्तु से रजत का लाभ या नाश होता है।।१५।।

काको यद्द्रव्यमुपनयेत् समीपे आनयेत् तस्य द्रव्यस्य लब्धिर्भवति। चेद्यदि यद्-द्रव्यमपहरति तदा तद्द्रव्यस्य प्रणाशो नाशो भवति। पीतद्रव्यैः कनकं सुवर्णं लभ्यते, अपहृते तदेव नश्यति। एवं सर्वत्र। कार्पासिकैर्वस्त्रमम्बरम्। सितैः श्वेतवर्णै रूप्यम्। उक्तं च—

हरेदुपनयेद् वापि यद्द्रव्यं वायसोऽग्रतः।
तन्नाशलब्धौ विज्ञेयौ हेमे पीते विनिर्दिशेत्।। इति।।१५।।

अन्यदप्याह—

**सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च।**
**प्रावृषि वृष्टिं दुर्दिनमनृतौ स्नाताश्च पांशुजलैः॥१६॥**

दूध वाले वृक्ष, अर्जुन वृक्ष, वञ्जुल वृक्ष या नदी के दोनों तट पर स्थित होकर कौए शब्द करें या धूली अथवा जल से स्नान करें तो वर्षाकाल में वृष्टि तथा अन्य ऋतु में दुर्भिक्ष करता है।।१६।।

सह क्षीरेण वर्तते यो वृक्षः स सक्षीरः, अर्जुनः। वञ्जुलः, एतौ वृक्षविशेषौ। एतेषु तथा कूलद्वयपुलिनगा नद्याः कूलद्वये यौ पुलिनौ तयोर्गताः। रुवन्तश्च वाशमानाः। प्रावृषि वर्षासु वृष्टिं कुर्वन्ति। अनृतावन्यस्मिन् ऋतौ वर्षावर्जिते दुर्दिनं दुष्टं दिनं कुर्वन्ति। तथा पांशुभिर्जलैश्चाद्भिः स्नाताः प्रावृषि वृष्टिं कुर्वन्ति। अन्यस्मिन् ऋतौ दुर्दिनमेवेति।।१६।।

अन्यदप्याह—

**दारुणनादस्तरुकोटरोपगो वायसो महाभयदः।**
**सलिलमवलोक्य विरुवन् वृष्टिकरोऽब्दानुरावी च॥१७॥**

वृक्ष के कोटर में अवस्थित कौआ भयंकर शब्द करे तो महाभय देने वाला होता है एवं जल देखकर या मेघगर्जन के बाद शब्द करे तो वृष्टि करने वाला होता है।१७।

वायसः काकस्तरुकोटरे वृक्षगर्भे स्थितः। कीदृशः? दारुणनादो दारुणः क्रूरो नादः शब्दो यस्य स महाभयदो महद्भयं ददाति। सलिलं जलमवलोक्य दृष्ट्वा विरुवन् क्रोशन् वृष्टिकरः। अब्दस्य मेघस्यानुरावी पश्चाद्रौति तदा वृष्टिकर् एव।।१७।।

अन्यदप्याह—

**दीप्तोद्विग्नो विटपे विकुट्टयन् वह्निकृद्विधुतपक्षः ।**
**रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत् ॥१८॥**

लता के वितान में सूर्याभिमुख और दुःखी होकर चञ्चु से अपने शरीर को कूटे, पंख को चलावे तथा लाल द्रव्य या दुग्ध, तृण अथवा काष्ठ को घर में ले आवे तो अग्निभय करता है।।१८।।

विटपे लताविताने दीप्तोद्विग्नो दीप्तः सूर्याभिमुख उद्विग्नो दुःखितो विकुट्टयन् चञ्च्वा भिन्दन्। विधुतपक्षः चलत्पक्षः। वह्निकृदग्निभयं करोति। गृहे वेशमनि रक्तद्रव्यं रक्तवर्णद्रव्यं दग्धं तृणं काष्ठं वा विदधत् कुर्वद्वह्निकृदेव। उक्तं च—

रक्तद्रव्यं प्रदग्धं च धान्यं गेहेऽग्निदः स्मृतः।। इति।।१८।।

अथ दिक्फलमाह—

**ऐन्द्र्यादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिणः ।**
**राजभयचोरबन्धनकलहाः स्युः पशुभयं चेति ॥१९॥**

यदि कौआ गृहस्थों के घर पर स्थित होकर पूर्व आदि दीप्त दिशा की तरफ मुख करके शब्द करे तो क्रम से राजभय, चोरभय, बन्धन और कलह होता है। जैसे दीप्त पूर्व दिशा की तरफ मुख करके शब्द करे तो राजभय, दीप्त दक्षिण दिशा की तरफ मुख करके शब्द करे तो चोरभय, दीप्त पश्चिम दिशा की तरफ मुख करके शब्द करे तो बन्धन और दीप्त उत्तर दिशा की तरफ मुख करके शब्द करे तो कलह होता है। साथ ही दीप्त विदिशाओं की तरफ मुख करके शब्द करे तो पशुओं को भय होता है।।१९।।

**ऐन्द्र्यादिदिगवलोकीति**। ऐन्द्र्यादीनां पूर्वादीनां दिशामवलोकयति तच्छीलः। सूर्याभिमुखोऽर्कसम्मुखो गृहे वेश्मनि स्थितो रुवन् शब्दं कुर्वन् गृहिणो गृहस्वामिनो राजभयादीन् दोषान् करोति। ऐन्द्रीं दिशं दीप्तामवलोकयन् निरीक्षयन् गृहे स्थितो विरौति तदा गृहिणो राजभयं करोति। एवमाग्नेय्यां दक्षिणस्यां चौरभयम्। एवं नैर्ऋत्यां पश्चिमायां बन्धनभयं भवति। एवमेव वायव्यामुत्तरस्यां कलहः, पशूनां चतुष्पदानां भयं च। एवमेवैशान्यामिति च। अथवा विदिक्षु सर्वासु पशुभयमिति।।१९।।

एवं दीप्तासु दिग्विदिक्षु फलमभिधायाधुना शान्तामाह—

**शान्तामैन्द्रीमवलोकयन् रुयाद्राजपुरुषमित्राप्तिः ।**
**भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥२०॥**

यदि कौआ शान्त पूर्व दिशा को देखता हुआ शब्द करे तो राजपुरुष और मित्र का समागम, सुवर्ण का लाभ तथा शालिधान्य और गुड़मिश्रित भोजन का लाभ होता है।।२०।।

शान्तामैन्द्रीं पूर्वां दिशमवलोकयन्नीक्षन् रुयाच्छब्दं करोति तदा राजपुरुषस्य प्राप्ति-

र्मित्रप्राप्तिश्च भवति। अथवा राजपुरुष एव मित्रं तस्य प्राप्तिरागमः। तथा सुवर्णस्य काञ्चनस्य लब्धिर्लाभः। शाल्यन्नस्य शालिभक्तस्य गुडाशनस्य गुडसंयुक्तस्य च भोजनस्याप्तिः प्राप्तिर्भवति।।२०।।

अन्यदप्याह—

**आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च ।**
**याम्ये माषकुलूत्थाभोज्यं गान्धर्विकैर्योगः ।।२१।।**

यदि कौआ शान्त आग्नेय कोण को देखता हुआ शब्द करे तो अग्नि से जीविका करने वाले ( सोनार, लोहार आदि ) और युवती स्त्री का समागम तथा उत्तम धातु ( सुवर्ण आदि ) का लाभ होता है। यदि कौआ शान्त दक्षिण दिशा को देखता हुआ शब्द करे तो उड़द और कुलथी का भोजन तथा गान विद्या जानने वाले के साथ समागम होता है।।२१।।

आग्नेय्यां शान्तां दिशमवलोकयन् यदा रौति तदाऽनलजीविकोऽग्न्युपजीविकः सुवर्णकारादिकः। युवती स्त्री। प्रवरः प्रकृष्टः। धातुः सुवर्णादिकः। एतेषां लाभश्च भवति। याम्ये दक्षिणस्यां दिशि शान्तामवलोकयन् माषकुलूत्थाभोज्यं भवति। गान्धर्विकैर्गेयप्रवीणैश्च सह योगः संयोगो भवति।।२१।।

अन्यदप्याह—

**नैर्ऋत्यां दूताश्वोपकरणदधितैलपललभोज्याप्तिः ।**
**वारुण्यां मांससुरासवधान्यसमुद्ररत्नाप्तिः ।।२२।।**

यदि कौवा शान्त नैर्ऋत्य कोण को देखता हुआ शब्द करे तो दूत, घोड़े का उपकरण, दही, तेल, मांस और भोज्य पदार्थ का लाभ होता है। यदि शान्त पश्चिम दिशा की तरफ देखता हुआ शब्द करे तो मांस, मद्य, आसव, धान्य और समुद्रोत्पन्न रत्नों का लाभ होता है।।२२।।

नैर्ऋत्यां दिशि स्थितः काकः। शान्ता च या दिशा तामवलोकयन् रुयात् तदा दूतस्य। अश्वस्य तुरगस्य। उपकरणानामुपकरणभाण्डानाम्। उपयुज्यते यत् तदुपकरणम्। अश्वोपयोगिभाण्डानाम्। दधि दुग्धविकारः। तैलं तिलतैलम्। पललमर्धपीडितास्तिलाः। भोज्यमशनम्। एषां प्राप्तिर्लाभो भवति। वारुण्यां पश्चिमायां शान्तामवलोकयन् रुयात्। मांसमामिषम्। सुरा वारुणी। आसवं पानम्। अथवा सुरैरासवम्। धान्यं शालयः। समुद्ररत्नानां समुद्रजातानां रत्नानां प्राप्तिर्भवति।।२२।।

अन्यदप्याह—

**मारुत्यां शस्त्रायुधसरोजवल्लीफलाशनाप्तिश्च ।**
**सौम्यायां परमान्नाशनं तुरङ्गाम्बरप्राप्तिः ।।२३।।**

यदि कौआ शान्त वायव्य दिशा को देखता हुआ शब्द करे तो शस्त्र, लोहा, आयुध ( खड्ग आदि ), कमल, लता, फल और भोजन का लाभ होता है। यदि शान्त उत्तर दिशा की तरफ मुख करके शब्द करे तो पायस भोजन, घोड़ा और वस्त्र का लाभ होता है।।२३।।

मारुत्यां वायव्यां शान्तामवलोकयन् ब्रूयात्। शस्त्रं लोहम्। आयुधं खड्गादि। सरोजं पद्मम्। वल्लीफलानि कूष्माण्डादीनि। अशनं भोजनम्। एतेषामाप्तिः प्राप्तिर्भवति। सौम्यायामुत्तरस्यां परमान्नाशनं परमान्नं पायसं तदेवाशनम्। तुरङ्गोऽश्वः। अम्बरं वस्त्रम्। एतेषां च प्राप्तिर्भवति।।२३।।

अन्यदप्याह—

**ऐशान्यां सम्प्राप्तिर्घृतपूर्णानां भवेदनडुहश्च।**
**एवं फलं गृहपतेर्गृहपृष्ठसमाश्रिते भवति।।२४।।**

यदि कौआ शान्त ईशान कोण की तरफ मुख करके शब्द करे तो घी से युक्त भक्ष्य पदार्थ और बैल का लाभ होता है। इसी प्रकार घर के पीछे स्थित कौए के फल भी गृहस्वामी को होते है।।२४।।

ऐशान्यां दिशि शान्तायां ब्रूयात् घृतपूर्णानां भक्ष्यविशेषाणामनडुहो वृषभस्य च सम्प्राप्तिर्लाभो भवेत् स्यात्। एवमनेन प्रकारेण गृहस्य वेश्मनः पृष्ठे समाश्रिते काके गृहपतेर्गृहस्वामिनः फलं भवति।।२४।।

**गमने कर्णसमश्चेत् क्षेमाय न कार्यसिद्धये भवति।**
**अभिमुखमुपैति यातुर्विरुवन् विनिवर्तयेद्यात्राम्।।२५।।**

यदि यात्राकाल में कान के बराबर होकर कौवा उड़े तो कुशल करता है; किन्तु कार्य की सिद्धि नहीं होती है तथा यात्रा करने वाले के सामने में शब्द करता हुआ आ जाय तो यात्रा में विघ्न करता है।।२५।।

चेच्छब्दो यद्यर्थे। गमने यात्रायां यदि कर्णसमो भवति काकः, कर्णप्रदेशे यातुर्गच्छति, तदा क्षेमाय भवति। न कार्यसिद्धये क्षेमं करोति न कार्यसिद्धिं करोति। यदर्थं यात्रा तत्कार्यसिद्धिं न करोति। यातुरभिमुखं सम्मुखं विरुवन् शब्दं कुर्वन्नुपेत्यागच्छति तदा यात्रां निवर्तयेद्यात्राविघ्नं करोति। उक्तं च—

यातुः कर्णसमो ध्वांक्षः क्षेमे नार्थप्रसाधकः।। इति।।२५।।

अन्यदप्याह—

**वामे वाशित्वादौ दक्षिणपार्श्वेऽनुवाशते यातुः।**
**अर्थापहारकारी तद्विपरीतोऽर्थसिद्धिकरः।।२६।।**

यदि कौआ पहले यात्रा करने वाले के वाम भाग में शब्द करके फिर दक्षिण भाग

में शब्द करे तो धन का अपहरण करने वाला होता है। इससे विपरीत हो ( दक्षिण भाग में शब्द करके फिर वाम भाग में शब्द करे ) तो अर्थ-सिद्धि करता है।।२६।।

यातु: प्रथममादौ वामभागे वाशित्वा रुतं कृत्वा ततो यदि दक्षिणपार्श्वे वाशते तदाऽर्थस्य धनस्यापहारकारी भवति। तद्विपरीत: पूर्वोक्ताद्विपर्यस्तो दक्षिणपार्श्वे वाशित्वा वामे वाशते तदाऽर्थसिद्धिं करोति।।२६।।

अन्यदप्याह—

**यदि वाम एव विरुवन् मुहुर्मुहुर्यायिनोऽनुलोमगतिः ।**
**अर्थस्य भवति सिद्ध्यै प्राच्यानां दक्षिणश्चैवम् ।।२७।।**

यदि गमन करने वाले के वाम भाग में स्थित कौआ पीछे की ओर गमनशील होकर बार-बार शब्द करे तो अर्थ की सिद्धि होती है। पूर्व देशवासियों के दक्षिण में स्थित काक का भी इसी प्रकार का फल होता है अर्थात् यात्राकाल में पूर्व देशवासियों के दक्षिण में स्थित कौआ पीछे की ओर गमनशील होकर शब्द करे तो अर्थ की सिद्धि होती है।।२७।।

यदि वाम एव वामभागे यायिनोऽनुलोमगतिर्यातु: पश्चाद्गमनशील: स मुहुर्मुहु: पुन:-पुनर्विरुयाद् वाशते तदाऽर्थस्य सिद्ध्यै सिद्धये भवति। एवमनेन प्रकारेण प्राच्यानां दक्षिण: काकोऽपीष्यते। तेनैतदुक्तं भवति—'दक्षिणे मुहुर्मुहुर्वाशते यायिनोऽनुलोमगतिस्तदेष्यत' इति।।२७।।

अन्यदप्याह—

**वामः प्रतिलोमगतिर्विरुवन् गमनस्य विघ्नकृद्भवति ।**
**तत्रस्थस्यैव फलं कथयति तद्वाञ्छितं गमने ।।२८।।**

गमन करने वाले के वाम भाग में स्थित कौआ प्रतिलोम गति वाला ( अभिमुख में आता हुआ ) होकर शब्द करे तो यात्रा में विघ्न करता है; किन्तु यात्रा में जो अभिलषित फल होता है, वह घर बैठे ही मिल जाता है।।२८।।

वामे यातुर्वामभागस्थ: प्रतिलोमगतिर्यायिनोऽभिमुखमागच्छति स च विरुवन् क्रोशन्। गमनस्य यात्राया विघ्नकृद् भवति। गमने यात्रायां यद्वाञ्छितमभिलषितं फलं तत्रस्थस्यैव यातुर्निश्चलस्य कथयति वक्ति।।२८।।

अन्यदप्याह—

**दक्षिणविरुतं कृत्वा वामे विरुयाद्यथेप्सितावाप्तिः ।**
**प्रतिवाश्य पुरो यायाद् द्रुतमत्यर्थागमो भवति ।।२९।।**

यदि कौआ गमन करने वाले के दक्षिण भाग में शब्द करके वाम भाग में शब्द करे तो अभिलषित अर्थ का लाभ होता है। यदि शब्द करके आगे होकर चला जाय तो गमन करने वाले को अधिक धन का लाभ होता है।।२९।।

दक्षिणे यातुर्दक्षिणभागे विरुतं कृत्वा वामे वामभागे विरुयाद्यदि वाशते, तदा यथेप्सितस्य यथाभिलषितस्यार्थस्यावाप्तिर्लाभो भवति। उक्तं च—

वामपार्श्वस्थिताद्याति दक्षिणाद्वापि वामगः। इति।

प्रतिवाश्य शब्दं कृत्वा पुरोऽग्रतो द्रुतं त्वरितं यायाद् याति तदाग्रत एव यातुरत्यर्थस्य महाधनस्यागमो लाभो भवति।।२९।।

अन्यदप्याह—

**प्रतिवाश्य पृष्ठतो दक्षिणेन यायाद् द्रुतं क्षतजकारी।**
**एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः ॥३०॥**

यदि कौआ पीठ की तरफ शब्द करके दक्षिण पार्श्व से होकर चला जाय तो गमन करने वाले के शरीर से किसी कारणवश खून निकलता है। यदि एक पाँव से खड़ा होकर सूर्य को देखता हुआ शब्द करे तो आगे खून निकलने का कारण होता है।।३०।।

पृष्ठतः पश्चात् प्रतिवाश्य दक्षिणेन पार्श्वेन द्रुतं त्वरितं यायाद् गच्छेत् तदा क्षतजकारी क्षतजं रक्तं करोति। एकचरण एकपादः, एकेनैव पादेन स्थितोऽर्कमादित्यमीक्षन् पश्यन् विरुवन् शब्दं कुर्वन् पुरोऽग्रतो रुधिरस्य रक्तस्रावस्य हेतुः कारणम्।।३०।।

अन्यदप्याह—

**दृष्ट्वार्कमेकपादस्तुण्डेन लिखेद्यदा स्वपिच्छानि।**
**पुरतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् ॥३१॥**

यदि कौवा एक पाँव से खड़ा होकर सूर्य को देखते-देखते अपनी चोंच से पंखों को कुरेदे तो भविष्य में किसी प्रधान पुरुष के वध को सूचित करता है।।३१।।

अर्कमादित्यं दृष्ट्वा अवलोक्य एकपाद एकेनैव पादेन स्थितस्तुण्डेन चञ्च्वा स्वपिच्छान्यात्मीयान्यङ्गरुहाणि यदा बलिभुक् काको लिखेत्, तदा पुरतो महतः प्रधानस्य जनस्य वधं मृत्युमभिधत्ते ददाति।।३१।।

अन्यदप्याह—

**सस्योपेते क्षेत्रे विरुवति शान्ते ससस्यभूलब्धिः।**
**आकुलचेष्टो विरुवन् सीमान्ते क्लेशकृद्यातुः ॥३२॥**

यदि धान्यसहित खेत की शान्ता दिशा में स्थित होकर काक शब्द करे तो धान्यसहित भूमि का लाभ होता है तथा गाँव की सीमा के अन्त में स्थित होकर व्याकुलतापूर्वक शब्द करे तो गमन करने वाले को क्लेश करने वाला होता है।।३२।।

सस्योपेते सस्यसंयुक्ते क्षेत्रे शान्ते काके विरुवति ससस्यायाः सस्यसंयुक्ताया भुवो भूमेर्लब्धिर्लाभो भवति। सीमान्ते ग्रामसीमान्ते स्थितस्तत्र चाकुलचेष्टः सोद्यमो विरुवन् यातुः क्लेशकृद्भवति।।३२।।

अन्यदप्याह—

**सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु ।**
**सक्षीराव्रणसंस्थितमनोज्ञवृक्षेषु चार्थसिद्धिकरः ॥३३॥**

स्निग्ध पत्ते, नवीन पल्लव, फूल और फलों से नम्र, सुगन्धियुत, मधुर, छिद्ररहित और मनोहर वृक्ष पर स्थित काक अर्थ-सिद्धि करने वाला होता है।।३३।।

सुस्निग्धेष्वभक्तेष्वक्षोटादिषु। सुस्निग्धपत्रेषु सुस्निग्धपल्लवेषु च। पत्राणि सामान्यवाचकानि। पल्लवान्यभिनवपत्राणि। कुसुमैः पुष्पैः फलैश्चानम्रेषु विनतेषु। सुरभिषु सुगन्धिषु मधुरेषु सक्षीरेष्वर्कादिषु। अव्रणेषु अच्छिद्रेषु। मनोज्ञेषु चित्ताह्लादकेषु वृक्षेषु स्थितोऽर्थसिद्धिकरोऽर्थानां सिद्धिं साधनं करोति।।३३।।

अन्यदप्याह—

**निष्पन्नसस्यशाद्वलभवनप्रासादहर्म्यहरितेषु ।**
**धन्योच्छ्रयमङ्गल्येषु चैव विरुवन् धनागमदः ॥३४॥**

पके हुये धान्य वाले स्थान, दूबयुक्त गृह, देवगृह, हर्म्य, हरा स्थान, धन्य ( शुभ ) स्थान, ऊँचे स्थान और प्रशस्त स्थान में स्थित काक शब्द करे तो धन की प्राप्ति होती है।।३४।।

**निष्पन्नसस्येति**। निष्पन्नानि सञ्जातानि सुपर्वाणि वा सस्यानि यत्र। शाद्वलैर्दूर्वाभिर्युक्ते भवने गृहे। प्रासादे देवप्रासादे गृहे वा। हर्म्ये गृहपृष्ठे हरिते हरितवर्णे स्थाने, अथवा हरितं विद्यते यत्र एतेषु स्थानेषु। तथा धन्ये शुभे शुभस्थाने। उच्छ्रये उच्छ्रिते। मङ्गल्ये प्रशस्ते देशे। एतेषु स्थानेषु काको विरुवन् धनागमदो धनस्य वित्तस्यागमं प्राप्तिं ददाति।।३४।।

**गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजङ्गस्य ।**
**सद्यो ज्वरो महिषगे विरुवति गुल्मे फलं स्वल्पम् ॥३५॥**

गौ की पूँछ या वल्मीक पर बैठा हुआ काक शब्द करे तो सर्प का दर्शन, भैंस पर बैठा हुआ काक बोले तो शीघ्र ज्वर और गुल्म पर बैठा हुआ काक बोले तो अल्प शुभाशुभ फल होता है।।३५।।

गोपुच्छस्थे गोलाङ्गूलस्थिते काकेऽथवा वल्मीकगे वल्मीककृतमृत्स्तूपगे। भुजङ्गस्य सर्पस्य दर्शनं भवति। महिषगे काके विरुवति सद्यस्तस्मिन्नेवाहनि ज्वर उत्पद्यते। गुल्म एकमूलः शाखासमूहः, तस्मिन् स्थिते काके विरुवति स्वल्पमत्यल्पं शुभाशुभं फलं ज्ञेयमिति।।३५।।

अन्यदप्याह—

**कार्यस्य व्याघातस्तृणकूटे वामगेऽम्बुसंस्थे वा ।**
**ऊर्ध्वाऽग्निप्लुष्टेऽशनिहते च काके वधो भवति ॥३६॥**

तृण के ढेर पर या वाम भागगत जल में बैठा हुआ काक बोले तो कार्य का विनाश होता है तथा ऊर्ध्व भाग में अग्निदग्ध या बिजली से हत वृक्ष पर बैठा हुआ काक शब्द करे तो वध होता है।।३६।।

वामे वामभागस्थिते काके तत्र च तृणकूटे तृणराशौ स्थिते विरुवति क्रोशति कार्यस्य व्याघातो विनाशो भवति। वामभागे गतेऽम्बुसंस्थे जलस्थे च रुवति कार्यस्य व्याघात एव। ऊर्ध्वाग्निप्लुष्टे ऊर्ध्वभागेऽग्निना दग्धे वृक्षे च स्थिते विरुवति काके वधो भवति।।३६।।

अन्यदप्याह—

**कण्टकिमिश्रे सौम्ये सिद्धिः कार्यस्य भवति कलहश्च।**
**कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः ॥३७॥**

काँटेदार सौम्य ( दूध वाले ) वृक्ष पर बैठा हुआ काक कार्य की सिद्धि और कलह करता है। केवल काँटेदार वृक्ष पर बैठा हुआ काक कार्य की असिद्धि और लताओं से वेष्टित वृक्ष पर बैठा हुआ काक बन्धन करता है।।३७।।

सौम्ये सौम्यवृक्षे सक्षीरे सफले कण्टकिमिश्रे सकण्टके वृक्षे स्थिते काके कार्यस्य सिद्धिर्भवति तत्र च कलहो भवति। तथा काके कण्टकिनि स्थिते कलहो भवति नार्थसिद्धिः। वल्लीभिः परिवेष्टिते वृक्षे बन्धो बन्धनं भवति।।३७।।

अन्यदप्याह—

**छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वांक्षे।**
**पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः ॥३८॥**

यदि काक ऊपर से कटे हुये वृक्ष पर बैठा हो तो अङ्गच्छेद, सूखे वृक्ष पर बैठा हो तो कलह और आगे या पीछे गोबर पर बैठा हो तो धन का लाभ करता है।।३८।।

छिन्नं कल्पितमग्रं प्रान्तं यस्मिन् वृक्षे तत्रस्थे काकेऽङ्गच्छेदो भवति। तथा ध्वांक्षे काके शुष्कद्रुमसंस्थिते नीरसवृक्षस्थिते कलहो भवति। पुरतोऽग्रतः पृष्ठतः पश्चाद्वा गोमयसंस्थे धनप्राप्तिर्वित्तला॰ः भवति।।३८।।

अन्यदप्याह—

**मृतपुरुषाङ्गावयवस्थितोऽभिविरुवन् करोति मृत्युभयम्।**
**भञ्जन्नस्थि च चञ्च्वा यदि विरुवत्यस्थिभङ्गाय ॥३९॥**

मृत पुरुष के अंगों पर स्थित होकर बोलता हुआ काक गमन करने वाले के सामने पड़े तो मृत्यु का भय होता है तथा चोंच से हड्डी को तोड़ता हुआ काक शब्द करे तो गमन करने वाले की हड्डी टूटने का कारण होता है।।३९।।

मृतपुरुषाङ्गं मृतकशरीरावयवमन्यद्वाह्वादिकम्। तत्र च स्थितः। शवशरीरे तदवयवस्थितोऽभितः सम्मुखो यातुर्विरुवंश्च मृत्युभयं करोति। अस्थिं चञ्च्वा भञ्जन् विदारयन् यदि विरुवति वाशते, तदा यातुरस्थिभङ्गाय भवति।।३९।।

अन्यदप्याह—

**रज्ज्वस्थिकाष्ठकण्टकिनि:सारशिरोरुहानने रुवति ।**
**भुजगगददंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमश: ॥४०॥**

यदि कौआ रस्सी, हड्डी, काष्ठ, कांटेदार वस्तु, असार वस्तु और केश को मुख में लेकर शब्द करे तो क्रम से सर्प, रोग, दंष्ट्री ( सूअर आदि ), चोट, शस्त्र और अग्नि का भय करता है।।४०।।

रज्जु: प्रसिद्धा। अस्थि काष्ठं कण्टकि: प्रसिद्ध:। नि:सारा असारा:। शिरोरुहा: केशा:। काके रज्ज्वाद्यानने मुखे गृहीत्वा रुवति सत्यनुक्रमशो यथाक्रमं भुजगादीनां भयानि भवन्ति। तद्यथा—रज्जुमुखे काके विरुवति भुजगस्य सर्पस्य सम्बन्धि भयं भवति। अस्थिमुखे गदो रोग:। काष्ठमुखे दंष्ट्रिभयम्। दंष्ट्रिणो वराहादय:, तेभ्यो भयं भवति। कण्टकिमुखे तस्करभयम्। नि:सारमुखे शस्त्रभयम्। शिरोरुहमुखे काकेऽग्निभयं भवति। उक्तं च—

काष्ठरज्ज्वस्थिनि:सारकेशकण्टकिभृद्रुवन् ।
व्यालाहिव्याधिशस्त्राग्नितस्करेभ्यो भयङ्कर:।। इति।।४०।।

अन्यदप्याह—

**सितकुसुमाशुचिमांसाननेऽर्थसिद्धिर्यथेप्सिता यातु: ।**
**पक्षौ धुन्वन्नूर्ध्वानने च विघ्नं मुहु: क्वणति ॥४१॥**

यदि कौआ सफेद फूल, अपवित्र वस्तु और मांस को मुख में लेकर शब्द करे तो गमन करने वाले के अभीष्ट अर्थ की सिद्धि होती है। पंखों को कँपाते हुये ऊपर को मुख करके बार-बार शब्द करे तो यात्रा में विघ्न होता है।४१।।

सितकुसुमं श्वेतपुष्पम्। अशुचि अमेध्यम्। मांसमामिषम्। एतान्यानने मुखे गृहीत्वा यदि क्वणति विरुवति, तदा यातुर्यथेप्सिता यथाभिलषिताऽर्थसिद्धिर्भवति। पक्षावङ्गरुहौ धुन्वन् कम्पयंस्तथाभूते काके ऊर्ध्वमुखे च क्वणति मुहु: शीघ्रमेव यात्राविघ्नं करोति।।४१।।

अन्यदप्याह—

**यदि शृङ्खलां वरत्रां वल्लीं वाऽऽदाय वाशते बन्ध: ।**
**पाषाणस्थे च भयं क्लिष्टापूर्वाध्विकयुतिश्च ॥४२॥**

यदि कौआ लोहे की जञ्जीर, वरत्रा ( चमड़े की रस्सी ) और लता को मुख में लेकर शब्द करे तो बन्धन होता है तथा पत्थर पर बैठा हुआ काक मार्ग में अपरिचित मनुष्य का समागम करता है।।४२।।

यदि शृङ्खलां लोहमयीं वरत्रां चर्ममयीं रज्जुं वल्लीं वाऽऽदाय गृहीत्वा वाशते विरौति, तदा यातुर्बन्धो भवति। पाषाणस्थेऽश्मनि स्थिते काके भयं भवति। क्लिष्टेन क्लेशसंयुक्तेन अपूर्वेण यो न कदापि निर्दिष्टस्तेनाध्विकेन पान्थेन युति: संयोगो भवति।।४२।।

अन्यदप्याह—

**अन्योऽन्यभक्षसंक्रामितानने तुष्टिरुत्तमा भवति।**
**विज्ञेयः स्त्रीलाभो दम्पत्योर्विरुवतोर्युगपत् ।।४३।।**

यदि दो कौवे परस्पर एक-दूसरे के मुख में भोजन देते हों तो गमन करने वाले को उत्तम तुष्टि का लाभ होता है तथा नर-मादा दोनों साथ-साथ शब्द करें तो स्त्री का लाभ होता है।।४३।।

अन्योऽन्यं परस्परं भक्षसंक्रामितानने काके भक्षक्षिप्तमुखे यातुरुत्तमा प्रधाना तुष्टिर्भवति। दम्पत्योर्जायापत्योर्युगपत् तुल्यकालं कृत्वा विरुवतोः क्रोशतोः स्त्रीलाभो योषित्प्राप्तिर्विज्ञेयो विज्ञातव्यः।।४३।।

अन्यदप्याह—

**प्रमदाशिरउपगतपूर्णकुम्भसंस्थेऽङ्गनार्थसम्प्राप्तिः।**
**घटकुट्टने सुतविपद्घटोपहदनेऽन्नसम्प्राप्तिः ।।४४।।**

स्त्री के मस्तक-स्थित जलपूर्ण घड़े पर बैठा हुआ कौआ स्त्री का लाभ कराता है। घड़े को ताड़न करे तो पुत्र का मरण होता है तथा घड़े पर बीट कर दे तो भोजन का लाभ होता है।।४४।।

प्रमदा स्त्री, तस्याः शिरउपगतो मूर्ध्नि स्थितो यः पूर्णकुम्भस्तत्रस्थे काकेऽङ्गनार्थसम्प्राप्तिः। स्त्रीलाभोऽर्थप्राप्तिश्च भवति। घटकुट्टने कुम्भताडने सुतविपत् पुत्रमरणं भवति। घटोपहदने कुम्भपुरीषकरणेऽन्नसम्प्राप्तिर्भोजनलाभो भवति।।४४।।

अन्यदप्याह—

**स्कन्धावारादीनां निवेशसमये रुवंश्चलत्पक्षः।**
**सूचयतेऽन्यत्स्थानं निश्चलपक्षस्तु भयमात्रम् ।।४५।।**

यात्रा में गया हुआ राजा जहाँ पर निवास करता है, उसको 'स्कन्धावार' कहते हैं। स्कन्धावार आदि के निर्माण-काल में पंखों को चलाता हुआ काक शब्द करे तो दूसरे स्थान में निवास करने को सूचित करता है तथा पंखों को स्थिर करके शब्द करे तो केवल भय को सूचित करता है; स्थानान्तर गमन को नहीं।।४५।।

यात्रायां गतो राजा यत्र निवसति स स्कन्धावारः। स्कन्धावारादीनाम्। आदिग्रहणात् प्रवासिनामन्येषामपि जनानां निवेशसमये निवेशनकाले। निवेशनमावासकादीनां रचनम्। तस्मिंश्चलत्पक्षः चलिताङ्गरुहः काको रुवन् शब्दं कुर्वन्। अन्यद् द्वितीयं स्थानं सूचयते कथयति। यथाऽन्यत्र भवद्भिर्वस्तव्यम्। निश्चलपक्षस्तु रुवन् भयमात्रं सूचयते नान्यत् स्थानम्। तथा च पराशरः—

सेनानिविष्टः सार्थे वा वासो हृष्टो न वाशते।
तस्य देशप्रयातस्य भयमत्रोपजायते।। इति।।४५।।

अन्यदप्याह—

**प्रविशद्भिः सैन्यादीन् सगृध्रकङ्कैर्विनामिषं ध्वांक्षैः ।**
**अविरुद्धैस्तैः प्रीतिर्द्विषतां युद्धं विरुद्धैश्च ॥४६॥**

यदि गिद्ध और कङ्क पक्षी के साथ कौए विना मांस के सेना आदि ( पुर और गाँव में परस्पर विरोधरहित होकर ) प्रवेश करें तो शत्रु के साथ स्नेह एवं कलह करते हुये प्रवेश करें तो युद्ध होता है।।४६।।

ध्वांक्षैः काकैः। सगृध्रकङ्कैः गृध्रकङ्कसहितैः। विनामिषं मांसं विना। सैन्यादीन् सैन्य-पुरग्रामान् प्रविशद्भिस्तैश्च परस्परमविरुद्धैर्विरोधमकुर्वद्भिर्द्विषता शत्रुणा सह प्रीतिर्भवति। तैश्च विरुद्धैः सकलहैर्द्विषता सह युद्धं संग्रामो भवति।।४६।।

अन्यदप्याह—

**बन्धः सूकरसंस्थे पङ्काक्ते सूकरे द्विकेऽर्थाप्तिः ।**
**क्षेमं खरोष्ट्रसंस्थे केचित् प्राहुर्वधं तु खरे ॥४७॥**

सूअर पर स्थित काक हो तो बन्धन, कीचड़ से लिपटे हुये सूअर पर स्थित काक हो तो धन का लाभ तथा गदहे और ऊँट पर स्थित काक हो तो क्षेम करता है। किसी का मत है कि गदहे पर स्थित काक वध करता है।।४७।।

सूकरसंस्थे द्विके काके बन्धो बन्धनं भवति। पङ्काक्ते पङ्केन कर्दमेन लिप्ते सूकरे स्थितेऽर्थाप्तिरर्थलाभो भवति। खरगते गर्दभस्थे। उष्ट्रगते करभस्थे काके क्षेमं भवति। केचित् तु मुनयः खरसंस्थे वधं मरणं प्राहुः कथयन्ति। उक्तञ्च—

वधबन्धकरः क्रोशन् खरसूकरपृष्ठगः।
पङ्कदिग्धशरीरस्य वराहस्योपरिस्थितः।।
वायसः शस्यते यातुस्तूष्णीभूतो रुवन्नपि।। इति।।४७।।

अन्यदप्याह—

**वाहनलाभोऽश्वगते विरुवत्यनुयायिनि क्षतजपातः ।**
**अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः ॥४८॥**

घोड़े पर बैठा काक शब्द करे तो वाहन का लाभ होता है तथा पीछे-पीछे चलता हुआ काक शब्द करे तो खून गिरता है। काक को छोड़कर अन्य पक्षी-गण भी गमन करने वाले के पीछे चलें तो काक की तरह ही फल देते हैं।।४८।।

अश्वगते तुरगस्थे काके विरुवति वाहनानामश्वादीनां लाभो भवति। अनुयायिनि पश्चाद् गम्यमाने काके विरुवति यातुः क्षतजपातो रक्तस्य पातः पतनं भवति। अन्येऽपरे येऽत्रा-नुक्ता विहगाः पक्षिणस्ते यातारमनुव्रजन्तः पश्चाद् गच्छन्तः काकवद्वायसवज्ज्ञेया ज्ञातव्याः। यथा काकस्य फलं पूर्वमुक्तं तथा तेषामपीति। तथा च काश्यपः—

ऊलूककङ्कप्लवगा गृध्रश्येनादयश्च ये।
मांसाशिनश्च विहगास्तुल्या वायसचेष्टितैः।। इति।।४८।।

अथ विशेषमाह—

**द्वात्रिंशत्प्रविभक्ते दिक्चक्रे यद्यथा समुद्दिष्टम्।**
**तत्तत्तथा विधेयं गुणदोषफलं यियासूनाम्।।४९।।**

द्वात्रिंशद्विभक्त दिक्चक्र में जिस प्रकार फल कहा गया है, उसी प्रकार गमन करने वालों को गुण-दोष-फल कहना चाहिये। शान्त पूर्व दिशा में स्थित शकुन शुभ, अशुभ शकुन मध्यम फल, दीप्त पूर्व दिशा में क्रूर चेष्टा वाले शकुन राजा से भय इत्यादि की तरह फल कहना चाहिये।।४९।।

दिक्चक्रे दिङ्मण्डले द्वात्रिंशद्भागप्रविभक्ते यद्यत्फलं यथा येन प्रकारेण समुद्दिष्टं कथितं तत्तत् फलं तथा तेनैव प्रकारेण यियासूनां जिगमिषूणां गुणदोषफलं विधेयं वक्तव्यम्। यथा—प्राच्यां शान्तायां वा शुभचेष्टं पूजाफलं महद्वक्ति। अशुभचेष्टायां मध्यस्थं तस्यामेव दीप्तायां क्रूरचेष्टो नृपाद्भयम्, एवमन्यास्वपि विज्ञेयम्।।४९।।

अथ रुतलक्षणफलमाह—

**का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम्।**
**कव इति चात्मप्रीत्यै केति रुते स्निग्धमित्राप्तिः।।५०।।**

**करेति कलहं कुरुकुरु च हर्षमथ कटकटेति दधिभक्तम्।**
**केके विरुतं कुकु वा धनलाभं यायिन प्राह।।५१।।**

अपने घोसले में अवस्थित काक का 'का' शब्द निष्फल, 'कव' शब्द अपनी प्रसन्नता के लिये, 'क' शब्द प्रिय की प्राप्ति कराने वाला, 'कर' शब्द कलह कराने वाला 'कुरु-कुरु' शब्द आनन्द कराने वाला, 'कट कट' शब्द दही-भोजन कराने वाला एवं 'केके' और 'कुकु' शब्द गमन करने वाले को धनप्राप्ति कराने वाला होता है।।५०-५१।।

**का इति काकस्य रुतमिति**। काकस्य वायसस्य स्वनिलयसंस्थस्य आत्मीयनीड-स्थितस्य का—इति यद्रुतं तन्निष्फलं प्रोक्तं कथितम्। तस्य च शुभाशुभं फलं न किञ्चिदित्यर्थः। कव—इति रुतं चात्मप्रीत्यै स्वप्रीतये भवति। क—इति रुते स्निग्धस्य वल्लभस्य मित्रस्य सुहृद आप्तिः प्राप्तिर्भवति।

कर—इति रुते कलहः कलिर्भवति। कुरुकुरु च रुते हर्षं भवति। अथशब्दश्चार्थे। कटकटेति रुते दधिभक्तं भोजनं भवति। केके—इति विरुते कुकु—इति विरुते वा यायिनो गच्छतो धनलाभं वित्तप्राप्तिं प्राह कथयति।।५१।।

अन्यदप्याह—

**खरेखरे पथिकागममाह कखाखेति यायिनो मृत्युम्।**
**गमनप्रतिषेधिकमा कखला सद्योऽभिवर्षाय।।५२।।**

काक का 'खरे खरे' शब्द पथिक के आगमन को कहता है, 'कखाखा' शब्द गमन करने वाले की मृत्यु को सूचित करता है, 'आ' शब्द यात्रा में विघ्न उपस्थित करता है और 'कखला' शब्द सद्यः ( उसी दिन ) वर्षा के लिये होता है।।५२।।

खरेखरे इति रुते पथिकस्य पान्थस्यागमो भवति इत्याह कथयति वायसः। कखाखेति—रुते यायिनो मृत्युं मरणमाह। आ—इति रुतं गमनप्रतिषेधिकं गमनविघ्नं करोति। कखला इति रुतं सद्योऽभिवर्षाय सद्यस्तस्मिन्नेवाहनि वर्षतीत्यर्थः।।५२।।

अन्यदप्याह—

**काकेति विघातः काकटीति चाहारदूषणं प्राह।**
**पीत्यास्पदं कवकवेति बन्धमेवं कगाकुरिति ।।५३।।**

काक का 'काक' शब्द विनाश करता है, 'ककाटि' शब्द भोजन में विष आदि दोष को, 'कवकव' शब्द प्रीत्यास्पद ( किसी से प्रीति ) को और इसी प्रकार 'कगाकु' शब्द बन्धन को सूचित करता है।।५३।।

काक—इति विरुते विघातो विनाशो भवति। काकटीति विरुते आहारस्य भोजनस्य दूषणं सदोषत्वं विषादिकेन प्राह कथयति। कवकव इति रुते प्रीत्यास्पदम्, प्रीत्याः स्नेहस्य आस्पदं स्थानं प्रीत्यास्पदम्। केनचित् सह प्रीतिर्भवति। अन्ये प्रीत्या स्वदम्पती कवकवेति पठन्ति। यथा स्वदम्पती भार्यापती कवकवेति प्रीत्या स्नेहेन कवकवेति रुतं कुर्वतः। एतन्न शोभनम्। यस्माद् गर्गः—

रुते कवकवेति स्यात् प्रस्थिते वायसस्य तु।
अपूर्वप्रीतये तच्च धनलाभाय निर्दिशेत्।।
एवं कगाकु इति रुते बन्धो बन्धनं भवति।। इति।।५३।।

अन्यदप्याह—

**करगौ विरुते वर्षं गुडवत् त्रासाय वडिति वस्त्राप्तिः।**
**कलयेति च संयोगः शूद्रस्य ब्राह्मणैः साकम् ।।५४।।**

काक का 'करगौ' शब्द करने पर वर्षा होती है। 'गुड' शब्द भय के लिये होता है, 'वड' शब्द वस्त्रलाभ कराने वाला होता है और 'कलय' शब्द ब्राह्मणों के साथ शूद्र का समागम कराता है।।५४।।

करगौ इति रुते वृष्टिर्वर्षणं भवति। गुड इति त्रासाय भयाय भवति वड् इति रुते वस्त्रप्राप्तिरम्बरलाभः। कलय इति च रुते शूद्रस्य शूद्रजातेर्ब्राह्मणैः साकं सह संयोगो भवति।

अन्यदप्याह—

**कडिति फलाप्तिः फलदाहिदर्शनं टड्डिति प्रहाराः स्युः।**
**स्त्रीलाभः स्त्रीति रुते गडिति गवां पुडिति पुष्पाणाम् ।।५५।।**

काक का 'कड' शब्द अभीष्ट फल-प्राप्ति और शुभ देने वाले सर्प का दर्शन कराता है तथा 'टड्ड' शब्द घात, 'स्त्री' शब्द स्त्री-लाभ, 'गड्' शब्द गायों का लाभ और 'पुड्' शब्द फूलों का लाभ कराता है।।५५।।

कडिति रुते फलाप्तिरभीष्टफलप्राप्तिर्भवति। अथवा फलाप्तिः फललाभः। तथा फलदाहिदर्शनं फलप्रदस्याहेः शुभफलप्रदस्य सर्पस्य दर्शनमवलोकनं भवति। अथवा फलाप्तिर्भवति सदाप्तिः। फलदा फलप्रदा ततोऽपि विशिष्टतरं फलं लभ्यते। तथाऽहिदर्शनं भवति। टड्डिति रुते प्रहारा घाताः स्युर्भवेयुः। स्त्री—इति रुते स्त्रीलाभो भवति। गडिति रुते गवां लाभः। पुडिति रुते पुष्पाणां लाभः।।५५।।

अन्यदप्याह—

**युद्धाय टाकुटाक्विति गुहु वह्निभयं कटेकटे कलहः।**
**टाकुलि चिण्टिचि केकेकेति पुरं चेति दोषाय।।५६।।**

यदि कौवा 'टाकुटाकु' शब्द करे तो युद्ध का कारण, 'गुहु' शब्द करे तो अग्निभय, 'कटेकटे' शब्द करे तो कलह और 'टाकुलि, चिण्टिचि, केकेका' शब्द करे तो दोष के लिये होता है।।५६।।

टाकुटाक्विति रुतं युद्धाय संग्रामाय भवति। गुहु—इति रुते वह्निभयमग्निभयं भवति। कटेकटे—इति रुते कलहः। टाकुलि चिण्टिचि केकेकेति पुरं चेति इत्येवं रुतं दोषाय भवति।।५६।।

अन्यद् विशेषमाह—

**काकद्वयस्यापि समानमेतत् फलं यदुक्तं रुतचेष्टिताद्यैः।**
**पतत्रिणोऽन्येऽपि यथैव काको वन्याः श्ववच्चोपरिदंष्ट्रिणो ये।।५७।।**

शब्द, चेष्टा, भोजन और उपवेशन के द्वारा एक काक का जो फल कहा गया है, वही दो, तीन आदि का भी जानना चाहिये तथा अन्य अनुक्त पक्षीगण का भी फल काक की तरह ही जानना चाहिये। इसी प्रकार वन में रहने वाले जन्तु और उपरिदंष्ट्री ( सूअर आदि ) का फल कुत्ते की तरह जानना चाहिये।।५७।।

रुतचेष्टिताद्यैः, रुतेन चेष्टितेनाऽऽसनाद्युपवेशनेन चैकस्य काकस्य यत् फलमुक्तं तत्काकद्वयस्य। अपिशब्दात् त्रयस्य चतुष्कस्य च समानं वाच्यम्। अन्ये येऽत्रानुक्ताः पतत्रिणः पक्षिणस्तेऽपि तेन प्रकारेण ज्ञेयाः। वन्या वने भवाः प्राणिनो ये नोक्तास्ते श्ववत्सारमेयवत्। ये चोपरिदंष्ट्रिणः सूकरादयस्ते श्ववच्छुनो यत्फलमुक्तं तत् तेषामपि। तथा च पराशरः—

शकुनाः पुंसनामानो वायसेन प्रकीर्तिताः।
तथैव स्त्रीसनामानः पिपील्याः परिकीर्तिताः।। इति।।५७।।

अथान्येषु प्राणिषु चेष्टितमाह—

**स्थलसलिलचराणां व्यत्ययो मेघकाले**
**प्रचुरसलिलवृष्ट्यै शेषकाले भयाय।**
**मधु भवननिलीनं तत्करोत्याशु शून्यं**
**मरणमपि न नीला मक्षिका मूर्ध्नि लीना ॥५८॥**

स्थलचारी ( अजादि ) जीव जलचारी और जलचारी ( मछली आदि ) जीव स्थलचारी हों तो वर्षाकाल में बहुत वृष्टि के लिये तथा अन्य ऋतु में भय के लिये होते हैं। यदि मधुमक्खियाँ घर में छत्ता लगावें तो शीघ्र ही उस भवन को जनशून्य करती हैं तथा नील वर्ण वाली मक्खियाँ जिस मनुष्य के शिर पर बैठें, उसकी मृत्यु होती है।।५८।।

मेघकाले वर्षासमये स्थलसलिलचराणां व्यत्ययो विपरीतः। स्थलचरा अजादयो जलचारिणः। जलचरा मत्स्यादयः स्थलचारिणो यदा भवन्ति, तदा ते प्रचुरसलिलवृष्ट्यै प्रभूतवृष्टये भवन्ति। शेषकाले वर्षातोऽन्यस्मिन् समये स्थलसलिलचराणां व्यत्ययो भयाय भवति। मधुशब्देन मधुकर्च्यो मक्षिका उच्यन्ते। मधु भवने स्वयमेव निलीनं संश्लिष्टं तदेव भवनमाशु क्षिप्रं शून्यं निर्जनं करोति। नीला नीलवर्णा मक्षिका मूर्ध्नि शिरसि जन्तोर्लीना श्लिष्टा मरणं मृत्युमपि करोति।।५८।।

पिपीलिकाचेष्टितमाह—

**विनिक्षिपन्त्यः सलिलेऽण्डकानि पिपीलिका वृष्टिनिरोधमाहुः।**
**तरुं स्थलं वापि नयन्ति निम्नाद्यदा तदा ताः कथयन्ति वृष्टिम् ॥५९॥**

यदि चीटियाँ अपने अण्डे को जल में डालें तो वर्षा का अभाव होता है। जब वही चीटियाँ अण्डे को वृक्ष पर या उच्च स्थान पर ले जायँ तब वृष्टि होती है।।५९।।

पिपीलिकाः सलिले जले अण्डकानि विनिक्षिपन्त्यो वृष्टिनिरोधं वृष्ट्यभावमाहुः कथयन्ति। निम्नात् तलात् तरुं वृक्षस्थलमुच्चस्थानं वापि यदि नयन्ति, तदा वृष्टिं वर्षणं कथयन्ति वदन्ति ताः पिपीलिकाः।।५९।।

अथ शकुननिश्चयमाह—

**कार्यं तु मूलशकुनेऽन्तरजे तदह्नि**
**विन्द्यात् फलं नियतमेवमिमे विचिन्त्याः।**
**प्रारम्भयानसमयेषु तथा प्रवेशे**
**ग्राह्यं क्षुतं न शुभदं क्वचिदप्युशन्ति ॥६०॥**

यात्रा आदि कार्यों के आरम्भकाल में जिस तरह का शकुन दिखाई देता है, उसी तरह कार्य के अन्त तक शुभाशुभ फल होता है तथा कार्य के मध्य में जो शकुन दिखाई देता है, उसका फल उसी दिन हो जाता है। इस अध्याय में जो शकुन कहे गये हैं,

उनका सब समय में विचार करना चाहिये। समस्त कार्यों के आरम्भ-समय में, यात्रा-काल में और गृहप्रवेश आदि कार्यों में पूर्वोक्त सभी शकुनों का विचार करना चाहिये तथा किसी भी कार्य में छींक शुभ नहीं होता है।।६०।।

मूलशकुन: प्रथमशकुन:। तस्मिन् कार्यं यात्राकार्यं विन्द्याज्जानीयात्। तस्मिन् शुभे यात्रासिद्धि:, अशुभेऽसिद्धिरिति। **अन्तरजे तदह्नीति** । यातुर्मूलशकुनात् परतो यात्रापरिसमाप्तिं यावत् तदन्तरे मध्ये योऽन्य: शकुन: शुभाशुभो भवति तदन्तरजे तस्मिन्नन्तरजे मध्यजाते तस्य यत् फलं तदह्नि तस्मिन्नेव दिने विन्द्यात्। इमेऽस्मिन्नध्याये शकुना उक्तास्ते नियतं सर्वकालं विचिन्त्याश्चिन्तनीया:। प्रारम्भे सर्वकर्मणां यानसमये यात्राकाले तथा प्रवेशे गृहप्रवेशादौ। एतेषु कार्येषु सर्वेषु शकुनाश्चिन्तनीया:। तथा क्षुतं नासाशब्द: सर्वथा ग्राह्यम्। क्षुतं श्रुत्वा न किञ्चित् कार्यमित्यर्थ:। यत: क्वचिदपि न शुभदमुशन्ति कथयन्ति। सर्वत्राशुभं क्षुतमिति।।६०।।

एतेषामेव शकुनानां प्रशंसार्थमाह—

**शुभं दशापाकमविघ्नसिद्धिं मूलाभिरक्षामथवा सहायान्।**
**दुष्टस्य संसिद्धिमनामयत्वं वदन्ति ते मानयितुर्नृपस्य ।।६१।।**

वे पूर्वोक्त शकुन माननीय राजा के शुभ दशा फल, निर्विघ्नपूर्वक कार्य का साधन, मूल स्थान का पालन, मार्ग में सहायक, दुष्ट शत्रु का साधन, आरोग्य—इन सबों को शुभ चेष्टाओं के द्वारा सूचित करते हैं।।६१।।

ते शकुना नृपस्य राज्ञो मानयितु: पूजयितुस्तेषां मानयति पूजयति। तस्य शकुनं वदन्ति कथयन्ति। शुभं शोभनं दशापाकं दशाफलमविघ्नसिद्धिमविघ्नेन कार्याणां साधनम्। मूलाभिरक्षा, मूलं मूलस्थानम्, तत्राभिरक्षामाभिमुख्येन पालनम्। अथवा पथि गच्छतु: सहायान् सार्थकान्। दुष्टस्य दु:साध्यस्य शत्रो: संसिद्धिं सुखेनाक्लेशेन साधनम्। अनामयत्वं नीरोगत्वमेतत्सर्वं शुभसूचनाद् वदन्ति कथयन्ति।।६१।।

अथानिष्टशकुनविरुते दृष्टे यत्कर्तव्यं तदाह—

**क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके**
**तत्रानिष्टे प्रथमशकुने मानयेत् पञ्च षट् च।**
**प्राणायामान्नृपतिरशुभे षोडशैव द्वितीये**
**प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीय: ।।६२।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां शाकुने वायसविरुतं नाम पञ्चनवतितमोऽध्याय: ।।९५।।**

कोई-कोई ( काश्यप आदि आचार्य ) कहते हैं कि एक कोस चले जाने के बाद शकुन का शब्द निष्फल होता है तथा यात्राकाल में यदि पहला शकुन अशुभ हो तो

ग्यारह प्राणायाम और दूसरा शकुन अशुभ हो तो सोलह प्राणायाम करना चाहिये। लेकिन यदि तीसरा शकुन अशुभ हो तो घर लौट आना चाहिये।

**प्राणायाम का लक्षण**—सात व्याहृति ( ओं भः, ओं भुवः, ओं स्वः, ओं महः, ओं जनः, ओं तपः, ओं सत्यम् ), प्रणव ( ओं ), शिर ( आपोज्योतीरसो मृतम। ) इसके साथ गायत्री ( तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ) को श्वास को छोड़ते हुये तीन बार पढ़े।।६२।।

**इति 'विमला'हिन्दीटीकायां शाकुने वायसविरुताध्यायः पञ्चनवतितमः ॥९५॥**

---

एके आचार्याः काश्यपादयः क्रोशादूर्ध्वं क्रोशादनन्तरं यच्छकुनविरुतं तन्निष्फलं प्राहुरुक्तवन्तः। तथा च काश्यपः—

क्रोशादनन्तरं यत् स्याच्छुभं वा यदि वाऽशुभम्।
निष्फलं तच्च विज्ञेयं शकुनानां विचेष्टितम्।।

एवं क्रोशं यावच्छ्रूयमाणं सफलम्, क्रोशादनन्तरं निष्फलमिति। एतदाचार्यस्य नाभिप्रेतम्। **तत्रानिष्टे प्रथमशकुन इति** । तत्र तस्मिन् यात्राकाले प्रथमशकुनेऽनिष्टे अशुभे सति नृपती राजा विहितमना निर्मलचित्तः पञ्च षट् च एकादश प्राणायामान् मानयेत् पूजयेत्; कुर्यादित्यर्थः। अथ प्राणायामलक्षणमाह—

सव्याहृतिं सप्रवणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते।।

व्याहृतयः सप्त भवन्ति। ॐभूः। ॐभुवः। ॐस्वः। ॐमहः। ॐजनः। ॐतपः। ॐसत्यम्। प्रणवः ॐकारः। शिरः आपो ज्योती रसोमृतम्। गायत्री प्रसिद्धा चतुर्विंशत्यक्षरा। आयतप्राणः परित्यक्तश्वासः। त्रिः त्रीन् वारान् पठेत्। अशुभे षोडशैव द्वितीये, द्वितीये शकुने अशुभे षोडश प्राणायामान् मानयेत् पूजयेत्, ततो व्रजेत्। अथ यदि तृतीयः शकुनोऽनिष्टोऽशुभस्तदा स्वभवनमात्मीयगृहं प्रत्यागच्छेत् प्रतीपमा-गच्छेदिति।।६२।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने वायसविरुतं नाम पञ्चनवतितमोऽध्यायः ॥९५॥**

---

# अथ शाकुनोत्तराध्यायः

अथ शाकुनोत्तरं व्याख्यायते—

**दिग्देशचेष्टास्वरवासरर्क्षमुहूर्तहोराकरणोदयांशान्।**
**चरस्थिरोन्मिश्रबलाबलं च बुद्ध्वा फलानि प्रवदेद्रुतज्ञः॥१॥**

दिक् ( पूर्व आदि और अङ्गारित आदि ), देश, चेष्टा, स्वर ( दीप्त और शान्त ), दिन, नक्षत्र, मुहूर्त ( शिवा आदि ), होरा ( राश्यर्ध और कालहोरा ), करण, लग्न, अंश, ( द्रेष्काण, नवांश, द्वादशांश और त्रिंशांश ), चर ( मेष, कर्क, तुला और मकर ), स्थिर ( वृष, सिंह, वृश्चिक और कुम्भ ), उन्मिश्र ( द्विस्वभाव = मिथुन, कन्या, धनु और मीन )—इन शकुनों का और राशियों का बलाबल जान कर शकुनों के शब्द को जानने वालों को फलकथन करना चाहिये।।१।।

दिक् पूर्वाद्याङ्गारिताद्या च। देशः स्थानं शुभमशुभं वा। चेष्टा विहरणं व्यापारः। स्वरः शब्दो दीप्तः शान्तश्च। वासरो दिनम्। ग्रहचारतः शुभमशुभं च। ऋक्षं नक्षत्रं ध्रुवमृदुदारुणक्षिप्रोग्रचरसाधारणम्। मुहूर्तः शिवादिकः। होरा राश्यर्धम्, कालहोराश्च। शुभग्रहस्य सम्बन्धिन्योऽशुभस्य वा। करणं ववादिकरणं शुभमशुभं वा। उदयो लग्नम्। अंशो भागस्तेन द्रेष्काणनवांशद्वादशांशत्रिंशद्भागात्मकः। तथा चरा मेषकर्कटतुलामकराः। स्थिरा वृषसिंहवृश्चिककुम्भाः। उन्मिश्रा द्विस्वभावाः, ते च मिथुनकन्याधन्विमीनाः। एषां शकुनानां राशीनां च बलाबलं बुद्ध्वा रुतज्ञः शकुनरुतज्ञः फलानि प्रवदेद् ब्रूयादित्यर्थः।।१।।

अथ तद्भेदप्रदर्शनार्थमाह—

**द्विविधं कथयन्ति संस्थितानामागामिस्थिरसंज्ञितञ्च कार्यम्।**
**नृपदूतचरान्यदेशजातान्यभिघातः स्वजनादि चागमाख्यम्॥२॥**

एक देश में स्थित पुरुषों के दो प्रकार के कार्य कहे गये हैं, उनमें एक आगामी ( भविष्यत् ) और दूसरा स्थिरसंज्ञक ( वर्तमान और भूत ) होता है। राजा, दूत, गूढ़ पुरुष और परदेश से उत्पन्न कार्य अन्य हैं। उपद्रव तथा बन्धु और मित्रों का आगमनरूप कार्य भविष्यत् होते हैं।।२।।

शकुनसंस्थितानामेकदेशसंस्थानां पुंसां द्विविधं द्विप्रकारं कार्यं प्रवदन्ति कथयन्ति। कीदृशम्? आगामि स्थिरसंज्ञितं च। आगाम्येष्यत्। स्थिरं च वर्तमानमतीतं वा। तथान्यानि कार्याणि नृपदूतचरान्यदेशजातानि। नृपो राजा, दूतो गमागमिकः, चरः प्रसिद्धो गूढपुरुषः। अन्यदेशः परदेशः। एभ्यो जातान्युत्पन्नानि कथयन्ति। तथाभिघात उपद्रवः। स्वजनानां बन्धुसुहृदां चागम आगमनं तस्य चागतस्याख्यां नाम कथयन्ति।।२।।

अथ स्थिरचराणां ज्ञानमाह—

**उद्बद्धसंग्रहणभोजनचौरवह्नि-**
**वर्षोत्सवात्मजवधाः कलहो भयं च।**
**वर्गः स्थिरोऽयमुदयेन्दुयुते स्थिरर्क्षे**
**विद्यात् स्थिरं चरगृहे च चरं यदुक्तम् ॥३॥**

उद्बद्ध ( वहीं पर स्थित ), संग्रहण ( किसी के साथ संयोग ), भोजन, चोर, अग्नि, वर्षा, उत्सव, पुत्र, वध, कलह, भय–ये स्थिर वर्ग हैं। यदि ये वर्ग स्थिर स्थान में उत्पन्न स्थिर स्थानस्थित शकुन के द्वारा सूचित किये जाते हों तो चरसंज्ञक होते हैं। यदि ये वर्ग स्थिर हों और उदयकालिक लग्न और चन्द्र स्थिर राशि में हो तो उद्बद्धादि कार्य उसी दिन या भूत में जानना चाहिये और चन्द्र चर राशि में हो और चर स्थानस्थित शकुन हों तो उद्बद्धादि कार्य भविष्य में जानना चाहिये।।३।।

उद्बद्धं संलग्नं तत्रैव संस्थितं गमागमवर्जितम्। संग्रहणं संयोगः केनचित् सह। भोजनमशनम्। चौरास्तस्कराः। वह्निरग्निः। वर्षो वर्षणम्। उत्सवो विवाहादिः। आत्मजः पुत्रः। वधो मरणम्। एते। तथा कलहो डमरम्। भयं भीतिश्च। अयं वर्गः स्थिरः। चेच्छब्दोऽत्र लुप्तो द्रष्टव्यः। एष वर्गो यदि स्थिरस्थानेषूत्पन्नः स्थिरस्थानस्थितेन शकुनेन सूचितस्तदा चरसंज्ञः। एतदुक्तं भवति—प्रागुक्तेन चेष्टितेन वक्ष्यमाणेनैव यद्येतानि कार्याणि शकुनेन सूचितानि, तदैतानि वृत्तान्युत वेतानि एष्याणीत्येतदर्थमुक्तम्। **उदयेन्दुयुते स्थिरर्क्ष इति।** यद्येष वर्गः स्थिरो भवति तथोदयलग्ने स्थिरराशिर्भवति। इन्दुयुतं चन्द्रसंयुक्तं स्थिरर्क्षं स्थिरराशिर्भवति, तदैव तत्स्थितं वर्तमानं तस्मिन्नेवाहनि भवति, भूतं वेति विन्द्याज्जानीयात्। चरगृहे लग्ने चरराशाविन्दुसंयुक्ते चरस्थानस्थे च शकुने यदुक्तमुद्बन्धादि तत्सर्वमेव चरं विन्द्यात् पुरस्थाद्भविष्यतीति।।३।।

अथ स्थिरचरयोर्लक्षणमाह—

**स्थिरप्रदेशोपलमन्दिरेषु सुरालये भूजलसन्निधौ च।**
**स्थिराणि कार्याणि चराणि यानि चलप्रदेशादिषु चागमाय ॥४॥**

स्थिर स्थान, पत्थर, गृह, देवालय, पृथ्वी पर, जल के समीप—इन स्थानों में स्थित शकुन हों तो स्थिर कार्य का शुभाशुभ फल होता है। यदि वे शकुन चल प्रदेश आदि में स्थित हों तो भविष्यत् कार्य के लिये सूचित करते हैं।।४।।

स्थिरप्रदेशः स्थिरस्थानम्। निश्चलम्। उपलोऽश्म। मन्दिरं गृहम्। एतेषु स्थानेषु। सुरालये देवगृहे। भूजलसन्निधौ भूमौ तथा जलसन्निधौ तत्समीपे। एतेषु स्थानेषु शकुनेषु स्थिराणि कार्याणि शुभाशुभानि भवन्ति। ये शकुनाश्चलप्रदेशादिषु चलेषु स्थिरेषु प्राणिष्वादि-ग्रहणाच्चलेषु तृणकाष्ठादिषु यानि चराणि, ते आगमायागामिने पक्षावसानानि पुनः पुर-स्ताद्भविष्यन्ति।।४।।

अथ वर्षज्ञानमाह—

**आप्योदयर्क्षक्षणदिग्जलेषु पक्षावसानेषु च ये प्रदीप्ताः ।**
**सर्वेऽपि ते वृष्टिकरा रुवन्तः शान्तोऽपि वृष्टिं कुरुतेऽम्बुचारी ॥५॥**

जलचर ( कर्क, मकर और मीन ) लग्न, जलसंज्ञक नक्षत्र ( पूर्वाषाढ़ा और शत-भिषा ), जलसंज्ञक मुहूर्त, पश्चिम दिशा, जलस्थान—इन स्थानों में तथा पक्षावसान ( अमा और पूर्णिमा ) में स्थित प्रदीप्त शकुन शब्द करें तो सभी वृष्टि करने वाले होते हैं। शान्त भी जलचारी शकुन जलादि में स्थित हों तो वृष्टि करने वाले होते हैं।।५।।

आप्योदयाः कर्कटमकरमीनाः। आप्यमृक्षं पूर्वाषाढा शतभिषक् च। आप्यं मुहूर्तं जलसंज्ञं वारुणं च। आप्या दिग्वारुणी यत्र जलं सन्निहितं तज्जलस्थानम्। एतेष्वाप्योदयर्क्ष-क्षणदिग्जलेषु ये स्थिता उत्पाताः शकुनास्तथा पक्षावसाने अमावस्यायां पौर्णमास्यां वाऽन्ते ये स्थितास्ते च दीप्ता देवदीप्ताः क्रियादीप्ताश्च भूता रुवन्तः क्रोशन्तः सर्वे निश्शेषा अपि वृष्टिकरा वृष्टिं वर्षणं कुर्वन्ति। अम्बुचारी यः शकुनो जलचरः स शान्तोऽप्याप्यादिषु स्थितो वृष्टिं कुरुते।।५।।

अथाग्नेयभयदोषज्ञानमाह—

**आग्नेयदिग्लग्नमुहूर्त्तदेशेष्वर्कप्रदीप्तोऽग्निभयाय रौति ।**
**विष्ट्यां यमर्क्षोदयकण्टकेषु निष्पत्रवल्लीषु च दोषकृत् स्यात् ॥६॥**

आग्नेय ( पूर्व और दक्षिण ) दिशा, आग्नेय ( क्रूर = मेष, सिंह, वृश्चिक, मकर और कुम्भ ) लग्न, अग्नि नामक मुहूर्त, आग्नेय ( कृत्तिका ) नक्षत्र, आग्नेय देश ( अग्नि वाला स्थान )—इन स्थानों में सूर्य से प्रदीप्त होकर शकुन शब्द करें तो अग्निभय होते हैं तथा विष्टि करण, शनि की राशि ( मकर और कुम्भ ) लग्न में हो और काँटेदार वृक्ष या पत्ररहित लता पर स्थित सूर्य से दीप्त शकुन बैठा हो तो दोष करने वाला होता है।।६।।

आग्नेयी दिक् पूर्वदक्षिणा। आग्नेयलग्नाः क्रूरराशयः। यथा मेषसिंहवृश्चिकमकरकुम्भाः। आग्नेयो मुहूर्तोऽग्निनाम। आग्नेयमपि नक्षत्रं कृत्तिकाः। आग्नेयो देशो यत्राग्निरस्ति। एतेषु स्थानेष्वर्कप्रदीप्तः शकुनो विरौति क्रोशति यदि तदाग्निभयाय भवति। **विष्ट्यामिति ।** विष्ट्यां करणे। यमः सौरः। तस्यर्क्षे मकरकुम्भौ। तयोरुदये। तथा कण्टकेषु कण्टकिवृक्षेषु। तथा निष्पत्रासु पत्ररहितासु वल्लीषु स्थितोऽर्कप्रदीप्तो दोषकृद्दोषं करोति।।६।।

अथ कलहज्ञानमाह—

**ग्राम्यः प्रदीप्तः स्वरचेष्टिताभ्यामुग्रो रुवन् कण्टकिनि स्थितश्च ।**
**भौमर्क्षलग्ने यदि नैर्ऋतीं च स्थितोऽभितश्चेत् कलहाय दृष्टः ॥७॥**

ग्राम्य, शकुन स्वर और चेष्टा से प्रदीप्त हो, बहुत जोर से शब्द करता हो, काँटेदार वृक्ष पर स्थित हो, मंगल की राशि ( मेष और वृश्चिक ) लग्न में हो, नैर्ऋत्य कोण में

स्थित हो और सम्मुख, वाम या दक्षिण पार्श्व में दिखाई दे तो कलह करता है।।७।।

ग्रामे भवो ग्राम्यः शकुनः, स च स्वरचेष्टिताभ्यां प्रदीप्तः। स्वरेण शब्देन चेष्टया वा प्रदीप्तः। उग्रस्तीव्रो रुवन् क्रोशन्। कण्टकिनि सकण्टके वृक्षे स्थितः। भौमर्क्षे मेष-वृश्चिकौ तयोरन्यतमे लग्ने। स च शकुनो यदि नैर्ऋतीं च स्थितो भवति, नैर्ऋत्यां दिशि समवस्थितः। अभितः सम्मुख उभयतश्चेद्यदि वामदक्षिणपार्श्वयोस्तदा स दृष्टोऽवलोकितः कलहाय भवति, कलहं करोति।।७।।

अथ संग्रहणमाह—

**लग्नेऽथवेन्दोर्भृगुभांशसंस्थे विदिक्स्थितोऽधोवदनश्च रौति।**
**दीप्तः स चेत्संग्रहणं करोति योन्या तया या विदिशि प्रदिष्टा ।।८।।**

कर्क लग्न में, शुक्र के नवांश में, विदिशा में स्थित होकर दीप्त शकुन नीचे की ओर मुख करके शब्द करे तो उस विदिशा में उक्त स्त्री ( 'स्त्रीणां विकल्पे बृहती कुमारी' इत्यादि से उक्त स्त्री ) के साथ समागम होता है।।८।।

अथवा इन्दोर्लग्ने कर्कटे तस्मिंश्च भृगुभांशसंस्थे। भृगोः शुक्रस्य भांशो नवांशको भृगुभांशः। कर्कटस्य तुलनवांशक इत्यर्थः। तस्मिंल्लग्नस्थे शकुनो विदिक्स्थितो विदिशमवस्थितः। तत्र चाधोवदनोऽधोमुखश्च विरौति शब्दं करोति। स चेद्यदि दीप्तः स्थानदीप्तः शब्ददीप्तश्च, तदा संग्रहणं संयोगं करोति, क्या? स्त्रिया सह। योन्या तया वा विदिशि प्रदिष्टा, तस्यां विदिशि यस्या योनिरुत्पत्तिः प्रदिष्टोक्ता: स्त्रीणां विकल्पे बृहती कुमारीत्यादि। तया सह संग्रहणं करोति। केषाञ्चित् पाठः योऽन्योऽनुयायाद्दिशिः सम्प्रदिष्टः। तस्यां दिशि अनु पश्चात् सम्प्रदिष्टः सम्यक् प्रेषितो योऽन्योऽपरो यायाद् गच्छेत् तेन सह संयोग इति।।८।।

पुनरप्याह—

**पुंराशिलग्ने विषमे तिथौ च दिक्स्थः प्रदीप्तः शकुनो नराख्यः ।**
**वाच्यं तदा संग्रहणं नराणां मिश्रे भवेत् पण्डकसम्प्रयोगः ।।९।।**

पुरुषराशि ( मेष, मिथुन, सिंह, तुला, धनु और कुम्भ ) के लग्न में, विषम ( १, ३, ५, ७, ११, १३, १५ ) तिथियों में और पूर्व आदि ( पूर्व, दक्षिण, पश्चिम और उत्तर ) दिशाओं में पुरुषसंज्ञक दीप्त शकुन हो तो पुरुषों के साथ समागम होता है। मिश्रित ( पुरुषसंज्ञक लग्न में सम तिथि हो या सम राशि के लग्न में विषम तिथि हो तथा विदिशा या दिशा में स्थित पुरुषसंज्ञक दीप्त शकुन ) हो तो नपुंसक के साथ समागम होता है।।९।।

पुंराशयो मेषादयः षड् विषमा मेषमिथुनसिंहतुलाधन्विकुम्भाः। विषमास्तिथयः संख्यया प्रतिपत् तृतीया पञ्चमी सप्तमी नवमी एकादशी त्रयोदशी पञ्चदशी चेति। नराख्यः पुरुषाख्यः शकुनो दिक्स्थितो दिशि पूर्वस्यां दक्षिणस्यां पश्चिमायामुत्तरस्यां वा स्थितः प्रदीप्तश्च यदि भवति तदा नराणां पुरुषाणां वा संग्रहणं संयोगो वाच्यं वक्तव्यम्। मिश्रे भवेत् पण्डक-

सम्प्रयोगः, पुंराश्यादिषु वर्गे मिश्रे स्थिते पुरुषराशिवर्गे लग्ने समायां तिथौ व्यत्यये वा। विदिक्स्थितः पुरुषः शकुनो विदिक्स्थितः स्त्रीसंज्ञो वा तदा पण्डकसम्प्रयोगो नपुंसकेन सह समयोगो भवति।।९।।

पुनरप्याह—

**एवं रवेः क्षेत्रनवांशलग्ने लग्ने स्थिते वा स्वयमेव सूर्ये।**
**दीप्तोऽभिधत्ते शकुनो विरौति पुंसः प्रधानस्य हि कारणं तत् ।।१०।।**

इसी प्रकार जिस समय नवांश और लग्न में रवि की राशि हो या लग्न में स्वयं सूर्य अवस्थित हो एवं उस समय शकुन शब्द करे तो प्रधान पुरुष के आगमन का कारण होता है।।१०।।

पुंराशिवर्ग इति सर्वमनुवर्तते। एवमनेन प्रकारेण रवेरादित्यस्य क्षेत्रनवांशलग्ने। रविक्षेत्रं सिंह एव। तात्कालिकगते रविक्षेत्रे सिंहेऽथवान्यस्मिन् राशौ लग्नगतं तत्काले सिंहनवांशके। अथवा स्वयमेव सूर्ये रवौ तात्कालिके लग्ने स्थिते दीप्तः शकुनो विरौति क्रोशते। तदा प्रधानस्य पुंसो मनुष्यस्य तत्कारणमागमनमभिधत्ते करोति।।१०।।

अथ प्रकारान्तरेण कर्मणां विधानमाह—

**प्रारम्भमाणेषु च सर्वकार्येष्वर्कान्विताद्भाद्गणयेद्विलग्नम्।**
**सम्पद्विपच्चेति यथा क्रमेण सम्पद्विपच्चेति तथैव वाच्या ।।११।।**

सभी कार्यों के प्रारम्भ में सूर्ययुत राशि से लग्न राशि तक गिने। जिस राशि में रवि बैठा हो वह सम्पत्, द्वितीय राशि विपत्, तृतीय सम्पत् इत्यादि क्रम से लग्नराशि तक गिने। सम्पत् राशि में कार्य की सम्पत्ति और विपत् राशि में कार्य की विपत्ति जाननी चाहिये।।११।।

सर्वकार्येषु सर्वकर्मसु प्रारम्भमाणेषु क्रियमाणेषु अर्कान्विताद् भात्, अर्क आदित्यस्तेनान्वितं युक्तं यद्भं राशिस्तस्मादारभ्य विलग्नराशिं यावद् गणयेदिति सम्पद्विपच्चेति। यस्मिन् राशावर्कः स्थितः स सम्पत्, ततो द्वितीयो विपत्संज्ञः, ततस्तृतीयः सम्पत्संज्ञः। एवं क्रमेण गणयेद्यावल्लग्नराशिम्। येन लग्नप्रारम्भस्तथा तेनैव प्रकारेण कर्मणां सम्पद्विपच्चेति वाच्या। एवं कार्याणां सम्पत्तिर्विपत्तिश्च विज्ञातव्या।।११।।

अथागतस्याकृतिज्ञानमाह—

**काणेनाक्ष्णा दक्षिणेनैति सूर्ये चन्द्रे लग्नाद् द्वादशे चेतरेण।**
**लग्नस्थेऽर्के पापदृष्टेऽन्ध एव कुब्जः स्वर्क्षे श्रोत्रहीनो जडो वा ।।१२।।**

**क्रूरः षष्ठे क्रूरदृष्टो विलग्नाद् यस्मिन् राशौ तद्गृहाङ्गे व्रणोऽस्य।**
**एवं प्रोक्तं यन्मया जन्मकाले चिह्नं रूपं तत्तदस्मिन् विचिन्त्यम् ।।१३।।**

यदि लग्न से बारहवें स्थान में सूर्य हो तो दाहिनी आँख से काना, चन्द्र हो तो बाईं

आँख से काना, लग्नस्थित सूर्य पापग्रह ( सूर्य, मंगल और शनि ) से देखा जाता हो तो अन्धा, सिंह लग्न में स्थित सूर्य हो तो कुबड़ा, बहरा और मूर्ख तथा जिस राशि के लग्न से पापग्रह ( सूर्य, मंगल और शनि ) छठे स्थान में स्थित होकर पापग्रह से देखा जाता हो, उस राशि के सम्बन्धी अङ्ग ( 'कालाङ्गानि वराङ्ग' इत्याद्युक्त अंग ) में व्रणयुत पुरुष का समागम होता है। इस प्रकार जन्म में जो मैंने कहा है, उन सबका इस प्रकरण में विचार करना चाहिये।।१२-१३।।

**काणेनाक्ष्णा दक्षिणेनेति**। येन सह संयोगो ज्ञात: स च कीदृगिति। यदि तात्कालिकाल्लग्नात् सूर्य आदित्यो द्वादशे स्थाने स्थित:, स पुरुषो दक्षिणेनाक्ष्णा काण एवाऽऽगच्छति। चन्द्रे लग्नाद् द्वादशे स्थाने स्थिते चेतरेण वामेनाक्ष्णा काण एवेति। अर्थादेवार्कचन्द्रयोर्द्वयोरपि द्वादशयोरन्ध एव। लग्नस्थेऽर्के प्राग्लग्नस्थिते सूर्ये पापाभ्यां भौमसौराभ्यामीक्षितेऽन्ध एव नेत्रहीन:। स्वर्क्षे सिंहलग्नगते तत्रस्थे चार्के कुब्ज: श्रोत्रहीनो वधिरो जडो वा मूर्ख: प्रभवति।

**क्रूर: षष्ठ इति**। विलग्नात् स्पष्टलग्नात् षष्ठस्थाने क्रूर: पापग्रह: आदित्याङ्गारकशनैश्चराणामन्यतमो भवति। स च क्रूरदृष्ट: पापावलोकितो यदि भवति, तदा तद्गृहाङ्गे। स च षष्ठस्थानस्थो राशि: कालपुरुषस्य यस्मिन् 'कालाङ्गानि वराङ्गम्' इत्यादिना ग्रन्थेनोक्त:। तस्मिन्नङ्गे तस्य व्रणो वक्तव्य:। एवमनेन प्रकारेण जन्मकाले जातकसमये यदुक्तं कथितं चिह्नं लक्ष्म रूपमाकारं तत्सर्वमस्मिन् प्रकरणे चिन्त्यं चिन्तनीयम्। यथा—'त्रिकोणगे ज्ञे विबलैस्तथाऽपरैर्मुखाङ्घ्रिहस्तैर्द्विगणैस्तदा भवेत्'। तथा—

सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तोऽत्र जात:
कुब्ज: स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे।
पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे
सन्धौ पापे शशिनि च जड: स्यान्न चेत् साम्यदृष्टि:।।
सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने।
धीनवमोदयगैश्च दृकाणै: पापयुतैरभुजाङ्घ्रिशिरा: स्यात्।।

रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते
नयनरहित: सौम्यासौम्यै: सबुद्बुदलोचन:।
व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-
रशुभगदिता योगा याप्या भवन्ति शुभेक्षिता:।।

एवमादि। तथानिष्टयोगाध्यायोक्तं सर्वं चिन्तनीयमिति।।१३।।

अथाऽऽगतस्याख्याज्ञानमाचार्य: करोति। तच्चाल्पबहुलं स्वल्पग्रन्थं मृदुबुद्धीनामगम्यमतोऽस्माभिस्तदेव बोधियात्रायां यवनेश्वरकृतश्चाक्षरकोशो व्याख्यायते। तत्रादावेव प्रयोजनप्रदर्शनार्थमाह—

अत: परं लोकनिरूपितानि द्रव्येषु नानाक्षरसंग्रहाणि ।
इष्टप्रणीतानि विभाजितानि नामानि केन्द्रक्रमश: प्रवक्ष्ये ।।१।।

अब प्रश्नज्ञान के बाद द्रव्यों ( धातु, मूल और जीवों ) में लोकप्रसिद्ध अनेक अक्षरों से संगृहीत, इष्ट ( नारायण, अर्क, वसिष्ठ, पराशर, मय आदि ) से निर्मित, विभागीकृत नामों को केन्द्र के क्रम से कहते हैं।।१।।

अतोऽस्मात् प्रश्नज्ञानात् परमनन्तरं लोकनिरूपितानि लोकैर्जनैर्निरूपितानि सर्वलोकप्रसिद्धानि द्रव्येषु धातुमूलजीवेषु नानाक्षरेभ्योऽनेकप्रकारवर्णेभ्य: संग्रहो येषां तानि। संग्रह एकीकरणम्। इष्टप्रणीतानि, इष्टैराप्तैर्नारायणार्कवसिष्ठपराशरमयप्रभृतिभि: प्रणीतानि निर्मितानि। विभाजितानि विभागीकृतानि नामानि संज्ञारूपाण्यभिधानानि केन्द्रक्रमशश्चतुष्टयपरिपाट्या प्रवक्ष्ये कथयिष्ये।।१।।

तत्र क्रमज्ञानमाह—

लग्नाम्बुसंस्थास्तनभ: स्थितेषु क्षेत्रेषु ये लग्नगता गृहांशा: ।
तेभ्योऽक्षराण्यात्मगृहाश्रयाणि विन्द्याद् ग्रहाणां स्वगणक्रमेण ।।२।।

लग्न, चतुर्थ लग्न, सप्तम लग्न और दशम लग्न में जिस राशि का नवांश हो, उन पर से अपनी-अपनी राशि के आश्रित अक्षरों और ग्रहों के अपने गण के क्रम से अक्षरों को जानना चाहिये।।२।।

लग्नसंस्थो विलग्नस्थ:। अम्बुसंस्थश्चतुर्थस्थानस्थ:। अस्तस्थित: सप्तमस्थ:। नभ:स्थितो दशमस्थ:। एतेषु च क्षेत्रेषु राशिषु ये लग्नगता गृहांशा:। गृहाणां राशीनां मेषादीनां येषां नवभागा लग्नगता: प्राग्लग्नादिष्वाश्रितास्तेभ्यो गृहांशेभ्योऽक्षराणि वर्णा आत्मगृहाश्रयाणि—आत्मगृहं स्वभवनमाश्रय: स्थानं येषां तानि विन्द्याद् जानीयात्, ग्रहाणां रव्यादीनां स्वगणक्रमेण स्ववर्गपरिपाट्या।।२।।

अथ ग्रहाणां वर्गानाह—

कवर्गपूर्वान् कुजशुक्रचान्द्रिजीवार्कजानां प्रवदान्त वर्गान् ।
यकारपूर्वा: शशिनो निरुक्ता वर्णास्त्वकारप्रभवा रवे: स्यु: ।।३।।

क ख ग घ ङ—मंगल के, च छ ज झ ञ—शुक्र के, ट ठ ड ढ ण—बुध के, त थ द ध न—बृहस्पति के, प फ ब भ म—शनि के, य र ल व श ष स ह—चन्द्र के और अ आ इ ई उ ऊ ए ऐ ओ औ अं अ:—सूर्य के वर्ग हैं।।३।।

कवर्गपूर्वान् कवर्गाद्यान् वर्गान् यथाक्रमेण कुजादीनां ग्रहाणां परिपाट्या प्रवदन्ति मुनय:। तद्यथा—कवर्ग: कुजस्य भौमस्य। चवर्ग: शुक्रस्य। टवर्गश्चान्द्रेर्बुधस्य। तवर्गो जीवस्य गुरो:। पवर्गोऽर्कजस्य सौरस्य। यकारपूर्वा यकाराद्यष्टौ वर्णा: शशिनश्चन्द्रस्य निरुक्ता: कथिता:। अकार: प्रभव आद्यो येषां वर्णानामक्षराणां ते अकारप्रभवा रवेरर्कस्य

स्युर्भवेयुः। तद्यथा—अ आ इ ई उ ऊ ए ऐ ओ औ अं अः रवेः। क ख ग घ ङ भौमस्य। च छ ज झ ञ शुक्रस्य। ट ठ ड ढ ण बुधस्य। त थ द ध न गुरोः। प फ ब भ म सौरस्य। य र ल व श ष स ह चन्द्रस्य।।३।।

अथ राशिवशेन द्रेष्काणवशेन च नामाक्षरसंख्याज्ञानमाह—

द्रेष्काणवृद्ध्या प्रवदन्ति नाम त्रिपञ्चसप्ताक्षरमोजराशौ।
युग्मे तु विन्द्याद् द्विचतुष्कषट्कं नामाक्षराणि ग्रहदृष्टिवृद्ध्या ।।४।।

द्रेष्काण की वृद्धि से नाम कहते हैं; जैसे—विषम राशि के प्रथम द्रेष्काण में तीन अक्षरों का, द्वितीय द्रेष्काण में पाँच अक्षरों का और तृतीय द्रेष्काण में सात अक्षरों का नाम जानना चाहिये। साथ ही सम राशि के प्रथम द्रेष्काण में दो अक्षरों का, द्वितीय द्रेष्काण में चार अक्षरों का और तृतीय द्रेष्काण में छः अक्षरों का नाम जानना चाहिये। ग्रहदृष्टि की वृद्धि से नामाक्षर होते हैं। यहाँ पर दो प्रकार से नामाक्षर लाते हैं, प्रथम—स्थितिवश और द्वितीय—दृष्टिवश। दृष्टिवश नामाक्षर लाने में दृष्टिबल का विचार करना चाहिये।।४।।

द्रेष्काणो राशित्रिभागः। तस्य वृद्ध्या वर्धनेनौजराशौ विषमर्क्षे त्रिपञ्चसप्ताक्षरं नाम। प्रथमे त्र्यक्षरम्, द्वितीये पञ्चाक्षरम्, तृतीये सप्ताक्षरमिति। युग्मे समराशौ लग्नगते प्रथमे द्रेष्काणे द्व्यक्षरं नाम विन्द्याज्जानीयात्। द्वितीये चतुष्कं चतुरक्षरम्। तृतीये षट्कं षडक्षरम्। तानि च नामाक्षराणि नामवर्णा ग्रहदृष्टिवृद्ध्या। यतः केन्द्रस्थराशिभिरक्षराण्यानीयन्ते। केन्द्र-चतुष्टयस्य प्रस्तुतत्वात् किल योगद्वयेनाक्षिप्तमिदं शास्त्रम्। तत्रैकः स्थितियोगः, द्वितीयो दृष्टियोगः। स्थितियोगं परिहृत्य दृष्टियोगेनानीयन्ते। दृष्टियोगे तु बलाबलविचारः। उक्तं च—

त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः।
रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः।। इति।

एवं ग्रहदर्शनवृद्ध्या नामाक्षराण्यानीयन्ते।।४।।

अथ नवांशकवशेन नामाक्षरसङ्ख्याज्ञानमाह—

वर्गोत्तमे द्व्यक्षरकं चरांशे स्थिरर्क्षभागे चतुरक्षरं तत्।
ओजेषु चैभ्यो विषमाक्षराणि स्युर्द्विस्वभावेषु तु राशिवच्च ।।५।।

चर राशि में प्रथम नवांश, स्थिर राशि में पञ्चम नवांश और द्विस्वभाव राशि में नवम नवांश वर्गोत्तम संज्ञक हैं। यदि सम राशियों में चर राशि का वर्गोत्तम नवांश हो तो दो अक्षरों का, स्थिर राशि का वर्गोत्तम नवांश हो तो चार अक्षरों का, विषम राशियों में चर राशि का वर्गोत्तम नवांश हो तो तीन अक्षरों का और स्थिर राशि का वर्गोत्तम नवांश हो तो पाँच अक्षरों का नाम होता है। द्विस्वभाव राशियों में राशि की तरह ही नामाक्षरों की भी संख्या होती है। जैसे—द्विस्वभाव राशियों में विषम राशि ( मिथुन या धनु ) वर्गोत्तम नवांश हो तो तीन या सात अक्षरों का और सम राशि ( कन्या या मीन ) का नवांश हो तो चार-छः अक्षरों का नाम होता है।।५।।

'वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगा:' इति। वर्गोत्तमाख्या नवांशका उक्ता:। अग्रत ओजशब्दकरणादिह समराशावेव ज्ञायते। समराशौ कर्कटे मकरे वा यदा वर्गोत्तमश्चरांशो भवति, तदा द्व्यक्षरं नाम। स्थिरर्क्षभागे स्थिरराशौ वृषसिंहवृश्चिककुम्भानामन्यतमे यदा स्थिरांशो वर्गोत्तमो भवति, तदा चतुरक्षरं नाम। ओजेषु विषमराशिषु मेषे तुले वा एभ्यो वर्गोत्तमांशकेभ्यो विषमाक्षराणि स्युर्भवेयु:। एतदुक्तं भवति—यदा विषमराशौ वर्गोत्तमश्चरांशो भवति, तदा विषमाक्षराणि त्रीणि नाम्नि भवेयु:। अथ तस्मिन्नेव वर्गोत्तम: स्थिरांशो भवति, तदा विषमाणि पञ्चाक्षराणि नाम्नि भवेयु:। द्विस्वभावेषु राशिवच्च, द्विस्वभावेषु द्विमूर्तिषु लग्नेषु राशिवद्राशितुल्यं स्यात्। एतदुक्तं भवति—द्विस्वभावेषु मिथुनधनुषोरन्यतरे यदि विषमांशको वर्गोत्तमो भवति, तदा त्र्यक्षरं सप्ताक्षरं नामेति। अथ द्विस्वभावेषु समो वर्गोत्तमांशो भवति कन्यामीनयोरन्यतरस्तदा चतुरक्षरं नाम क्षडक्षरं नाम। यत उक्तम्—

त्रिपञ्चसप्ताक्षरमोजराशौ युग्मे तु विन्द्याद् द्विचतुष्कषट्कम्।। इति।

वर्गोत्तमांशो यस्मिन् द्रेष्काणभागे स्थितस्तद्वशाद् वाच्यमिति।।५।।

अत्रैव विशेषमाह—

द्विमूर्तिसंज्ञे तु वदेद् द्विनाम सौम्येक्षिते द्विप्रकृतौ च राशौ।
यावान् गण: स्वोदयगोऽशकानां तावान् ग्रह: संग्रहकेऽक्षराणाम् ।।६।।

द्विस्वभाव राशि या सौम्य ( बुध ) से दृष्ट द्विस्वभाव राशि में दो नाम कहना चाहिये तथा लग्नराशि में जितने नवांशों की संख्या व्यतीत हो गई हो, उतनी नामाक्षरों की संख्या कहनी चाहिये।।६।।

द्विमूर्तिसंज्ञे द्विस्वभावे राशौ द्विनाम वदेद् ब्रूयात्। द्वे नामनी यस्य। तथा द्विप्रकृतौ द्विस्वभावराशौ सौम्येक्षिते बुधसन्दृष्टे, चशब्दाद् द्विनाम वदेत्। यत्परिमाणस्य यावान् अंशकानां नवभागानां गण: समूह: स्वोदयग: प्रश्नसमयेऽतिक्रान्तस्तावानेव गण: समूहोऽक्षराणां वर्णानां संग्रहके नाम्नि भवति।।६।।

अथ संयोगाक्षरमाह—

संयोगमादौ बहुलेषु विन्द्यात् कूटेषु संयोगपरं वदन्ति।
स्वोच्चांशके द्विष्कृतमृक्षयोगाद् गुर्वक्षरं तद्भवनांशके स्यात् ।।७।।

बहुल ( विषम राशियों ) में नाम के आदि को संयुक्ताक्षर जानना चाहिये। जैसे—श्रीधर, क्षीर, स्मर आदि। कूट ( सम राशियों ) में नाम के अन्त में संयुक्ताक्षर कहते हैं। जैसे—पद्म, धर्म, वत्स आदि। अपने उच्चांश में राशि के योग से एक अक्षर दो बार आता है। यथा—विषम राशि में अपना उच्चांश हो तो प्रथम आदि विषम अक्षर दो बार आता है। जैसे—दरद, दामोदर आदि। यदि सम राशि में अपना उच्चांश हो तो द्वितीय आदि सम अक्षर दो बार आता है; जैसे—देवदत्त, धराधर आदि। लग्नस्थित नवांश राशि में गुरु अक्षर होता है। जैसे—लग्नस्थित नवांश विषम राशि में हो तो नाम का विषम

अक्षर संयुक्त होता है; जैसे—कपित्थ, अश्वत्थ आदि। सम राशि में हो तो सम अक्षर संयुक्त होता है, जैसे—घग्घ, शुद्ध, शुद्धोदन आदि।।७।।

बहुलेष्वोजेषु विषमराशिषु नाम्नामादौ प्रथममेव संयोगं संयोगाक्षरं विन्द्याज्जानीयात्। वर्णद्वयसंयोगः संश्लेषः। हलोऽनन्तराः संयोग इति केचित्। बहुभेदाः केचित्। द्विष्कृताः केचिद् गुरवः। केचित् संयोगान्तवद् द्विष्कृताः; यथा—यप्पा, वल्ला, यस्सा, लस्सा। गुरवो द्वाभ्यां प्रकाराभ्यां भवन्ति। वर्गाक्षरैः स्वतनुना। प्रथमप्रथमैः। तृतीयतृतीयैः। पञ्चम-पञ्चमैः। प्रथमप्रथमैर्यथा—कक्कः, दत्तः, कुट्टः। तृतीयतृतीयैर्यथा—लल्लः, गग्गः, दद्दः, जज्जः। पञ्चमपञ्चमैः—शङ्कः, नण्णः, धम्मः। परतनुना प्रथमद्वितीयैस्तृतीयचतुर्थैश्च। प्रथम-द्वितीयैर्यथा—खुक्खः, इच्छः, डित्थः। तृतीयचतुर्थैर्यथा—वाग्घः, दाड्ढः, शुद्धः। एते गुरवः। अन्येषां यथा परतनुना। पञ्चमप्रथमैः पञ्चमद्वितीयैः पञ्चमतृतीयैः पञ्चमचतुर्थैश्च। एते संयोगा एव। पञ्चमप्रथमैर्यथा—षङ्कः। पञ्चमद्वितीयैर्यथा—शङ्खः। पञ्चमतृतीयैर्यथा—शृङ्गम्। पञ्चमचतुर्थैर्यथा—सङ्घः। केचिदन्यथा कथयन्ति, यथा—स्वतनुना संयोगास्तेऽपि द्विष्कृता उच्यन्ते। यथा धम्मः, दत्तः, कक्कः। प्रथमद्वितीयैस्तृतीयचतुर्थैश्च संयोगः। संयोगसंज्ञास्ते गुरव उच्यन्ते। अन्ये ये संज्ञास्ते संयोगा एव न भवन्ति, यथा—धर्मः, वत्सः। आदि-संयोगो यथा—श्रीधरः, क्षीरः, स्मर इति। एवं संयोगमादौ बहुलेषु विन्द्यादिति। कूटेषु संयोगपरं वदन्ति। कूटेषु समराशिषु संयोगपरम्। संयोगः परो यस्मिंस्तत्संयोगपरं वदन्ति कथयन्ति तन्नारायणादयः। द्व्यक्षरे नाम्नि यथा—पद्मम्, धर्मः, वत्स इत्येवमादयः। चतुरक्षरे नाम्नि यथा—वसुदत्तः, वसुगुप्त इत्येवमादयः। **स्वोच्चांशके द्विष्कृतमिति**। स्वश्चा-सावुच्चांशः स्वोच्चांशः।

अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः।। इति।

तस्मिन् स्वोच्चांशके द्विष्कृतमक्षरं नाम्नि भवति। द्वौ वारौ कृतौ द्विष्कृतौ। कथम्? ऋक्षयोगाद्राशियोगाद्धेतोः। अक्षरदाता ग्रहः स्वोच्चांशकस्थो द्विष्कृतमक्षरं करोति। एतदुक्तं भवति—पृच्छालग्ने यदौजराशिस्तदौजाक्षरं द्विष्कृतं भवति, यथा—दरदः, दामोदरः। अथ युग्मराशिस्तदा युग्माक्षरं द्विष्कृतं भवति, यथा—देवदेवः, धराधरः। द्व्यक्षरे यथा—कप्पः, यप्पः, वल्ल इत्येवमादयः। गुर्वक्षरं तद्भवनांशके स्यात्। गुर्वक्षरं यस्मिन् नाम्नि तद्गुर्वक्षरम्। तदित्यनेन लग्नं परामृश्यते। तस्य भवनस्यांशकः। तस्मिन्नक्षरे सति गुर्वक्षरं स्याद्भवेत्। अत्र ऋक्षयोगादिभिर्वर्तते। ओजराशौ ओजाक्षरमेव गुर्वक्षरं भवति—कपित्थः, अश्वत्थः। युग्मराशौ युग्माक्षरमेव, यथा—खुक्खः, घग्घः, शुद्धः। चतुरक्षरे शुद्धौदन इत्येवमादयः।।७।।

अन्यदपि विशेषमाह—

मात्रादियुक् स्याद् ग्रहयुक्त्रिकोणे द्रेष्काणपर्यायवदक्षरेषु।
नभोबलेषूर्ध्वमधोऽम्बुजेषु ज्ञेयो विसर्गोऽस्तबलान्वितेषु ।।८।।

लग्न से पञ्चम या नवम स्थान ग्रहों ( सूर्यादि ) से युत हो तो नाम के आदि का अक्षर मात्रायुक्त होता है तथा द्रेष्काण के पर्यायतुल्य अक्षर मात्रा से युक्त होता है। यथा—सम राशि का द्रेष्काण हो तो सम अक्षर मात्रायुक्त होता है। जैसे—ईश्वर आदि। विषम राशि का द्रेष्काण हो तो विषम अक्षर मात्रायुक्त होता है, जैसे—श्रीधर आदि। यदि लग्न से दशम स्थान बली हो तो ऊर्ध्व मात्रा से युक्त नाम के आदि का अक्षर श्रीधर, वासुदेव, वैश्रवण, शौण्ड आदि एवं चतुर्थ स्थान बली हो तो अधोमात्रायुत नाम के आदि का अक्षर ( सुहिरण्य, शूरवर्मा आदि ) और सप्तम स्थान बली हो तो विसर्गयुत नाम के आदि का अक्षर होता है।।८।।

पृच्छालग्नस्य मेषादेस्त्रिकोणे नवमे पञ्चमे वा स्थाने ग्रहैरादित्यादिभिर्युग्योगो यथा भवति तथा मात्रादियुक् स्यात्। नाम्नो मात्राभिरादौ प्रथमं युग्योग: स्याद्भवेत्। यथा—शिव:। **द्रेष्काणपर्यायवदक्षरेष्विति**। द्रेष्काणानां पर्यायो द्रेष्काणपर्याय:। प्रसिद्धोच्चारणम्। स यथा भवति तद्वदक्षरेषु मात्रादियोगो भवति। युग्मद्रेष्काणेषु युग्माक्षरेषु मात्रादियोगो भवति। ओजाक्षरेषु यथा—श्रीधर:। युग्मेषु यथा—ईश्वर:। नभोबलेषूर्ध्वमिति। नभसि दशमे स्थाने राशयो ये बलिनस्ते नभोबलिन:। तथा चोक्तम्—

मनुष्यरूपा बलिनो विलग्नाश्चतुष्पदाश्चाक्षरमध्यसंस्था:।
जलोद्भवाख्या बलिनो जलस्था: कीटोऽस्तगो व्योमतले द्विमूर्ता:।।

अथ—

कण्टककेन्द्रचतुष्टयसंज्ञा: सप्तमलग्नचतुर्थखभानाम्।
तेषु यथा विहितेषु बलाढ्या: कीटनराम्बुचरा: पशवश्च।। इति।

तेषु नभोबलेषूर्ध्वमात्राक्षरमुशन्ति कथयन्ति। यथा—श्रीवत्स:, वासुदेव:, वैश्रवण:, शौण्ड:। **अधोऽम्बुजेष्विति**। अम्बुजेषु चतुर्थस्थानेषु बलवत्सु अधोमात्राक्षरं भवति। यथा—सुहिरण्य:, शूरवर्मा। **ज्ञेयो विसर्गोऽस्तबलान्वितेष्विति**। अस्तबलान्वितेषु सप्तमे स्थाने बलवति विसर्गो विसर्जनीयो ज्ञेयो ज्ञातव्य:।।८।।

अन्यदप्याह—

शीर्षोदयेषूर्ध्वमुशन्ति मात्रामधश्च पृष्ठोदयशब्दितेषु।
तीर्यक्च विन्द्यादुभयोदये तां दीर्घेषु दीर्घामितरेषु चान्याम् ।।९।।

**शीर्षोदय राशि लग्न में हो तो ऊर्ध्व मात्रा ( ओ, औ ), पृष्ठोदय राशि लग्न में हो तो अधो मात्रा ( उ, ऊ ), उभयोदय राशि लग्न में हो तो तिर्यक् मात्रा ( ए, ऐ ) और दीर्घ राशि ( सिंह, कन्या, तुला और वृश्चिक ) लग्न में हो तो दीर्घ मात्रा ( आ, ई, ऊ, ऐ, ओ, औ ) होंती है। अन्य राशि ( मध्य = मिथुन, कर्क, धनु और मकर, ह्रस्व = मेष, वृष, कुम्भ और मीन ) लग्न में हो तो अन्य मात्रा ( अ, इ और उ ) होती है।।९।।**

शीर्षोदया मूर्धोदयाः। तथा चोक्तम्—

शीर्षोदया मानुषसर्वरूपाः ससिंहकीटा यवनैर्निरुक्ताः।
मत्स्यद्वयं तूभयतः प्रवृत्तं पृष्ठेन शेषास्तु सदोदयन्ति।।

तथा च—

गोजाश्विकर्किमिथुनाः समृगा निशाख्याः
पृष्ठोदया विमिथुनाः कथितास्त एव।
शीर्षोदया दिनबलाश्च भवन्ति शेषा
लग्नं समेत्युभयतः पृथुरोमयुग्मम्।। इति।

एवं शीर्षोदयेषु लग्नेषूर्ध्वं मात्रामुशन्ति कथयन्ति। यथा—ओ औ। पृष्ठोदयशब्दिता ये राशयस्तेषु पृष्ठोदयसंज्ञितेष्वधो मात्रामुशन्ति कथयन्ति, यथा—उ ऊ। **तिर्यक् चेति**। उभयोदयो मीनस्तस्मिन् तां मात्रां तिर्यक् च विन्द्याद् जानीयात्। ए ऐ। यथा—देवदेव, ऐन्द्र इत्यादि। **दीर्घेषु दीर्घामिति**। दीर्घेष्वायतेषु राशिषु। तां मात्रां दीर्घां विन्द्यात्। यथा—आ ई ऊ ए ऐ ओ औ। इतरेष्वन्येषु मध्यह्रस्वेष्वतोऽन्यां परिशिष्टां ह्रस्वामिति। यथा—अ इ उ। अत्र दीर्घाः सिंहकन्यातुलवृश्चिकाः। मध्या मिथुनकर्किधन्विमकराः। ह्रस्वा मेषवृषकुम्भमीनाः। तथा चोक्तम्—

आद्यन्तराश्योरुदयप्रमाणं द्वौ द्वौ मुहूर्तौ नियतं प्रदिष्टम्।
क्रमोत्क्रमाभ्यामतिपञ्चमं स्याच्चक्रार्द्धयोर्विद्ध्युदयप्रमाणम्।।
एवं प्रमाणानि गृहाणि बुद्ध्या ह्रस्वानि मध्यानि तथायतानि।
चक्राङ्गभेदैः सदृशीकृतानि मार्गप्रमाणान्यपि कल्पयन्ति।। इति।

तथा च—

पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं च तत्। इति।।९।।

अत्रैव विशेषमाह—

प्राग्लग्नतोयास्तनभःस्थितेषु भेष्वंशकेभ्योऽक्षरसंग्रहः स्यात्।
क्रूरोऽक्षरं हन्ति चतुष्टयस्थो दृष्ट्यापि मात्राञ्च त्रिकोणगो वा ।।१०।।

**लग्न, चतुर्थ, सप्तम और दशम स्थानस्थित नवांशों के द्वारा नामाक्षरों का संग्रह होता है तथा पाप ग्रह केन्द्र या त्रिकोण में स्थित हो तो अथवा पाप ग्रह की दृष्टि से भी अक्षर का नाश होता है।।१०।।**

प्राग्लग्नं विलग्नम्। तोयसंज्ञश्चतुर्थः। अस्तः सप्तमः। नभःसंज्ञो दशमः। एतेषु स्थानेषु स्थिता राशयः। भशब्देन राशय उच्यन्ते। तेषु भेषु तथाभूतेष्वेव येंऽशका नवभागास्तेभ्योऽक्षरसंग्रहो वर्णसमुच्चयो नाम्नि स्यात्। **क्रूरोऽक्षरमिति**। क्रूरः पापो ग्रहश्चतुष्टयस्थः केन्द्रस्थोऽक्षरं वर्णं हन्त्यपहरति। स एव क्रूरस्त्रिकोणगो दृष्ट्या दर्शनेनापि मात्रां हन्ति। नवपञ्चमे त्रिकोण इति। अपिशब्दः समुच्चये। वाशब्दो विकल्पे।।१०।।

अन्यद्विशेषमाह—

शुभग्रहस्तूर्जितवीर्यभागी स्थानांशतुल्याक्षरद: स चोक्त: ।
पश्यन् स्थित: केन्द्रत्रिकोणयोर्वा स्वोच्चेऽपि वर्णद्वयमात्मभागे ।।११।।

अत्यन्त वीर्यशाली शुभ ग्रह जिस राशि के जितने संख्यक नवांश पर स्थित हो, तत्तुल्य अक्षरों को देता है। वही अत्यन्त बलशाली शुभ ग्रह केन्द्र, त्रिकोण, अपने उच्च या अपने नवांश में स्थित होकर देखा जाता हो तो दो अक्षर देता है।।११।।

शुभग्रह: सौम्य:। तुशब्द: समुच्चये। स चोर्जितमतीव वीर्यं भजति तच्छील:। ऊर्जित-वीर्यभागी। स च स्थानांशतुल्याक्षरद:। यस्मिन् स्थाने यावत्संख्यांशे नवभागे स्थित-स्तत्तुल्याक्षराणि ददाति। एवं तत्तुल्याक्षरद उक्त: कथित:। **पश्यन् स्थित इति।** अथवा स एव शुभग्रह ऊर्जितवीर्यभागी केन्द्रेषु त्रिकोणयोर्नवपञ्चमयोर्वा स्थित: पश्यन्नवलोकयन्। स्वोच्चे आत्मीयोच्चराशौ वा स्थित: पश्यन्नात्मभागे स्वे नवांशके स्थित: पश्यन् वर्णद्वय-मक्षरद्वयमपि ददाति। अपिशब्दो विकल्पार्थ:।।११।।

अन्यद्विशेषमाह—

क्षेत्रेश्वरे क्षीणबलेंऽशके च मात्राक्षरं नाशमुपैति तज्जम् ।
असम्भवेऽप्युद्भवमेति तस्मिन् वर्गाद्यमुच्चांशयुजीशदृष्टे ।।१२।।

लग्न का स्वामी और नवांश बलहीन हो तो उस उत्पन्न मात्राक्षर का नाश होता है। यदि वही लग्नस्वामी और नवांश असम्भव ( बलहीन का असम्भव अर्थात् बली ) हो और उच्चस्थित नवांशस्वामी से देखा जाता हो तो मात्राक्षर की उत्पत्ति होती है।।१२।।

क्षेत्रेश्वरे लग्नस्वामिनि क्षीणबले परिक्षीणवीर्ये क्षीणांशके क्षीणनवभागे तज्जं मात्राक्षरं नाशमुपैति। मात्रा चाक्षरं च तन्मात्राक्षरम्। तस्माज्जातम् उत्पन्नं तज्जम्। नाशमुपैति क्षयं प्राप्नोति। **असम्भवेऽपीति।** तस्मिन्नेव क्षीणेश्वरे क्षीणबलांशके चासम्भवे तस्य मात्राक्षरस्य नाश उद्भवमेत्युद्भूतिमेति लभते। किं वर्गाद्यं वर्गप्रथमम्, तस्मिन्। कीदृशे? उच्चांशयुजि उच्चस्थे तथेशदृष्टे स्वामिनावलोकिते।।१२।।

अनिश्चयीकरणमाह—

केन्द्रे यथास्थानबलप्रकर्षं क्षेत्रस्य तत्क्षेत्रपतेश्च बुद्ध्वा ।
कार्योऽक्षराणामनुपूर्वयोगो मात्रादिसंयोगविकल्पना च ।।१३।।

केन्द्र में तथा राशि और राशिपति का स्थान और बल की उत्कृष्टता को जान कर अक्षरों का आनुपूर्विक संयोग करना चाहिये। साथ ही मात्रा आदि के संयोग की भी कल्पना करनी चाहिये।।१३।।

केन्द्रे लग्नचतुर्थसप्तमदशमानामन्यतमे। क्षेत्रस्य राशे:। तत्क्षेत्रपतेश्च तत्स्वामिन:। यथास्थानबलप्रकर्षम्, स्थानं च बलं च स्थानबले तयो: प्रकर्ष उत्कृष्टता। स्थानबलेन

प्रथमो लभ्यते, दृष्टिबलेन द्वितीयादयः। एवं बुद्ध्वा ततोऽक्षराणां वर्णानामनुपूर्वयोगः। अनुपूर्वेण अनुक्रमेण योगः संयोगः कार्यः कर्तव्यः। तथा मात्रादिसंयोगविकल्पना च कार्या। मात्रा आदिर्यस्य स मात्रादिसंयोगस्तस्य विकल्पना संयोगविकल्पना आदिसंयोगोऽन्तसंयोगश्च। एतदुक्तं भवति—अधोमात्रा ऊर्ध्वमात्रास्तिर्यङ्मात्राश्च संयोगविकल्पनया कार्याः।।१३।।

अथांशकक्रमेण राशीनामक्षराण्याह—

तत्रादिराश्यादिचतुर्विलग्नमाद्यंशकादिक्रमपर्ययेण ।
ग्रहांशकेभ्यः स्वगणाक्षराणामन्वर्थने प्राप्तिरियं विधार्या ।।१४।।

वहाँ प्रथम लग्नराशि, फिर उससे चतुर्थ राशि आदि के प्रथम नवांश आदि क्रम से नवांशाधिपति ग्रहों के अपने-अपने वर्गाक्षरों के संयोजन में यह निष्पत्ति करनी चाहिये। अग्रिम पद्य से इसका अर्थ स्पष्ट होता है।।१४।।

तत्र तस्मिन्नामानयने। आदिराश्यादि। आदिराशिर्मेषस्तदादि तत्प्रथमं यच्चतुर्विलग्नं मेषकर्कितुलामकराख्यं तस्याद्यंशकादिक्रमपर्ययेण, प्रथमनवांशकपरिपाट्या ग्रहांशकेभ्यो नवग्रहभागेभ्यः स्वगणाक्षराणां स्ववर्गकथितवर्णानां 'कवर्गपूर्वान् कुजशुक्रचान्द्रिजीवार्कजानाम्' इत्यनेन विहितानामन्वर्थने प्राप्तिर्निष्पत्तिरियं विधार्या कर्तव्या।।१४।।

अथादिराश्यादिक्रमेण वर्णानाह—

मेषे ककारो हिबुके यकारस्तुले चकारो मकरे पकारः ।
मेषे छकारो हिबुकेऽप्यकारस्तुले खकारो मकरे फकारः ।।१५।।

जैसे कि लग्न में मेष राशि और प्रथम नवांश हो तो उससे चतुर्थ-चतुर्थ क्रम से मेष, कर्क, तुला और मकर राशियाँ हुईं। मेष में प्रथम नवांश का स्वामी मंगल होता है। उसके वर्ग का प्रथम अक्षर ककार आता है। चतुर्थ राशि ( कर्क ) का प्रथम नवांश स्वामी चन्द्र है, उसके वर्ग का प्रथम अक्षर यकार आता है। सप्तम राशि ( तुला ) का स्वामी शुक्र है, उसके वर्ग का प्रथम अक्षर चकार आता है और दशम राशि ( मकर ) का स्वामी शनि है, उसके वर्ग का प्रथम अक्षर पकार आता है। यदि मेष राशि के लग्न में द्वितीय नवांश हो तो मेष राशि में द्वितीय नवांश-स्वामी शुक्र के वर्ग का द्वितीय अक्षर छकार, चतुर्थ राशि ( कर्क ) में द्वितीय नवांश-स्वामी सूर्य के वर्ग का प्रथम अक्षर अकार, सप्तम राशि तुला में द्वितीय-नवांश स्वामी मंगल के वर्ग का द्वितीय अक्षर खकार और दशम राशि ( मकर ) में द्वितीय नवांश-स्वामी शनि के वर्ग का द्वितीय अक्षर फकार आता है।।१५।।

मेषे लग्ने केन्द्रस्था मेषकर्कितुलमकरा भवन्ति। एत एव स्वांशेनोदयं कुर्वन्ति। तत्र मेषस्य प्रथमो नवांशो मेष एव तस्य स्वामी भौमः। मेषस्य प्रथमनवांशकत्वाद्भौमवर्गात् प्रथममक्षरं ककारमापतति। हिबुके चतुर्थे कर्कटकस्तस्य स्वामी चन्द्रः, तस्यापि प्रथमनवांशकोदयत्वाच्चन्द्राद्यवर्गात् प्रथमं वर्गाक्षरं यकारमापपति। सप्तमस्थाने तुलो भवति।

तस्य स्वामी शुक्रः। तत्प्रथमनवमांशत्वाच्छौक्रवर्गात् प्रथममक्षरं चकारमापतति। दशमस्थाने मकरो भवति। तस्य स्वामी शनैश्चरः। तत्प्रथमनवांशकोदयत्वाच्छनैश्चरात् पवर्गात् प्रथममक्षरं पकारमापतति। अत एवोक्तम्—

मेषे ककारो हिबुके यकारस्तुले चकारो मकरे पकारः।

एवं द्वितीयादिष्वंशकेषु स्वामिविहितवर्गक्रमगणनयांशकतुल्यं वर्णं ग्राह्यम्। मृदुबुद्धिप्रबोधनायास्माभिः किञ्चित् क्रियते। तत्र मेषद्वितीयनवांशकस्य शुक्रोऽधिपतिस्तद्वर्गाद् द्वितीयमक्षरं छकारमापतति। कर्कटकद्वितीयस्य सूर्योऽधिपतिस्तद्वर्गात् प्रथममक्षरमकारमापतति। तुलद्वितीयस्य भौमोऽधिपतिस्तद्वर्गाद् द्वितीयमक्षरं खकारमापतति। मकरद्वितीयनवांशकस्य सौरोऽधिपतिस्तदीयवर्गाद् द्वितीयमक्षरं फकारमापतति। अत एवोक्तम्—

मेषे छकारो हिबुकेऽप्यकारस्तुलं खकारो मकरे फकारः।। इति।।१५।।

अन्येष्वप्याह—

मेषे टकारो हिबुके ठकारस्तुले तकारो मकरे थकारः।
मेषे तु रेफो हिबुके जकारस्तुले बकारो मकरे गकारः ।।१६।।

यदि मेष लग्न में तृतीय नवांश हो तो मेष राशि में तृतीय नवांशाधिपति बुध के वर्ग का प्रथम अक्षर टकार, चतुर्थ राशि ( कर्क ) में तृतीय नवांशाधिपति बुध के वर्ग का द्वितीय अक्षर ठकार, सप्तम राशि ( तुला ) में तृतीय नवांशाधिपति बृहस्पति के वर्ग का प्रथम अक्षर तकार और दशम राशि ( मकर ) में तृतीय नवांशाधिपति बृहस्पति के वर्ग का द्वितीय अक्षर थकार आता है। मेष राशि के लग्न में चतुर्थ नवांश हो तो मेष राशि में चतुर्थ नवांशाधिपति चन्द्र के वर्ग का द्वितीय अक्षर रकार, चतुर्थ राशि ( कर्क ) में चतुर्थ नवांशाधिपति शुक्र के वर्ग का तृतीय अक्षर जकार, सप्तम राशि ( तुला ) में चतुर्थ नवांशाधिपति शनि के वर्ग का तृतीय अक्षर बकार, दशम राशि ( मकर ) में चतुर्थ नवांशाधिपति मंगल के वर्ग का तृतीय अक्षर गकार आता है।।१६।।

मेषे तृतीयनवांशकस्य बुधोऽधिपतिस्तदीयवर्गात् प्रथममक्षरं टकारमापतति। कर्कटकतृतीयनवांशकस्य बुध एवाधिपतिस्तदीयवर्गाद् द्वितीयमक्षरं ठकारमापतति। तुलतृतीयनवांशकस्य जीवोऽधिपतिस्तदीयवर्गात् प्रथममक्षरं तकारमापतति। मकरतृतीयनवांशकस्य जीवोऽधिपतिस्तदीयवर्गाद् द्वितीयमक्षरं थकारमापतति। अत एवोक्तम्—

मेषे टकारो हिबुके ठकारस्तुले तकारो मकरे थकारः।

मेषस्य चतुर्थनवांशकाधिपतिश्चन्द्रस्तदीयवर्गाद् द्वितीयमक्षरं रेफमापतति। कर्कटकचतुर्थनवांशकाधिपतिः शुक्रस्तदीयवर्गात् तृतीयमक्षरं जकारमापतति। तुलस्य चतुर्थनवांशकाधिपतिः सौरस्तदीयवर्गात् तृतीयमक्षरं बकारमापतति। मकरस्य चतुर्थनवांशाधिपतिर्भौमस्तदीयवर्गात् तृतीयमक्षरं गकारमापतति। अत एवोक्तम्—

मेषे तु रेफो हिबुके जकारस्तुले बकारो मकरे गकारः।। इति।।१६।।

अन्येष्वप्याह—

आकारमाद्येऽम्बुगते घकारमस्ते भकारं मकरे झकारम्।
लग्ने डकारं हिबुके दकारमस्ते धकारं मकरे ढकारम् ॥१७॥

मेष लग्न में पञ्चम नवांश हो तो मेष में पञ्चम नवांशाधिपति सूर्य के वर्ग का द्वितीय अक्षर आकार, चतुर्थ राशि ( कर्क ) में पञ्चम नवांशाधिपति मंगल के वर्ग का चतुर्थ अक्षर घकार, सप्तम राशि ( तुला ) में पञ्चम नवांशाधिपति शनि के वर्ग का चतुर्थ अक्षर मकार और दशम राशि ( मकर ) में पञ्चम नवांशाधिपति शुक्र के वर्ग का चतुर्थ अक्षर झकार आता है। मेष लग्न में षष्ठ नवांश हो तो मेष में षष्ठ नवांशाधिपति बुध के वर्ग का तृतीय अक्षर डकार, चतुर्थ राशि ( कर्क ) में षष्ठ नवांशाधिपति बृहस्पति के वर्ग का तृतीय अक्षर दकार, सप्तम राशि ( तुला ) में षष्ठ नवांशाधिपति के वर्ग का चतुर्थ अक्षर धकार और दशम राशि ( मकर ) में षष्ठ नवांशाधिपति बुध के वर्ग का चतुर्थ अक्षर ढकार आता है।।१७।।

मेषे पञ्चमनवांशकस्याधिपतिः सूर्यस्तदीयवर्गाद् द्वितीयमक्षरमाकारमापतति। कर्कटे पञ्चमनवांशकाधिपतिर्भौमस्तदीयवर्गाच्चतुर्थमक्षरं घकारमापतति। तुल पञ्चमनवांशकस्य सौरोऽधिपतिस्तद्वर्गाच्चतुर्थमक्षरं भकारमापतति। मकरे पञ्चमनवांशकस्य शुक्रोऽधिपति-स्तदीयवर्गाच्चतुर्थमक्षरं झकारमापतति। अत एवोक्तम्—

अकारमाद्येऽम्बुगते घकारमस्ते भकारं मकरे झकारम्।

मेषे षष्ठनवांशकस्य बुधोऽधिपतिस्तदीयवर्गात् तृतीयवर्गात् तृतीयमक्षरं डकारमापतति। कर्कटके षष्ठनवांशाधिपतिर्जीवस्तदीयवर्गात् तृतीयमक्षरं दकारमापतति। तुले षष्ठनवांशा-धिपतिर्जीव एव तदीयवर्गाच्चतुर्थमक्षरं ढकारमापतति। अत एवोक्तम्—

लग्ने डकारं हिबुके दकारमस्ते धकारं मकरे ढकारम्।। इति।।१७।।

अन्येष्वप्याह—

लग्ने ञकारो हिबुको मकारस्तुले ङकारो मकरे लकारः।
लग्ने ककारो हिबुके पकारस्तुले चकारो मकरे इकारः ॥१८॥

मेष लग्न में सप्तम नवांश हो तो मेष में सप्तम नवांशाधिपति शुक्र के वर्ग का पञ्चम अक्षर ञकार, चतुर्थ राशि ( कर्क ) में सप्तम नवांशाधिपति शनि के वर्ग का पञ्चम अक्षर मकार, सप्तम राशि ( तुला ) में सप्तम नवांशाधिपति मंगल के वर्ग का पञ्चम अक्षर ङकार और दशम राशि ( मकार ) में सप्तम नवांशाधिपति चन्द्र के वर्ग का तृतीय अक्षर लकार आता है। मेष लग्न में अष्टम नवांश हो तो मेष में अष्टम नवांशाधिपति मंगल के वर्ग का प्रथम अक्षर ककार, चतुर्थ राशि ( कर्क ) में अष्टम नवांशाधिपति शनि के वर्ग का प्रथम अक्षर पकार, सप्तम राशि ( तुला ) में अष्टम नवांशाधिपति शुक्र के वर्ग का प्रथम अक्षर चकार और दशम राशि ( मकर ) में अष्टम नवांशाधिपति सूर्य के वर्ग का तृतीय अक्षर इकार आता है।।१८।।

मेषस्य सप्तनवांशकाधिपतिः शुक्रस्तदीयवर्गात् पञ्चममक्षरं ञकारमापतति। कर्कटस्य सप्तनवांशकाधिपतिः सौरस्तदीयवर्गात् पञ्चममक्षरं मकारमापतति। तुलस्य सप्तनवांशकाधिपतिर्भौमस्तदीयवर्गात् पञ्चममक्षरं ङकारमापतति। मकरस्य सप्तनवांशकाधिपतिश्चन्द्रस्तद्वर्गात् तृतीयमक्षरं लकारमापतति। अत एवोक्तम्—

लग्ने ञकारो हिबुके मकारस्तुले ङकारो मकरे लकारः।

मेषस्याष्टमनवांशकाधिपतिर्भौमस्तद्वर्गात् प्रथममक्षरं ककारमापतति। कर्कटस्याष्टमनवांशकाधिपतिः सौरस्तद्वर्गात् प्रथममक्षरं पकारमापतति। तुलस्याष्टमनवांशकाधिपतिः शुक्रस्तद्वर्गात् प्रथममक्षरं चकारमापतति। मकरस्याष्टमनवांशकाधिपतिः सूर्यस्तद्वर्गात् तृतीयमक्षरमिकारमापतति। अत एवोक्तम्—

लग्ने ककारो हिबुके पकारः। इत्यादि।।१८।।

अन्येष्वप्याह—

लग्ने नकारो हिबुके तकारस्तुले णकारो मकरे टकारः ।
इत्येतदुक्तं चरसंज्ञकस्य वक्ष्ये स्थिराख्यस्य चतुष्टयस्य ।।१९।।

मेष लग्न में नवम नवांश हो तो मेष में नवम नवांशाधिपति गुरु के वर्ग का पञ्चम अक्षर नकार, चतुर्थ राशि ( कर्क ) में नवम नवांशाधिपति गुरु के वर्ग का प्रथम अक्षर तकार, सप्तम राशि ( तुला ) में नवम नवांशाधिपति बुध के वर्ग का पञ्चम अक्षर णकार और दशम राशि ( मकर ) में नवम नवांशाधिपति बुध के वर्ग का प्रथम अक्षर टकार आता है। यह चरसंज्ञक चार राशियों के लिये कहा गया है। अब स्थिरसंज्ञक चार राशियों के लिये कहता हूँ।।१९।।

मेषस्य नवमनवांशकाधिपतिर्जीवस्तदीयवर्गात् पञ्चममक्षरं नकारमापतति। कर्कटस्य नवमनवांशाधिपतिर्जीवस्तदीयवर्गात् प्रथममक्षरं तकारमापतति। तुलस्य नवमनवांशकाधिपतिर्बुधस्तदीयवर्गात् पञ्चममक्षरं णकारमापतति। मकरस्य नवमनवांशकाधिपतिर्बुधस्तद्वर्गात् प्रथममक्षरं टकारमापतति। अत एवोक्तम्—

लग्ने नकारो हिबुके तकारस्तुले णकारो मकरे टकारः। इत्यादि।

**इत्येतदुक्तमिति**। इत्यनेन प्रकारेणैतदुक्तम्। तच्चरसंज्ञकस्य चतुष्टयस्य। स्थिरसंज्ञकस्य वृषसिंहवृश्चिककुम्भाख्यस्येदानीं वक्ष्ये कथयिष्ये।।१९।।

अधुना तदेवाह—

वृषे फकारो हिबुके खकारः कीटे वकारो नृघटे छकारः ।
आद्यांशकेभ्यो मतिमान् विदध्यादनुक्रमेण स्थिरसंज्ञकेषु ।।२०।।

वृष लग्न में प्रथम नवांश हो तो वृष में प्रथम नवांशाधिपति शनि के वर्ग का द्वितीय अक्षर फकार, चतुर्थ राशि ( सिंह ) में प्रथम नवांशाधिपति मङ्गल के वर्ग का

ताम्रमुदुम्बरम्। अश्वास्तुरगा:। काष्ठं प्रसिद्धं दारु। अस्थि प्रसिद्धम्। चर्म व्याघ्रादिचर्म। और्णिक: कम्बल:। चर्मोर्मिकेति पाठान्तरम्। ऊर्मिका जलधिवेला। अद्रि: प्रसिद्ध:। द्रुमो वृक्ष:। त्वक् प्रसिद्धो द्रव्यविशेष:, सुगन्धद्रव्यम्। नख: शुक्ति:। व्याल: सर्प:। चौरस्तस्कर:। आयुध: खड्गादिस्तस्मिन् हितमायुधीयम्। अटवी अरण्यम्। क्रूरं वञ्चनकर्म दुर्गादि। राजोपसेवा नृपाराधनम्। अभिषेको नृपादे:। औषधं भेषजम्। क्षौम: क्षुमासम्भव:। पण्यादि क्रयविक्रयम्। केचिद्वन्यादि पठन्ति। वने भवो वन्य:। तद्द्रव्याणां तज्जातानां वा प्राणिनां ग्रहणपोषणादि। गोपालो गोरक्षक:। कान्तारो मरुभूमि:। वैद्य: कायचिकित्सक:। अश्मा पाषाण:। कूटं दम्भ:। अवदात: सत्कुलज:। अभिविख्यात: कीर्तियुक्त:। शूर: संग्रामप्रिय:। आहवश्लाघ्य: संग्रामे कथनीय:। यायी गमनशील:। अग्निकर्माणि अग्न्याश्रितकार्याणि। एतेषां वस्तूनां सम्बन्धीनि यानि कार्याणि तानि रविदिने लग्नस्थिते प्राग्लग्नगे वा रवौ सिद्ध्यन्ति। तथा च समाससंहितायाम्—

नृपाग्निपशुकर्माणि युद्धकार्याणि यानि च।<br>
सूर्यस्य दिवसे प्राज्ञस्तानि सर्वाणि कारयेत्।।

तथा च यवनेश्वर:—

नृपप्रतिष्ठायुधयुद्धयोधहेमाग्निगोमूत्रभिषक्प्रयोगान् ।<br>
रवेर्दिने वन्यमृगार्दनादि प्रशस्यते द्विड्भयकृच्च कर्म।।

तथा च गर्ग:—

क्रौर्यं शाठ्यं नृपाद्वेदं शत्रूणां चैव बन्धनम्।<br>
अध्वानं च विवाहं च निधिकार्यं च कारयेत्।।<br>
तनुशुद्धिसिराकर्म बडवाश्वविमोचनम्।<br>
सर्वमेतद् यथोद्दिष्टं कारयेद् रविवासरे।।

अथ चन्द्रस्य दिने यानि कर्माणि क्रियन्ते तानि द्वितीयदण्डकपादेनाह—

**शिशिरकिरणवासरे तस्य वाप्युद्गमे केन्द्र-<br>
संस्थेऽथवा भूषणं शङ्खमुक्ताब्जरूप्याम्बु-<br>
यज्ञेक्षुभोज्याङ्गनाक्षीरसुस्निग्धवृक्षक्षुपानूप-<br>
धान्यद्रवद्रव्यविप्राध्वगीतक्रियाशृङ्गिकृष्यादि-<br>
सेनाधिपाक्रन्दभूपालसौभाग्यनक्तञ्चर-<br>
श्लैष्मिकद्रव्यमातुल्यपुष्पाम्बरारम्भसिद्धिर्भवेत् ।।**

चन्द्रवार में अथवा कर्क लग्न या केन्द्रस्थित चन्द्र हो तो भूषण, शङ्ख, मोती, कमल, चाँदी, जल, यज्ञ, इक्षु ( ईख = गन्ना ), भोज्य, स्त्री, दूध, सुस्निग्ध वृक्ष ( अखरोट आदि ) तृण, जलप्राय देश, धान्य, अवलेह, ब्राह्मण, मार्ग, गानकर्म, शृङ्गी ( हरिण आदि ), कृषि आदि, सेनाधिप, पार्ष्णिग्राह ( पार्श्वरक्षक ), राजा, जनप्रियता,

रात्रिचर, कफ करने वाले द्रव्य, मामा का हित, फूल, वस्त्र वस्तुओं से सम्बन्धित कर्मों की सिद्धि होती है।

**शिशिरकिरणवासर इति**। शिशिरकिरणश्चन्द्रस्तस्य वासरे दिने तस्य वाप्युद्गमे लग्नगते तस्मिन् लग्नगते तल्लग्ने कर्कटके वा केन्द्रसंस्थेऽथवा लग्नचतुर्थसप्तमदशमस्थानानामन्यतमस्थानस्थे। भूषणमलङ्करणम्। शङ्खः प्रसिद्धः। मुक्ता मुक्ताफलानि। अब्जं पद्मादि। रूप्यं रजतम्। अम्बु जलम्। यज्ञो यागः। इक्षुः प्रसिद्धः। भोज्यमशनम्। अङ्गना स्त्री। क्षीरं प्रसिद्धम्। सुस्निग्धवृक्षोऽक्षोटकादिः। क्षुपास्तृणानि। अनूपो बहूदकप्रदेशः। धान्यं शालयः। द्रवद्रव्यं लेह्यम्। विप्रो ब्राह्मणः। अध्वा पन्थाः। गीतक्रिया गानकर्म। शृङ्गिणो हरिणादयः। कृष्यादि वपनलवनादि। सेनाधिपश्चमूपतिः। आक्रन्दो विजिगीषूणां पश्चात् पार्ष्णिग्राहः। पार्ष्णिग्राहस्य पश्चादाक्रन्दः। भूपालो राजा। सौभाग्यकरणं जनवाल्लभ्यम्। नक्तञ्चरो रात्रिचरः। श्लैष्मिकं द्रव्यं श्लेष्मिणो हितम्। मातुल्यं मातुलस्य हितं मातुल्यम्। पुष्पं कुसुमम्। अम्बरं वस्त्रम्। एतेषां सम्बन्धीनि यानि कार्याणि तेषां कार्याणामारम्भे सिद्धिर्भवेत्। तथा च समाससंहितायाम्—

जलस्त्रीराजकर्माणि मृदून्यन्यानि यानि च।
तानि चन्द्रदिने कुर्यात् शुक्लपक्षे विशेषतः।।

तथा च यवनेश्वरः—

स्त्रीसङ्गमालङ्करणाम्बरस्त्रग्प्रतिक्रियाहर्षसुखाश्रयांश्च ।
कुर्वीत चन्द्रस्य दिने प्रदानयज्ञोत्सवान् रत्नरसार्जनं च।।

तथा च गर्गः—

उपभोगं तथा शय्यां नवमिश्रं गृहं चरेत्।
पचेद् घृतं च तैलं च सम्बन्धं चात्र कारयेत्।।
क्षुरकर्म तथा दानं गवां वेशमप्रवेशनम्।
नृपसन्दर्शनं विन्द्यात् कुर्याच्चैव निवेशनम्।।
सर्वमेतद्यथोद्दिष्टं कुर्याच्चन्द्रदिने शुभे।।

अथ भौमस्य दिने यानि कर्माणि कार्याणि तानि दण्डकतृतीयपादेनाह—

**क्षितितनयदिने प्रसिद्ध्यन्ति धात्वाकरादीनि**
**सर्वाणि कार्याणि चामीकराग्निप्रवालायुध-**
**क्रौर्यचौर्याभिघाताटवीदुर्गसेनाधिकारास्तथा**
**रक्तपुष्पद्रुमा रक्तमन्यच्च तिक्तं कटुद्रव्यकूटा-**
**हिपाशार्जितस्वाः कुमारा भिषक्छाक्यभिक्षु-**
**क्षपावृत्तिकोशेशशाठ्यानि सिद्ध्यन्ति दम्भास्तथा।**

मंगलवार में धातुओं के आकर आदि से सम्बन्धित समस्त कार्य, सोना, प्रवाल, शस्त्र, क्रूरता, चोरी, दूसरे को उपद्रव, वन, दुर्ग, सेनापति, रक्तपुष्प वाले वृक्ष, रक्त वस्तु, तिक्त ( निम्ब आदि ), कटु द्रव्य ( मरीचादि ), कूट, सर्प के बन्धन से उपार्जित धन वाले, कुमार, वैद्य, शाक्यभिक्षु ( संन्यासी ), रात्रि में कार्य करने वाले, खजानची, शठता, दम्भ—इन सब वस्तुओं से सम्बन्धित कर्मों की सिद्धि होती है।

**क्षितितनयदिन इति**। क्षितितनयोऽङ्गारकस्तस्मिन् दिने प्रसिद्ध्यन्ति धात्वाकरादीनि धातूनामाकर उत्पत्तिस्थानम्। धात्वाकरादीनि सर्वाणि धातुद्रव्याणि। आदिग्रहणात् क्षालनं पाचनं च। चामीकरं सुवर्णम्। अग्नि: प्रसिद्ध:। प्रवालं विद्रुमम्। आयुधं खड्गादि। क्रौर्यं क्रूरत्वम्। चौर्यं स्तेयत्वम्। अभिघात: परोपद्रव:। अटवी अरण्यम्। दुर्गं गिरिजलदुर्गादि। सेनाधिकारास्तथा। तथा तेनैव प्रकारेण सेनाधिपत्यम्। रक्तपुष्पद्रुमा रक्तानि पुष्पाणि लोहितानि कुसुमानि येषां द्रुमाणां वृक्षाणाम्। रक्तं लोहितवर्णं यत्किञ्चित्। तिक्तं निम्बादि। कटुद्रव्यं मरिचादि। कूटैर्दम्भै:। अहिपाशै: सर्पबन्धैरर्जितं स्वं धनं यै:। कुमारा: प्रसिद्धा:। भिषग् वैद्य:। शाक्यभिक्षु: श्रमणक:। क्षपावृत्ती रात्रिवर्तनम्। कोशेश:, कोशो गञ्जस्तस्येशो नायक:। केचित् कौशेयं पट्टमितीच्छन्ति। शाठ्यं शठभाव:, परकार्यविमुखत्वम्। एतदाश्रितानि सर्वाणि कार्याणि सिद्ध्यन्ति संसिद्धिमायान्ति, तथा तेनैव प्रकारेण दम्भा: सिद्ध्यन्ति। तथा च समाससंहितायाम्—

दुर्गग्रहणकर्माणि हेमकर्माणि यानि च।
तथा च पशुकर्माणि कुर्याद् भौमदिने नर:।।

तथा च यवनेश्वर:—

वधावरोधावृतडिम्बभेदा: स्तेयादिशस्त्रादिविषप्रयोगा:।
दिने कुजस्य ध्वजिनीनिवेशा: कार्या: सुवर्णाजपशुक्रियाश्च।।

तथा च गर्ग:—

आयुधं कारयेत् प्राज्ञ: पापकर्म तथैव च।
बन्धनाद्यानि कर्माणि लुण्ठनं तु क्षयादिकम्।।
षण्मुखस्यात्र कर्तव्या पूजा च शिखिकुक्कुटै:।
पूजयेदनलं चात्र यन्त्रकार्यं समारभेत्।।
मन्त्रकर्म विवाहं च दिने भौमस्य वर्जयेत्।।

अथ बुधस्य दिने यानि कार्याणि क्रियन्ते तानि दण्डकचतुर्थपादेनाह—

**हरितमणिमहीसुगन्धीनि वस्त्राणि साधारणं**
**नाटकं शास्त्रविज्ञानकाव्यानि सर्वा: कलायुक्तयो**
**मन्त्रधातुक्रियावादनैपुण्यपुण्यव्रतायोगदूता-**
**स्तथाऽऽयुष्यमायानृतस्नानह्रस्वाणि दीर्घाणि**

**मध्यानि च च्छन्दतश्चण्डवृष्टिप्रयातानुकारीणि**
**कार्याणि सिद्ध्यन्ति सौम्यस्य लग्नेऽह्नि वा ॥६१॥**

बुध के लग्न या दिन में हरित मणि, पृथ्वी, सुगन्ध द्रव्य, साधारण कार्य, नाटक, शास्त्र, विज्ञान, काव्य, सभी कलायें, द्रव्यों का संयोग, मन्त्रक्रिया, धातुक्रिया, किसी के साथ विवाद, निपुणता, पुण्य, व्रतग्रहण, दूत, आयु के लिये हित कार्य, माया, मिथ्या, स्नान ( पुण्यस्नान आदि ), शीघ्र होने वाला कार्य, देर में होने वाला कार्य, मध्य समय में होने वाला कार्य, परचित्त-ग्रहणपूर्वक प्रचण्ड वृद्धि में पदन्यास के अनुकरण करने वाला कार्य अर्थात् कोई ह्रस्व, कोई दीर्घ और कोई मध्यम कार्य–इन सब वस्तुओं से सम्बन्धित कर्म की सिद्धि होती है।।६१।।

**हरितमणीति**। हरितमणीनां सम्बन्धः। अथवा हरितद्रव्याणां मणीनां च मही भूः। सुगन्धीनि सुगन्धद्रव्याणि। वस्त्राण्यम्बराणि। साधारणमुग्रं सौम्यं च। नाटकं नर्तनम्। शास्त्रं प्रसिद्धम्। विज्ञानमध्यात्मिकम्। काव्यानि प्रसिद्धानि। सर्वा निःशेषाः कला गीत-वाद्यनृत्तचित्रलेपकर्मादि। युक्तयो द्रव्याणां योजनम्। मन्त्रक्रिया मन्त्रसाधनम्। धातुक्रिया धातुवादः। वादः परस्परं केनचित् सह वदनम्। नैपुण्यं निपुणता। पुण्यं धर्मक्रियानुसेवनम्। व्रतायोगो व्रतग्रहणम्। दूतो गमागमिकः। तथाऽऽयुष्यमायुषो हितं रसायनवाजीकरणानि। माया व्याजव्यवहरणम्। अनृतमसत्यम्। स्नानं मलापहं पुष्यस्नानादि वा। तथा यानि कार्याणि ह्रस्वाणि क्षिप्रकालकरणीयानि। दीर्घाणि चिरकालकरणीयानि। मध्यानि च शीघ्रं न चिरकालं करणीयानि। तथा छन्दतः परिचित्तग्रहणपूर्वकाणि चण्डवृष्टिप्रयातानुकारीणि कार्याणि। चण्डा चासौ वृष्टिः चण्डवृष्टिः। चण्डवृष्टौ प्रयातं गमनं यत् तदनुकारीणि तत्सदृशानि। तस्यां गमनं पदविन्यासः। कश्चिद्ध्रस्वः, कश्चिद् दीर्घः, कश्चिन्मध्यो भवति। मार्गस्य जलावृतत्वाच्छिथिलत्वात् पदविन्यासस्तथाविधो भवति। तदनुकारीणि कार्याणि सिद्ध्यन्ति। सौम्यस्य बुधस्य लग्नेऽह्नि वा। तथा च समाससंहितायाम्—

> स्वाध्यायशिल्पव्यायामकलाकर्मरतानि च।
> तानि सौम्यदिने कुर्याद् यदि पापैर्न सङ्गतः।।

तथा च यवनेश्वरः—

> स्वाध्यायसेवालिपिलेख्यशिल्पव्यायामनैपुण्यकलाविशेषाः।
> इष्टिक्रियाः काञ्चनधातुयुक्तिवाग्युक्तिसन्धिप्रभुता बुधेऽह्नि।।

तथा च गर्गः—

> बन्धयोधवधं सर्वं व्यायामं च विशेषतः।
> नृपसेवा च यात्रा च तथैव क्रयविक्रयौ।।
> वीरांश्च योजयेत् प्राज्ञो बद्धान् पाशांश्च मोचयेत्।
> एवं मित्रं च शिष्यं च बन्धुभिः सह सङ्गमम्।।

आश्रमे च तथा भूमौ केदारे वपने तथा।
शिक्षेत रूपकर्माणि दिने चन्द्रसुतस्य च।।

आचार्येण चण्डवृष्टिप्रयातानुकारिणीत्यनेन चण्डवृष्टिप्रयातानां सर्वदण्डकानां लक्षणं प्रदर्शितम्। तथा च—

प्रथमक इह दण्डकश्चण्डवृष्टिप्रयातो भवेन्नद्वयेनाथ रै: सप्तभि:।
प्रतिपदमिह रेफवृद्धा: स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादय:।।

उत्कृतेरधिकाक्षरो दण्डक:। दण्डका नाम समासवृत्तविशेषा भवन्ति। येषां पादो द्वाभ्यां नकाराभ्यां सप्तभिश्च रेफैर्भवति। नस्त्रिलघु:। रलमध्य:। इहास्मिन् छन्दोलक्षणे प्रथमको दण्डकश्चण्डवृष्टिप्रयातसंज्ञ: सप्तविंशत्यक्षरपादो भवति। पिङ्गलादीनामाचार्याणां मतेन राजमाण्डव्यौ वर्जयित्वा। तयोस्तु मते एष सुवर्णाख्य:। तथा च तावूचतु:—

सुवर्णश्चण्डवेगश्च प्लवो जीमूत एव च।
बलाहको भुजङ्गश्च समुद्रश्चेति दण्डका:।।

तथा च पाठान्तरम्—

अर्णोऽर्णव: प्लवश्चैव जीमूतोऽथ बलाहक:।
समुद्रश्च भुजङ्गश्च सप्तैते दण्डका: स्मृता:।।

एवं नद्वयेन सप्तभिश्च रेफैश्चण्डवृष्टिप्रयात:। प्रतिपदमिह रेफवृद्धा:। इहास्मिन् लक्षणे पदं पदं प्रति प्रतिपदम्। रेफवृद्धा अन्ये स्युर्भवेयु:। एवं नद्वयेन अष्टभिश्च रेफैरर्ण:। नवभिरर्णव:। दशभिर्व्याल:। एकादशभिर्जीमूत:। द्वादशभिर्लीलाकर:। त्रयोदशभिरुद्दाम:। चतुर्दशभि: शङ्ख:। आदिग्रहणाद् रेफवृद्ध्याऽन्ये कल्पनीया:। जलजं पद्मादि।

प्रचित इति कविभिवर्णितोऽस्मादिहोपान्तशेषात् त्रिकैरुत्तरैर्नद्वायद्यै:।

इहास्मिन् लक्षणे प्रचित इति वर्णित उक्त:। अस्मात् पूर्वोक्ताल्लक्षणात् कविभि: पण्डितैरिहास्मिन् प्रथमदण्डके उपान्ता गृहीता:। त्रिका रेफा:। तैस्त्रिकै: शेषान्नकारद्वयादुत्तरै: परत: स्थित: सप्तभिर्यकारै:। अन्वर्थसंज्ञा चेयम्। प्रतिपदं रेफादिवृद्ध्योपचितत्वात् प्रचित इत्युच्यते। शेषरेफतोऽन्यैस्त्रिक: सप्तक:। आचार्येण नद्वयाद् रेफद्वात्रिंशता दण्डक उक्त:। अथ उपचयभवनोपयातस्येत्यस्य न्यास:। नद्वयं रेफा द्वात्रिंशत्।।६१।।

अथ बृहस्पतिदिने यानि कर्माणि क्रियन्ते तानि वर्णकदण्डकेनाह—

**सुरगुरुदिवसे कनकं रजतं तुरगा:**
**करिणो वृषभा भिषगौषधय: ।**
**द्विजपितृसुरकार्यपुर:स्थितघर्म-**
**निवारणचामरभूषणभूपतय: ।।**
**विबुधभवनधर्मसमाश्रयमङ्गल-**

शास्त्रमनोज्ञबलप्रदसत्यगिरः ।
व्रतहवनधनानि च सिद्धिकराणि तथा
रुचिराणि च वर्णकदण्डकवत् ।।६२।।

बृहस्पति दिन में सोना, चाँदी, घोड़ा, हाथी, बैल, वैद्य, औषधि, ब्राह्मणों का तर्पण, पितृश्राद्ध, देवताओं का कार्य, पुरःस्थित ( पदाति ), छत्र, चामर, भूषण, राजा, देवगृह, देवप्रतिष्ठा, गृहप्रतिष्ठा, धर्माश्रय, मंगल, शास्त्र, सुन्दर, बलप्रद, सत्य वचन, व्रत ( चान्द्रायण आदि ), हवन, धन—इन सभी वस्तुओं से सम्बन्धित कार्य वर्णक ( सर्प आदि ) से युत मनोहर दण्ड की तरह सिद्ध और सुन्दर होते हैं। यह वर्णकदण्डक छन्द है।।६२।।

**सुरगुरुदिवस इति** । सुरगुरुदिवसे बृहस्पतिदिने कनकं सुवर्णम्। रजतं रौप्यम्। तुरगा अश्वाः। करिणो हस्तिनः। वृषभा दान्ताः। भिषग्वैद्यः। ओषधयः प्रसिद्धाः। अथवा भिषगोषधयो वैद्यप्रणीतानि द्रव्याणि। द्विजानां ब्राह्मणानां तर्पणम्। पितृणां श्राद्धम्। सुराणां देवानां च कार्याणि। पुरःस्थितोऽग्रस्थितः पदातिः। घर्मनिवारणं छत्रादिकम्। चामरं वाल्यव्यजनम्। भूषणमलङ्करणम्। भूपतयो राजानः। विबुधभवनं देवगृहम्। अथवा विबुधानां प्रतिष्ठा। भवनानां गृहाणां च प्रतिष्ठा। धर्मसमाश्रयो धर्माश्रयणम्। मङ्गलं शुभकार्यम्। शास्त्रं प्रसिद्धम्। मनोज्ञश्चित्ताह्लादकः। बलप्रदं मांसाद्याहारः। सत्यगिरः सत्ययुक्ता वाचः। व्रतं चान्द्रायणादि। हवनमग्नौ। धनं वित्तम्। एवमादिकानि सम्बन्धीनि यानि कर्माणि सिद्धिकराणि सिद्धिप्रदानि। तथा रुचिराणि श्रेष्ठानि चान्यानि। कथं रुचिराणि? वर्णकदण्डकवत्। वर्णकेन नागादिना यथा रुचिरं स्फुटतरं दण्डकं तद्वद्यानि रुचिराणि। एतद्वर्णकदण्डकं नाम दण्डकं नद्वयेन सप्तभिर्भैर्गुरुणा च।

न्यासः— न न भ भ भ भ भ भ भ गु

।।। ।।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ

तथा च समाससंहितायाम्—

शान्तिपौष्टिककर्माणि तथा ज्ञानाश्रितानि च।
तानि कृत्स्नं विधेयानि दिने देवगुरोः शुभे।।

तथा च यवनेश्वरः—

दिने गुरोर्धार्मिकपौष्टिकेज्याबाध्याभिधेयक्रतुमुण्डनादि।
क्रियाश्रिता धर्मसुवर्णवस्त्रदेहाश्रयाश्चाश्वरथाश्रयाश्च।।

तथा च गर्गः—

यज्ञं च विविधं कुर्यात् तपांसि च विशेषतः।
यज्ञे यज्ञे तपस्तेपे छादयेत् कारयेद् गृहम्।।
आरभेद् भारतं चेदं ज्यौतिषं च विशेषतः।
ग्राहयेन्नववस्त्राणि यात्रां दद्यान्नृपस्य च।।

आदिशेच्च व्रतं पुत्रे बीजान् सर्वांश्च वापयेत्।
योजयेच्छकटं चात्र दिने देवगुरोः शुभे।। इति।।६२।।

अथ शुक्रदिने यानि कार्याणि क्रियन्ते तानि समुद्रदण्डकप्रथमार्द्धेनाह—

**भृगुसुतदिवसे च चित्रवस्त्रवृष्यवेश्य-**
**कामिनीविलासहासयौवनोपभोगरम्यभूयमः ।**
**स्फटिकरजतमन्मथोपचारवाहनेक्षुशारद-**
**प्रकारगोवणिक्कृषीवलौषधाम्बुजानि च ।**

शुक्रवार में चित्र कर्म, वस्त्र, वीर्य-वृद्धि के लिये प्रयोग, वेश्या, कामासक्त स्त्री, विलास, उपहास, यौवनोपभोग ( स्त्रीप्रसङ्ग आदि ), चाँदी, कामदेव का उपचार, वाहन, इक्षु ( ईख = गन्ना ), शारदीय धान्य, वाणिज्य, खेती, औषध, जलज ( कमल आदि )— इन वस्तुओं से सम्बन्धित कार्य सिद्ध होते हैं।

**भृगुसुतदिवस इति**। भृगुसुतदिवसे शुक्रदिने च। चित्रं चित्रकर्म। वस्त्रमम्बरम्। वृष्यप्रयोगो रेतोवृद्धिकरः। वेश्या पण्यस्त्री। कामिनी कामासक्ताङ्गना। विलासः क्रीडनम्। हास उपहासः। यौवनोपभोगो रतादिः। रम्या रमणीया भूमय उपवनादि। स्फटिकः स्फटिकोपलम्। रजतं रौप्यम्। मन्मथोपचारः कामोपचरणम्। वाहनमश्वादि। इक्षुः प्रसिद्धः। शारदप्रकारो धान्यानि। वणिक्कर्माणि। कृषिकर्माणि। औषधं प्रसिद्धम्। अम्बुजं जलजं पद्मादि। एतानि कार्याणि। तथा च समाससंहितायाम्—

कलागन्धर्वकर्माणि रत्नकर्माणि यानि च।
तानि कार्याणि दिवसे सदा दैत्यगुरोः शुभे।।

तथा च यवनेश्वरः—

गान्धर्वविद्यामणिरत्नगन्धगोभूमिशय्याम्बरभूषणानाम् ।
स्त्रीपण्यकोशोत्सवनन्दनानां क्रियाविधिः शुक्रदिने प्रशस्तः।।

तथा च गर्गः—

गजमश्वं प्रयुञ्जीत कर्णबन्धे नियोजयेत्।
पिबेत् सुरां च मद्यं च प्रचरेत् कुसुमाम्बरम्।।
गन्धांश्च विविधानद्यात् कामयेच्च वराङ्गनाः।
द्यूते च सहसा प्रीतिं तिलं तैलं च योजयेत्।।
मङ्गलं स्थापयेदेव रोपयेच्चैव पादपान्।
सर्वमेतद्यथोद्दिष्टं कुर्याच्छुक्रदिने शुभे।।

अथ सौरस्य दिने यानि कर्माणि क्रियन्ते तानि समुद्रदण्डकापरार्धेनाह—

**सवितृसुतदिने च कारयेन्महिष्यजोष्ट्रकृष्ण-**
**लोहदासवृद्धनीचकर्मपक्षिचोरपाशिकान् ।**

**च्युतविनयविशीर्णभाण्डहस्त्यपेक्षविघ्नकारणानि**
**चान्यथा न साधयेत् समुद्रगोऽप्यपां कणम् ॥६३॥**

शनिवार में भैंस, छाग, ऊँट, कृष्णलोह ( शस्त्र, आयुध आदि ), भृत्य, वृद्ध, नीच, पक्षी, चोर, बन्धन आदि जानने वाले, नम्रता से रहित, फूटा भाण्ड, हस्त्यपेक्षा ( हाथी के ग्रहणादि ), विघ्न के कारण इनके आश्रित सभी कार्य सिद्ध होते हैं। इन पूर्वोक्त नियमों को छोड़कर समुद्र में जाने पर भी जलबिन्दु की भी प्राप्ति नहीं होती है। यह समुद्रदण्डक छन्द है।।६३।।

**सवितृसुतदिन इति**। सवितृसुतदिने शनैश्चरदिवसे च कर्माणि कारयेत्। महिषी प्रसिद्धा। अजश्छागः। उष्ट्रः करभः। कृष्णलोहः शस्त्रायुधादि। दासः कर्मकरः। वृद्धो गतवयाः। नीचः कुलाधमकर्मकृत्। पक्षी श्येनादि। चौरस्तस्करः। पाशिकाः पाशबन्धनादिविदः। च्युतविनयो नीचः। विशीर्णभाण्डं भिन्नभाण्डम्। हस्त्यपेक्षा हस्तिनोऽपेक्षा। हस्त्यपेक्षा ग्रहणादि। विघ्नकारणानि यानि निमित्तानि च कार्याणि एतदाश्रितानि च सर्वाणि सिद्ध्यन्ति। एतानि वर्जयित्वाऽन्यथाऽन्येन प्रकारेण समुद्रगोऽपि सागरप्राप्तोऽप्यपां कणं जलबिन्दुमपि तस्मात् सागरान्न साधयेत्। समुद्रसंज्ञं दण्डकमेतत्।

अत्र नद्वयात् परतः पञ्च रेफा जकारान्तरिता भवन्त्यन्ते लघुगुरू।

न्यासः—

| न | न | र | ज | र | ज | र | ज | र |
|---|---|---|---|---|---|---|---|---|
| ।।। | ।।। | ऽ।ऽ | ।ऽ। | ऽ।ऽ | ।ऽ। | ऽ।ऽ | ।ऽ। | ऽ।ऽ |

| ज | र | ल | गु |
|---|---|---|---|
| ।ऽ। | ऽ।ऽ | । | ऽ |

तथा च समाससंहितायाम्—

शस्त्राणि पाशकर्माणि पशुकर्माणि यानि च।
तानि सौरदिने कुर्याल्लोहकर्माणि यानि च।।
संवत्सरे तथा मासे होरायामुदये तथा।
उक्तानि यानि कर्माणि तथा कुर्याद् ग्रहस्य च।।

तथा च यवनेश्वरः—

विषाश्मशस्त्रत्रपुसीसलोहप्राकारबन्धावृतमारणानि ।
सर्वं च पापात्मकमर्कजाह्नि कार्पासवप्रव्रजितानि चेष्टम्।।

तथा च गर्गः—

नियोगान् विविधान् कुर्याद्वेश्म चापि प्रवेशयेत्।
कर्म चौर्यं मृतिं चैवाश्वरथेष्वश्वयोजनम्।।

हस्त्यपेक्षा विघ्नकर्म द्रव्यं दम्भाश्रितं तथा।
वर्जयेच्चैव यात्रां च दिने सूर्यसुतस्य च।। इति।।६३।।

अधुनात्र प्रशंसार्थं विपुलामार्यामाह—

**विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्यमेतावत्।**
**श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥६४॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां ग्रहगोचरो नाम चतुरधिकशततमोऽध्यायः ॥१०४॥**

बहुत विस्तीर्ण छन्दों के प्रस्तारों को जानकर भी इतना ही कार्य होता है। अतः वराहमिहिर आचार्य ने कर्णसुखजनक यह छन्दसंग्रह कहा है। यह विपुला आर्या छन्द है।।६४।।

**इति 'विमला'हिन्दीटीकायां ग्रहगोचराध्यायश्चतुरधिकशततमः ॥१०४॥**

विपुलां विस्तीर्णामपि छन्दोविचितिं छन्दसां प्रस्तारं बुद्ध्वा ज्ञात्वा एतावत् कार्यं भवति। यावन्ति छन्दांस्यत्र प्रदर्शितानि तावन्ति ज्ञायन्ते। अतोऽस्माद्धेतोर्वराहमिहिर इमं वृत्तसमुच्चयं श्रुतिसुखदं कर्णसुखजनकमाहोक्तवान्। बहुभिराचार्यैश्छन्दोलक्षणमुक्तं तच्च दुर्विज्ञेयमश्रव्यं च। वराहमिहिरेण पुनः श्रव्यं सुखबोधं व्यापकं संक्षिप्तमुक्तमिति। विपुलेयमार्या। अस्या लक्षणम्—'विपुला तु यान्यथा पादभागि'त्यादि।

वराहमिहिरीयेऽस्मिन् छन्दसां सारसंग्रहे।
उत्पलो गोचरे टीकां चक्रे शिष्यहितावहाम्।। इति।।६४।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृत्तौ ग्रहगोचरो नाम चतुरधिकशततमोऽध्यायः ॥१०४॥**

## अथ रूपसत्राध्याय:

अथ रूपसत्रं व्याख्यायते। आदौ नक्षत्रपुरुषस्याङ्गविभागं तन्नक्षत्रावस्थितिं चाह—

**पादौ मूलं जङ्घे च रोहिणी जानुनी तथाश्विन्यः ।**
**ऊरू चाषाढाद्वयमथ गुह्यं फल्गुनीद्वितयम् ॥१॥**

**कटिरपि च कृत्तिका पार्श्वयोश्च यमला भवन्ति भद्रपदाः ।**
**कुक्षिस्था रेवत्यो विज्ञेयमुरोऽनुराधा च ॥२॥**

**पृष्ठं विद्धि धनिष्ठां भुजौ विशाखा स्मृतौ करौ हस्तः ।**
**अङ्गुल्यश्च पुनर्वसुराश्लेषासंज्ञिताश्च नखाः ॥३॥**

**ग्रीवा ज्येष्ठा श्रवणं श्रवणौ पुष्यो मुखं द्विजाः स्वातिः ।**
**हसितं शतभिषगथ नासिका मघा मृगशिरो नेत्रे ॥४॥**

**चित्रा ललाटसंस्था शिरो भरण्यः शिरोरुहाश्चार्द्रा ।**
**नक्षत्रपुरुषकोऽयं कर्तव्यो रूपमिच्छद्भिः ॥५॥**

नक्षत्रपुरुष के दोनों पाँव में मूल, दोनों जङ्घाओं में रोहिणी, दोनों जानुओं में अश्विनी, दोनों ऊरुओं में पूर्वाषाढ़ा और उत्तराषाढ़ा, गुह्य ( लिङ्ग और गुदा ) में पूर्वफाल्गुनी और उत्तरफाल्गुनी, कमर में कृत्तिका, दोनों पार्श्व में पूर्वभाद्रपदा और उत्तरभाद्रपदा, पेट में रेवती, छाती में अनुराधा, पीठ में धनिष्ठा, दोनों भुजाओं में विशाखा, दोनों हाथों में हस्त, अंगुलियों में पुनर्वसु, नखों में आश्लेषा, ग्रीवा में ज्येष्ठा, दोनों कानों में श्रवण, मुख में पुष्य, दाँतों में स्वाति, हास्य में शतभिषा, नासिका में मघा, दोनों आँखों में मृगशिरा, ललाट में चित्रा, शिर में भरणी तथा केशों में आर्द्रा को स्थापित करना चाहिये। सुन्दर रूप की इच्छा करने वाले पुरुषों को यह नक्षत्रचक्र बनाना चाहिये।।१-५।।

**पादौ मूलमिति ।** नक्षत्रपुरुषस्य पादौ चरणौ मूलम्। एवं जङ्घे द्वे रोहिणी। जानुनी तथाऽश्विन्यः। ऊरू द्वावाषाढाद्वयम्। पूर्वाषाढोत्तराषाढे। अथशब्दश्चार्थे। गुह्यं लिङ्गं गुदश्च फल्गुनीद्वितयं पूर्वफल्गुन्युत्तरफल्गुनीति।

**कटिरपि चेति ।** कृत्तिका कटिर्जघनम्। पार्श्वयोश्च यमला भद्रपदा भवन्ति। पूर्वभद्रपदोत्तरभद्रपदौ। रेवत्यः कुक्षिस्थाः। अनुराधा उरो वक्षो विज्ञेयं ज्ञातव्यम्।

**पृष्ठमिति ।** धनिष्ठां पृष्ठं विद्धि जानीहि। विशाखा भुजौ द्वौ स्मृतावुक्तौ। हस्तौ द्वौ करौ हस्त एव। पुनर्वसुरङ्गुल्यः करशाखाः। आश्लेषासंज्ञिताश्च नखाः कररुहाः।

**ग्रीवा ज्येष्ठेति ।** ग्रीवा शिरोधरा ज्येष्ठा। श्रवणं श्रवणौ द्वौ कर्णौ। पुष्यो मुखं

वक्त्रम्। स्वातिर्द्विजा दशनाः। हसितं शतभिषगथ। अथशब्दश्चार्थे। नासिका मघा। नेत्रे द्वे चक्षुषी मृगशिरः।

**चित्रा ललाटसंस्थेति**। ललाटे मुखपृष्ठे संस्था चित्रा। भरण्यः शिरः। आर्द्रा शिरोरुहाः केशाः। अयं नक्षत्रपुरुषको रूपमिच्छद्भिः शोभनं रूपमभिलषद्भिः पुम्भिः कर्तव्यः।।१-५।।

अथ कस्मिन् काले रूपसत्राख्यं व्रतं गृहीतव्यमित्येतदाह—

**चैत्रस्य बहुलपक्षे ह्यष्टम्यां मूलसंयुते चन्द्रे।**
**ह्युपवासः कर्तव्यो विष्णुं सम्पूज्य धिष्ण्यं च।।६।।**

चैत्र शुक्ल अष्टमी में यदि मूल नक्षत्र और चन्द्रवार हो तो उस दिन विष्णु और नक्षत्र की पूजा करके प्रथम उपवास प्रारम्भ करके जैसे-जैसे रोहिणी आदि आता जाय वैसे-वैसे आर्द्रा तक उपवास करना चाहिये।।६।।

चैत्रमासस्य बहुलपक्षे कृष्णपक्षे अष्टम्यां तिथौ मूलसंयुते चन्द्रे चन्द्रवासरे। मूलं नक्षत्रं तत्र यदि भवति तस्मिन् दिने प्रथमत उपवासः कर्तव्यः विष्णुं नारायणं धिष्ण्यं नक्षत्रं च सम्पूज्याभ्यर्च्य, ततो यथा यथा रोहिण्यादीनि नक्षत्राणि भवन्ति तथा तथोपवासः कर्तव्यो यावदार्द्राम्। तथा च गर्गः—

अष्टम्यां मधुमासस्य कृष्णपक्षे तु नैर्ऋते।
नक्षत्रे चन्द्रवारे तु मुहूर्ते तु गुणान्विते।।
प्रारम्भेद्रूपसत्राख्यं व्रतं धर्मात्मकः पुमान्।
येन पूर्णेन मनुजो रूपशोभामवाप्नुयात्।। इति।।६।।

अथ व्रतार्थं कर्तव्यं तदाह—

**दद्याद् व्रते समाप्ते घृतपूर्णं भाजनं सुवर्णयुतम्।**
**विप्राय कालविदुषे सरत्नवस्त्रं स्वशक्त्या च।।७।।**

व्रत समाप्त होने के बाद अपनी शक्ति के अनुसार कालज्ञ ब्राह्मण के लिये सुवर्ण, रत्न और वस्त्रों के साथ घृत से पूर्ण पात्र दान करना चाहिये।।७।।

ततो व्रते रूपसत्राख्ये समाप्ते निष्पन्ने घृतपरिपूर्णं भाजनमाज्यपरिपूर्णं पात्रं सुवर्णयुक्तं काञ्चनसंयुक्तं विप्राय ब्राह्मणाय कालविदुषे कालज्ञाय दद्यात् प्रतिपादयेत्। सरत्नवस्त्रं रत्नवस्त्रसहितम्, स्वशक्त्याऽऽत्मीयशक्त्या विभवानुसारेण दद्यात्।।७।।

**अन्नैः क्षीरघृतोत्कटैः सह गुडैर्विप्रान् समभ्यर्चयेद्**
**दद्यात् तेषु सुवर्णवस्त्ररजतं लावण्यमिच्छन्नरः।**
**पादर्क्षात् प्रभृति क्रमादुपवसन्नङ्गर्क्षनामस्वपि**
**कुर्यात् केशवपूजनं स्वविधिना धिष्ण्यस्य पूजां तथा।।८।।**

लावण्य की इच्छा करने वाले मनुष्य को चाहिये कि दूध, घृत और गुड़ से मिश्रित अन्नों से ब्राह्मणों की पूजा करे तथा उन ब्राह्मणों को सोना, वस्त्र और चाँदी प्रदान करे। पाँव के नक्षत्र से आरम्भ करके उपवास करता हुआ विष्णु और अंग के नक्षत्रों की पूजा करे।।८।।

अन्नैर्भोजनविशेषैः। क्षीरघृतोत्कटैः, क्षीरेण दुग्धेन घृतेनाज्येन चोत्कटैराधिक्येन सहितैस्तैश्च सह गुडैः, गुडेनेक्षुविकारेण युक्तैः, विप्रान् ब्राह्मणान् समभ्यर्चयेत् पूजयेत्। तेषु च ब्राह्मणेषु, सुवर्णं कनकम्, वस्त्रमम्बरम्, रजतं रूप्यम्, नरो मनुष्यो लावण्यमिच्छन् रूपमभिलषन् दद्यात् प्रतिपादयेत्। पादर्क्षाच्चरणनक्षत्राद् मूलात् प्रभृत्यारभ्य क्रमादनुक्रमेणोपवसन् भुञ्जन् अङ्गर्क्षनामस्वपि स्वविधिनाऽऽत्मीयविधानेन वैष्णव्येन पञ्चरात्रविहितेन पूजाक्रमेण वैदिकेन वा केशवपूजनं नारायणार्चनं कुर्याद्विदध्यात्। तथा तेनैव प्रकारेण धिष्ण्यस्य नक्षत्रस्य। यथा भगवतो हरेस्तथा नक्षत्रस्यापि पूजां कुर्यात्।।८।।

अथ चरितव्रतः पुरुषः कीदृगन्यजन्मनि भवतीत्याह—

**प्रलम्बबाहुः पृथुपीनवक्षाः क्षपाकरास्यः सितचारुदन्तः ।**
**गजेन्द्रगामी कमलायताक्षः स्त्रीपित्तहारी स्मरतुल्यमूर्तिः ।।९।।**

पूर्वकथित पूजा करने से मनुष्य लम्बी भुजाओं से युत, विस्तीर्ण और पुष्ट छाती वाला, चन्द्र के समान मुख वाला, सफेद-सुन्दर दाँतों से युत, गजेन्द्र के समान गति वाला, कमल के समान विस्तीर्ण नेत्र वाला, स्त्री के चित्त को हरण करने वाला और कामदेव के समान स्वरूप वाला होता है।।९।।

मनुष्यः पुरुषः कृतरूपसत्रव्रत ईदृग् भवति—प्रलम्बबाहुः, प्रलम्बौ दीर्घौ बाहू भुजौ यस्य। आजानुबाहुरित्यर्थः। पृथुपीनवक्षाः, पृथु विस्तीर्णं पीनं मांसलं च वक्ष उरो यस्य। क्षपाकरास्यश्चन्द्रवदनः। सितचारुदन्तः शुक्लशोभनदन्तः। गजेन्द्रगामी, गजेन्द्रो मत्तहस्तीव सविलासं गच्छति। कमलायताक्षः, कमलं पद्मं तद्वद् आयते विस्तीर्णे चाक्षिणी नेत्रे यस्य। स्त्रीचित्तहारी, स्त्रीणां योषितां चित्तं मनो हरति तच्छीलः। स्मरतुल्यमूर्त्तिः, कामसदृशदेहः।।९।।

अथ स्त्री कीदृशी भवति—

**शरदमलपूर्णचन्द्रद्युतिसदृशमुखी सरोजदलनेत्रा ।**
**रुचिरदशना सुकर्णा भ्रमरोदरसन्निभैः केशैः ।।१०।।**

**पुंस्कोकिलसमवाणी ताम्रोष्ठी पद्मपत्रकरचरणा ।**
**स्तनभारानतमध्या प्रदक्षिणावर्तया नाभ्या ।।११।।**

**कदलीकाण्डनिभोरु सुश्रोणी वरकुकुन्दरा सुभगा ।**
**सुश्लिष्टाङ्गुलिपादा भवति प्रमदा मनुष्यश्च ।।१२।।**

यदि पूर्वोक्त व्रत को स्त्री करे तो शारदीय चन्द्र के समान मुखकान्ति, कमलदल के समान नेत्र, सुन्दर दाँत, सुन्दर कान, भ्रमरोदर के समान केश, पुंस्कोकिल के समान वाणी, ताम्र वर्ण के समान ओंठ, कमल के समान हाथ और पाँव, स्तनों के भार से नत मध्य भाग, दक्षिणावर्त नाभियों से युत, केले के खम्भे के समान ऊरु, सुन्दर नितम्बकूप, स्वामिप्रिया और मिली हुई अँगुलियों से युत पाँव वाली होती है। इसी तरह इस व्रत को करने से पुरुष भी होता है।।१०-१२।।

**शरदमलपूर्णचन्द्रेति**। स्त्री कृतरूपसत्रव्रता कीदृशी भवति ? शरदमलपूर्णचन्द्रद्युतिसदृशमुखी, शरत्काले योऽसावमलो निर्मलः, पूर्णचन्द्रः शशी, तस्य द्युतिः कान्तिः। तत्सदृशं मुखं वदनं यस्याः। सरोजदलनेत्रा पद्मपत्रसदृशाक्षी। रुचिरदशना सुशोभनशुक्लदन्ता। सुकर्णा शोभनकर्णा। केशैर्मूर्धजैर्भ्रमरोदरसन्निभैर्द्विरेफजठरकान्तिभिः। अतिनीलवर्णैरित्यर्थः।

**पुंस्कोकिलेति**। पुंस्कोकिलस्य। पुमांश्चासौ कोकिलः पुंस्कोकिलः। प्रधानकोकिलस्य समा तुल्या वाणी स्वरो यस्याः। ताम्रोष्ठी लोहितदन्तच्छदा। पद्मपत्रकरचरणा पद्मपत्राभौ करौ हस्तौ चरणौ पादौ च यस्याः। स्तनभारानतमध्या, स्तनभारेण कुचयुगलोद्वहनेन नतं विनतं मध्यं यस्याः। तथा नाभ्या प्रदक्षिणावर्तया संयुक्ता। प्रदक्षिणेनावर्तो यस्याः।

कदलीकाण्डनिभोरूः, कदली रम्भा तस्याः काण्डं शाखा, तन्निभो तत्सदृशावुरू यस्याः। सुश्रोणी शोभनवराङ्गा, वरकुकुन्दरा, वरौ शोभनौ कुकुन्दरौ नितम्बरूपकौ यस्याः। तथा च—

नितम्बरूपकौ यौ तु तौ कुकुन्दरसंज्ञितौ।

सुभगा सौभाग्योपेता। भर्तृवल्लभेत्यर्थः। सुश्लिष्टाङ्गुलिपादा। सुश्लिष्टाः संहिता अङ्गुलयो ययोस्तादृशौ पादौ यस्याः। एवंविधा प्रमदा स्त्री। मनुष्यः पुरुषश्च भवति।

अथ रूपसत्राचरितस्य प्रशंसार्थमाह—

**यावन्नक्षत्रमाला विचरति गगने भूषयन्तीह भासा**
**तावन्नक्षत्रभूतो विचरति सह तैर्ब्रह्मणोऽह्नोऽवशेषम्।**
**कल्पादौ चक्रवर्ती भवति हि मतिमांस्तत्क्षयाच्चापि भूयः**
**संसारे जायमानो भवति नरपतिर्ब्राह्मणो वा धनाढ्यः ॥१३॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां रूपसत्रं**
**नाम पञ्चाधिकशततमोऽध्यायः ॥१०५॥**

इस लोक में अपनी कान्ति से शोभा उत्पन्न करती हुई नक्षत्रमाला जब तक आकाश में रहती है, तब तक स्त्री या पुरुष नक्षत्ररूप होकर नक्षत्रों के समान कल्पान्त

तक विचरण करते हैं। तत्पश्चात् वह पुरुष दूसरे कल्प के आदि में बुद्धिमान चक्रवर्ती राजा होता है और चक्रवर्त्तित्व नष्ट होने के पश्चात् संसार में जन्म लेकर राजा या धनाढ्य ब्राह्मण होता है।।१३।।

**इति 'विमला'हिन्दीटीकायां रूपसत्राध्याय: पञ्चाधिकशततम: ॥१०५॥**

गगने नभसि नक्षत्राणामृक्षाणां माला पंक्तिर्यावद्विचरति तिष्ठति। इहास्मिन् लोके भासा कान्त्या भूषयन्ती शोभामुत्पादयन्ती। तावत् पुरुष: स्त्री वा तैरेव नक्षत्रै: सह साकं नक्षत्रभूतस्तारकरूपो विचरति तिष्ठति। ब्रह्मण: पितामहस्याह्नो दिनस्यावशेषं कल्पान्तं यावत्। अन्यस्मिन् कल्पादौ पुन: कल्पप्रारम्भे चक्रवर्ती सार्वभौमो राजा मतिमान् पण्डितश्च भवति। भूय: पुनस्तत्क्षयाच्चक्रवर्तित्वविनाशात् संसारे मनुष्यो जायमान उत्पद्यमानो नरपती राजा भवति, अथवा ब्राह्मणो द्विजो धनाढ्यो बहुवित्तो भवति।।१३।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ रूपसत्रं**
**नाम पञ्चाधिकशततमोऽध्याय: ॥१०५॥**

## अथ द्वादशमासनामाध्यायः

अथ द्वादशमासनामानि व्याख्यायन्ते। तत्र मार्गशीर्षमासात् प्रभृति द्वादशमासानां नामान्याह—

**मृगशीर्षाद्याः केशवनारायणमाधवाः सगोविन्दाः ।**
**विष्णुमधुसूदनाख्यौ त्रिविक्रमो वामनश्चैव ॥१॥**

**श्रीधरनामा तस्मात् सहृषीकेशश्च पद्मनाभश्च ।**
**दामोदर इत्येते मासाः प्रोक्ता यथासङ्ख्यम् ॥२॥**

केशव, नारायण, माधव, गोविन्द, विष्णु, मधुसूदन, त्रिविक्रम, वामन, श्रीधर, हृषीकेश, पद्मनाभ, दामोदर—ये क्रम से मार्गशीर्ष आदि बारह मासों के नाम हैं। जैसे कि मार्गशीर्ष का केशव, पौष का नारायण इत्यादि।।१-२।।

**मृगशीर्षाद्या इति** । मार्गशीर्षमासात् प्रभृति। द्वादशानां मासानां द्वादश नामानि। तद्यथा—केशवो मार्गशीर्षः। नारायणः पौषः। माधवो माघः। गोविन्दः फाल्गुनः। विष्णुश्चैत्रः। मधुसूदनाख्यो वैशाखः। त्रिविक्रमो ज्येष्ठः। वामन आषाढः।

तस्मादुत्तरः श्रीधरनामा श्रावणः। हृषीकेशो भाद्रपदः। पद्मनाभ आश्वयुजः। चकारः समुच्चये। दामोदरः कार्तिकः। इत्येवम्प्रकारा यथासङ्ख्यं यथाक्रमं मासाः प्रोक्ताः कथिताः। भगवन्नाम्ना मासाः क्रमेणैते ज्ञेया इति। केचित् पठन्ति 'मासेशाः स्युर्यथासङ्ख्यं' इति। यथासङ्ख्यं यथाक्रममेते द्वादशानां मासानामीशोः स्वामिनः स्युर्भवेयुः।।१-२।।

अथ द्वादशीप्रशंसार्थमाह—

**मासनामसमुपोषितो नरो द्वादशीषु विधिवत् प्रकीर्तयन् ।**
**केशवं समभिपूज्य तत्पदं याति यत्र नहि जन्मजं भयम् ॥३॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां द्वादशमासनामानुकीर्तनं नाम षडधिकशततमोऽध्यायः ॥१०६॥**

मनुष्य विधिपूर्वक द्वादशी में मास के नाम के साथ व्रत रखकर केशव, नारायण आदि की पूजा करने के पश्चात् उनके नाम का कीर्तन करता हुआ उनके पद को प्राप्त होता है, जहाँ पर पुनर्जन्म का भय नहीं होता।।३।।

**इति 'विमला' हिन्दीटीकायां द्वादशमासनामाध्यायः षडधिकशततमः ॥१०६॥**

नरो मनुष्यो मासनाम्ना समुपोषित कृतोपवासो: द्वादशीषु विधिवद्विधानेन प्रकीर्तयन् स्मरन् केशवं नारायणमित्यादि। यथा मार्गशीर्षद्वादश्यां केशवम्। पौषस्य द्वादश्यां नारायणम्। एवमन्येष्वपि। तथा च समभिपूज्य समभ्यर्च्य तस्य पदं स्थानं याति प्राप्नोति। यत्र पुनर्न हि जन्मजं भयं भवति संसारे भूयो न जायते। परमेश्वरसायुज्यतां गच्छतीति।।३।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ द्वादशमासनामानुकीर्तनं नाम षडधिकशततमोऽध्याय: ॥१०६॥**

## अथोपसंहाराध्यायः

अथोपसंहाराध्यायो व्याख्यायते। तत्रादावेव शास्त्रमत्योर्माहात्म्यमाह—

**ज्योतिःशास्त्रसमुद्रं प्रमथ्य मतिमन्दराद्रिणाऽथ मया।**
**लोकस्यालोककरः शास्त्रशशाङ्कः समुत्क्षिप्तः ॥१॥**

मैंने ( वराहमिहिर ने ) बुद्धिरूप मन्दराचल के द्वारा ज्यौतिष शास्त्ररूप समुद्र का अच्छी प्रकार से मन्थन करके संसार को प्रकाशित करने वाले शास्त्ररूप चन्द्र को बाहर निकाला है।।१।।

ज्योतिःशब्देन प्रधाननक्षत्राण्युच्यन्ते। ज्योतिषां शास्त्रं ज्योतिःशास्त्रम्। तदेव दुर्विज्ञेयत्वात् समुद्रं सागरम्। मतिमन्दराद्रिणा, मतिर्बुद्धिरेव मन्दरः पर्वतः, तेन मतिमन्दराद्रिणा प्रमथ्य निर्मथ्य लोकस्य जगतः आलोककरः प्रकाशकरः, शास्त्रशशाङ्कः शास्त्रचन्द्रः समुत्क्षिप्त उद्धृतः।।१।।

अन्यत् प्रतिपादयितुमाह—

**पूर्वाचार्यग्रन्था नोत्सृष्टाः कुर्वता मया शास्त्रम्।**
**तानवलोक्येदं च प्रयतध्वं कामतः सुजनाः ॥२॥**

इस शास्त्र को बनाते हुये मैंने पूर्वाचार्यकृत ग्रन्थों के आशयों को नहीं छोड़ा है। अतः उन पूर्वाचार्यकृत ग्रन्थों को और इस शास्त्र को यत्नपूर्वक देखकर पण्डितों को प्रयत्न करना चाहिये अर्थात् जो अच्छा हो, उसको ग्रहण करना चाहिये।।२।।

पूर्वोक्तानि यानि शास्त्राणि तानि न सन्त्यक्तानि। तान्येव दृष्ट्वा सर्वथा संक्षेपेण सुवृत्तैः कृतम्। तान् पूर्वाचार्योक्तान् इदं मदीयं च शास्त्रमवलोक्य दृष्ट्वा कामतो यथेच्छं सुजनाः साधवो बुधाः प्रयतध्वम्। यच्छोभनं तदेव ग्राह्यमित्यर्थः।।२।।

अधुना सज्जनानां दुर्जनानाञ्च चेष्टितमाह—

**अथवा कृशमपि सुजनः प्रथयति दोषार्णवाद् गुणं दृष्ट्वा।**
**नीचस्तद्विपरीतः प्रकृतिरियं साध्वसाधूनाम् ॥३॥**

अथवा सुजन मनुष्य दोषरूप समुद्र में थोड़ा-सा भी गुण देखकर उसका विस्तार करते हैं; परन्तु नीच पुरुष इससे विपरीत स्वभाव का होता है अर्थात् गुणों को छिपाता है और स्वल्प दोष का भी विस्तार करता है। यही साधु ( सज्जन ) और असाधु ( दुष्ट ) का लक्षण है।।३।।

अथवा सुजनः प्रधानजनो दोषार्णवाद् दोषसागरात् कृशमपि स्वल्पमपि गुणं दृष्ट्वा तमेव प्रथयति प्रख्यापयति, दोषान् प्रच्छादयति। **नीचस्तद्विपरीत इति**। नीचो गुणसागरात्

स्वल्पं दोषं दृष्ट्वा गुणान् प्रच्छाद्य तमेव दोषं प्रख्यापयति। इयं साध्वसाधूनां सज्जनदुर्जनानां प्रकृति: स्वभाव इति।।३।।

काव्यमभिनवं सर्वथा दुर्जनानां प्रदर्शयितव्यमित्येतत् प्रतिपादयितुमाह—

**दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति।**
**श्रावयितव्यं तस्माद् दुष्टजनस्य प्रयत्नेन ।।४।।**

काव्यरूप सुवर्ण दुर्जनरूप अग्नि द्वारा तपाये जाने पर विशुद्धि को प्राप्त होता है। इसलिये दुर्जन मनुष्य को यत्नपूर्वक शास्त्र का श्रवण कराना चाहिये।।४।।

दुर्जनहुताशेन दुर्जनाग्निना काव्यसुवर्णं काव्यमेव सुवर्णं तप्तं तापितं विशुद्धिं निर्मलतामायाति प्राप्नोति। यथा कनकं वह्नितप्तं शुद्धं भवत्येवं दुर्जनमुखपतितं काव्यं शुद्धं भवति। यत: स दोषतत्परो भवति, न गुणग्राही। तस्मात् प्रयत्नेन दुष्टजनस्य दुर्जनस्य काव्यं श्रावयितव्यं प्रदर्शनीयमिति।।४।।

अधुना विदुष: प्रार्थयन्नाह—

**ग्रन्थस्य यत् प्रचरतोऽस्य विनाशमेति**
**लेख्याद् बहुश्रुतमुखाधिगमक्रमेण।**
**यद्वा मया कुकृतमल्पमिहाकृतं वा**
**कार्यं तदत्र विदुषा परिहृत्य रागम् ।।५।।**

प्रचारोन्मुख इस ग्रन्थ में लेखक-दोष से जो अशुद्धियाँ रह जायँ या जो मेरे द्वारा आगम-विरुद्ध किया गया हो और जो नहीं किया गया हो, वह सब मत्सरता का परित्याग कर बहुश्रुत मनुष्यों के मुख से सुन कर पण्डितों को यहाँ पर ठीक कर लेना चाहिये।

अस्य ग्रन्थस्य प्रचरत: प्रचरमाणस्य यद्विनाशमेत्यपशब्दतां गच्छति। लेख्याद् लेखक-दोषाद् बहुश्रुतमुखाधिगमक्रमेण बहुश्रुता ये जनास्तन्मुखेभ्योऽधिगम: प्राप्तिस्तस्य क्रमेण परिपाट्या पूर्वापरपर्यालोचनयाऽर्थासङ्गोत्पत्तेर्येऽपशब्दं जानन्ति तदत्रास्मिन् शास्त्रे विदुषा रागं परिहृत्य कार्यम्। तन्मुखेभ्योऽधिगम्य विदुषा पण्डितेन रागं मात्सर्यं परिहृत्य त्यक्त्वा कार्यं कर्तव्यम्। तथा यद्वा मया कुकृतं कुत्सितमनागमेन कृतं विरचितमल्पं वा परिमितम-व्यापकं कृतं वा इहास्मिन् शास्त्रे मूलादेवाकृतं यन्न कृतं तदत्रास्मिन् शास्त्रे विदुषा रागं परिहृत्य कार्यमिति।।५।।

सतां प्रणामपूर्वकाणि शास्त्राणि प्रमाणितानि भवन्त्येतदेव प्रदर्शयन्नाह—

**दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनेदम्।**
**शास्त्रमुपसङ्गृहीतं नमोऽस्तु पूर्वप्रणेतृभ्य: ।।६।।**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायामुपसंहारो नाम सप्ताधिकशततमोऽध्याय: ।।१०७।।**

सूर्य, मुनिगण और गुरुजनों के चरणों में नमस्कारजन्य अनुग्रह से उत्पन्न बुद्धि के द्वारा इस ग्रन्थ का संग्रह मैंने किया है। अत: पूर्वाचार्यों के लिये मेरा नमस्कार है।।६।।

**इति 'विमला' हिन्दीटीकायामुसंहाराध्याय: सप्ताधिकशततम: ॥१०७॥**

दिनकर आदित्य:। ताराभा: सर्व एव ग्रहा:। मुनयो वसिष्ठादय:। गुरुरादित्यदासाख्य: स्वपिता। दिनकरमुनिगुरूणां चरणा: पादा:। तेषां प्रणिपातो नमस्कार:। तत्कृतात् तत्करणाज्जात: प्रसादोऽनुग्रहो यस्ततो मतिर्बुद्धिर्यस्य तेन दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिना मयेदं शास्त्रं ज्यौतिषग्रन्थमुपसङ्गृहीतं संक्षिप्तीकृतम्। तस्मात् तेभ्य: पूर्वप्रणेतृभ्य: पूर्वाचार्येभ्यो नमोऽस्तु नमस्कारो भवतु।।६।।

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावुपसंहारो नाम सप्ताधिकशततमोऽध्याय: ॥१०७॥**

## अथ शास्त्रानुक्रमण्यध्यायः

अथ शास्त्रानुक्रमणी व्याख्यायते। कदाचिदादर्शदोषाल्लेखदोषाच्चाध्यायव्यत्ययो भवत्यतोऽनुक्रमणी सद्भिः क्रियते। तत्रादावेवाध्यायसंग्रहार्थमाह—

**शास्त्रोपनयः पूर्वं सांवत्सरसूत्रमर्कचारश्च।**
**शशिराहुभौमबुधगुरुसितमन्दशिखिग्रहाणां च ॥१॥**

पहले शास्त्रोपनय, तत्पश्चात् सांवत्सरसूत्र, अर्कचार, चन्द्रचार, राहुचार, भौमचार, बुधचार, गुरुचार, शुक्रचार, शनिचार, केतुचार।।१।।

गतार्थेयमार्या। शिखिग्रहाः केतवः। चारशब्दोऽत्र सम्बध्यते।।१।।

अन्यदप्याह—

**चारश्चागस्त्यमुनेः सप्तर्षीणां च कूर्मयोगश्च।**
**नक्षत्राणां व्यूहो ग्रहभक्तिर्ग्रहविमर्दश्च ॥२॥**

अगस्त्यचार, सप्तर्षिचार, कूर्मविभाग, नक्षत्रव्यूह, ग्रहभक्तियोग, ग्रहयुद्ध।।२।।

सप्तर्षीणां चारो ग्रहभक्तिर्ग्रहविमर्दो ग्रहयुद्धम्। गतार्थेयमार्या।।२।।

अन्यदप्याह—

**ग्रहशशियोगः सम्यग्ग्रहवर्षफलं ग्रहाणां च।**
**शृङ्गाटसंस्थितानां मेघानां गर्भलक्षणं चैव ॥३॥**

शशिग्रहसमागम, ग्रहवर्षफल, ग्रहशृङ्गाटक, मेघों के गर्भलक्षण।।३।।

ग्रहशशियोगः समागमः। ग्रहाणां शृङ्गाटसंस्थितानां ग्रहशृङ्गाटकफलम्। गतार्थेयमार्या।।३।।

अन्यदप्याह—

**धारणवर्षणरोहिणिवायव्याषाढभद्रपदयोगाः ।**
**क्षणवृष्टिः कुसुमलताः सन्ध्याचिह्नं दिशां दाहः ॥४॥**

गर्भधारण, प्रवर्षण, रोहिणीयोग, स्वातियोग, आषाढ़ीयोग, वातचक्र, सद्योवर्षण, कुसुमलता, सन्ध्यालक्षण, दिग्दाहलक्षण।।४।।

क्षणवृष्टिः सद्योवर्षः। गतार्थेयमार्या।।४।।

अन्यदप्याह—

**भूकम्पोल्कापरिवेषलक्षणं शक्रचापखपुरं च।**
**प्रतिसूर्यो निर्घातः सस्यद्रव्यार्घकाण्डं च ॥५॥**

भूकम्पलक्षण, उल्कालक्षण, परिवेषलक्षण, इन्द्रायुधलक्षण, गन्धर्वनगरलक्षण, प्रतिसूर्यलक्षण, निर्घातलक्षण, सस्यजातक, द्रव्यनिश्चय, अर्घकाण्ड।।५।।

खपुरं गन्धर्वपुरम्। गतार्थेयमार्या।।५।।

अन्यदप्याह—

**इन्द्रध्वजनीराजनखञ्जनकोत्पातबर्हिचित्रं च।**
**पुष्याभिषेकपट्टप्रमाणमसिलक्षणं वास्तु ॥६॥**

इन्द्रध्वजसम्पत्, नीराजनविधि, खञ्जनलक्षण, उत्पातलक्षण, मयूरचित्रक, पुष्यस्नान, पट्टलक्षण, खड्गलक्षण, वास्तुविद्या।।६।।

बर्हिचित्रं मयूरचित्रकम्। असिलक्षणं खड्गलक्षणम्। गतार्थेयमार्या।।६।।

अन्यदप्याह—

**उदकार्गलमारामिकममरालयलक्षणं कुलिशलेपः।**
**प्रतिमा वनप्रवेशः सुरभवनानां प्रतिष्ठा च ॥७॥**

उदकार्गल, वृक्षायुर्वेद, प्रासादलक्षण, वज्रलेप, प्रतिमालक्षण, वनप्रवेश, सुरभवन-प्रतिष्ठा।।७।।

आरामिकं वृक्षायुर्वेदः। कुलिशलेपो वज्रलेपः। गतार्थेयमार्या।।७।।

अन्यदप्याह—

**चिह्नं गवामथ शुनां कुक्कुटकूर्माजपुरुषचिह्नं च।**
**पञ्चमनुष्यविभागः स्त्रीचिह्नं वस्त्रविच्छेदः ॥८॥**

गोलक्षण, श्वानलक्षण, कुक्कुटलक्षण, कूर्मलक्षण, छागलक्षण, पञ्चमहापुरुषलक्षण, स्त्रीलक्षण, वस्त्रविच्छेदलक्षण।।८।।

चिह्नं लक्षणम्। गतार्थेयमार्या।।८।।

अन्यदप्याह—

**चामरदण्डपरीक्षा स्त्रीस्तोत्रं चापि सुभगकरणं च।**
**कान्दर्पिकानुलेपनपुंस्त्रीकाध्यायशयनविधिः ॥९॥**

चामरलक्षण, दण्डपरीक्षा, स्त्रीप्रशंसा, सौभाग्यकरण, कान्दर्पिक, गन्धयुक्ति, पुंस्त्रीसमागम, शयनविधि।।९।।

स्त्रीस्तोत्रं स्त्रीप्रशंसा। अनुलेपनं गन्धयुक्तिः। गतार्थेयमार्या।।९।।

अन्यदप्याह—

**वज्रपरीक्षा मौक्तिकलक्षणमथ पद्मरागमरकतयोः।**
**दीपस्य लक्षणं दन्तधावनं शाकुनं मिश्रम् ॥१०॥**

वज्रपरीक्षा, मुक्तालक्षण, पद्मरागपरीक्षा, मरकतपरीक्षा, दीपलक्षण, दन्तकाष्ठलक्षण, शाकुनमिश्रफल।।१०।।

गतार्थेयमार्या:।।१०।।

अन्यदप्याह—

**अन्तरचक्रं विरुतं श्वचेष्टितं विरुतमथ शिवायाश्च।**
**चरितं मृगाश्वकरिणां वायसविद्योत्तरं च ततः ॥११॥**

अन्तरचक्र, विरुत, श्वचक्र, शिवारुत, मृगचेष्टा, अश्वचेष्टा, वायसविद्या। यहाँ पर शिवारुताध्याय के अन्तर्गत श्वचेष्टित और गोचेष्टिताध्याय के अन्तर्गत उष्ट्री, व्याघ्री, सिंही आदि प्रधान सभी जीवों का लक्षण कहा गया है तथा मृग जातियों के मध्य में मार्जार, व्याघ्र, सूकर, ऊँट आदि जीवों का श्रृगाल की तरह लक्षण कहा गया है।।११।।

श्वचेष्टितं शिवारुते चान्तर्लीनम्। तथा गोचेष्टितमध्ये उष्ट्रीव्याघ्रीसिंहीप्रधानप्राणिनां सर्वमेवान्तर्लीनम्। तथा मृगजातीनां मध्ये विडालव्याघ्रवराहसूकरोष्ट्रादीनां श्रृगालवच्चेष्टित-लक्षणं कथितम्। अन्तर्लीनं सर्वत्र परिज्ञेयम्। एषां श्ववल्लक्षणं चेष्टितं च सर्वं परि-ज्ञेयम्।।११।।

अथान्यदप्यध्यायसंग्रहविधिमाह—

**पाको नक्षत्रगुणास्तिथिकरणगुणाः सधिष्ण्यजन्मगुणाः।**
**गोचरमथ ग्रहाणां कथितो नक्षत्रपुरुषश्च ॥१२॥**

पाकाध्याय, नक्षत्रगुण, तिथिगुण, करणगुण, नक्षत्रजातक, ग्रहगोचराध्याय, नक्षत्रपुरुष, रूपसत्र—ये अध्याय इस ग्रन्थ के अन्तर्गत हैं।।१२।।

पाकाध्यायः। नक्षत्रगुणाः। तिथिगुणाः। करणगुणाः। अत्रैव मध्ये राशिगुणाः। पुंसां क्षुरकर्मकर्णवेधनविवाहादिकं रक्षोपतापशान्तिकर्म च तत्रैवोक्तम्। सह नक्षत्रजन्मगुणश्च ग्रहगोचराध्यायः। नक्षत्रपुरुषो रूपसत्रं चोक्तं कथितम्।।१२।।

अन्यदप्याह—

**शतमिदमध्यायानामनुपरिपाटिक्रमादनुक्रान्तम्।**
**अत्र श्लोकसहस्राण्याबद्धान्यूनचत्वारि ॥१३॥**

यहाँ पर जिस क्रम से पठित किये गये हैं, उसी क्रम से इस ग्रन्थ में एक सौ अध्याय बनाये गये हैं। इसमें एक सौ कम चार हजार श्लोक दिये गये हैं। वातचक्र, अङ्गविद्या, पिटकलक्षण, अश्वलक्षण, गजलक्षण–ये पाँच अध्याय इस प्रमाण से अलग हैं। इन अध्यायों की पद्यसंख्या मिलाकर कुल चार हजार श्लोक होते हैं।।१३।।

इदं शतमध्यायानामनुपरिपाटिक्रमादनुक्रान्तं रचितम्। येनैव प्रकारेण परिपठितं तेनैव रचितम्। अत्रास्यां संहितायां श्लोकानामनुष्टुप्छन्दसामूनचत्वारि सहस्राणि। एकोनचत्वारिंश-

च्छतानि। आबद्धानि रचितानि। वातचक्राङ्गविद्यापिटकाश्वगजलक्षणरहितमेतत्प्रमाणम्। तैश्च सह परिपूर्णानि चत्वारि सहस्राणि भवन्तीति।।१३।।

अन्यदप्याह—

**अत्रैवान्तर्भूतं परिशेषं निगदितं च यात्रायाम्।**
**बह्वाश्चर्यं जातकमुक्तं करणं च बहुचोद्यम्॥१४॥**

**इति श्रीवराहमिहिरकृतौ बृहत्संहितायां शास्त्रानुक्रमणी नामाष्टाधिकशततमोऽध्यायः॥१०८॥**

इसी के अन्तर्भूत परिशेष समस्त विषय 'यात्रा' नामक पुस्तक में कहे गये हैं तथा मैंने बहुत आश्चर्य करने वाला जातक और बहुत प्रशस्त करण ( पञ्चसिद्धान्तिका ) कहा है।।१४।।

**इति 'विमला'हिन्दीटीकायां शास्त्रानुक्रमण्यध्यायोऽष्टाधिकशततमः॥१०८॥**

अत्रैवान्तर्भूतं जातकं यात्राविधानकरणं सर्वमन्तर्लीनं परिशेषं प्रकाशीकरणाय यात्रायां सर्वं निगदितम्। तथैव प्रकाशीकरणाय बह्वाश्चर्यं प्रभूतविस्मयजननं जातकमुक्तं विस्तृतम्। तथा बहुचोद्यं करणं पञ्चसिद्धान्तिकायां शिष्यहितार्थं प्रकाशितम्।।१४।।

**आचार्यप्रवरस्य बोधजलधेः पारं तितीर्षुर्जनो**
**व्यामुह्यन्नभिधेयरत्ननिचयैः कांक्षंस्तरीं भ्राम्यति।**
**इत्येवंविधमाकलय्य करुणामालम्ब्य भट्टोत्पल-**
**श्चक्रे तत्कृतिसंहिताविवरणं स्थैर्यं प्लवं कीर्तये॥**
**यदत्राधिकमूनं वा भ्रान्त्या त्वज्ञानतोऽपि वा।**
**विपर्ययेण वा यत्तत्सर्वं संशोध्यतां बुधाः॥**

**इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शास्त्रानुक्रमणी नामाष्टाधिकशततमोऽध्यायः॥१०८॥**

## समाप्तेयं बृहत्संहिता

# श्लोकानुक्रमणी

## वस्तुनिष्ठप्रश्नाः

**१. कस्मिन् युगे वास्तुपुरुषोत्पत्तिः?**

(अ) कृतयुगे (स) द्वापरे

(ब) त्रेतायाम् (द) कलियुगे

**२. विचित्रमपरिचितपुरुषं कैः गृहीतम्?**

(अ) असुरैः (स) किन्नरैः

(ब) देवैः (द) मनुजैः

**३. तं पुरुषममरगणेन कुत्र न्यस्तम्?**

(अ) आकाशे (स) जले

(ब) भूमौ (द) गर्ते

**४. तं कथं न्यस्तवन्त अमराः?**

(अ) ऊर्ध्वमुखं कृत्वा (स) अधोमुखं कृत्वा

(ब) तीर्यङ्मुखं कृत्वा (द) दक्षिणवक्रमुखं विधाय

**५. देवैः विन्यस्तस्य पुरुषस्य किन्नाम कल्पितम्?**

(अ) वास्तुपुरुषः (स) असुरः

(ब) दानवः (द) मानवः

**६. तं पुरुषं 'वास्तुपुरुष' इति केन समुद्घोषितम्?**

(अ) देवैः (स) दानवैः

(ब) मुनिभिः (द) ब्रह्मणा

**७. तं पुरुषमधोमुखं विन्यस्य किमकुर्वन् देवगणाः?**

(अ) तस्योपरि न्यवसन् (स) तमपूजयन्

(ब) स्वस्थानं कल्पितवन्तः (द) गृहरक्षकं तमकल्पयन्

**८. पुरा कृतयुगे ह्यासीन्महद्भुतं समुपस्थितम्।**
**व्याप्यमानं शरीरेण सकलं भुवनं ततः॥**
**तद्दृष्ट्वा विस्मयं देवा गताः सेन्द्रा भयावृताः।**
**ततस्तै क्रोधसन्तप्तैर्गृहीत्वा तमथासुरम्॥**
**विनिक्षिप्तमधोवक्त्रं स्थितास्तत्रैव ते सुराः।**
**तमेव वास्तुपुरुषं ब्रह्मा समभिकल्पयेत्॥**
**इति कस्य वचनम्?**

(अ) वसिष्ठस्य (स) गर्गस्य
(ब) बृहस्पते: (द) शौनकस्य

**९. वास्तुपुरुषः असुर आसीदिति केनोक्तम्?**
(अ) बृहस्पतिना (स) ब्रह्मणा
(ब) देवै: (द) मुनिभि:

**१०. महाद्भुतमसुरं विलोक्य सेन्द्राः सुराः कुत्र गताः?**
(अ) ब्रह्मलोकम् (स) शिवलोकम्
(ब) विष्णुलोकम् (द) वरुणलोकम्

**११. नृपगृहं कतिहस्तपरिमितं विस्तरेण भवेत्?**
(अ) अष्टोत्तरशतं हस्तपरिमितं विस्तृतम्
(ब) सार्द्धशतं हस्तपरिमितं विस्तरेण
(स) द्विशतं हस्तपरिमितं विस्तरेण
(द) सपादशतं हस्तपरिमितं विस्तरेण

**१२. अष्टोत्तरशतं हस्तपरिमितं विस्तृतं गृहं कीदृशं भवति?**
(अ) उत्तमम् (स) अधमम्
(ब) मध्यमम् (द) निकृष्टम्

**१३. कियता दैर्घ्येण राजगृहं भवेदुत्तमम्?**
(अ) विस्तराद् दैर्घ्यं सपादपरिमितं भवेत्
(ब) विस्तराद् दैर्घ्यं द्विगुणपरिमितं भवेत्
(स) विस्तराद् दैर्घ्यमर्धं परिमितं भवेत्
(द) विस्तराद् सार्द्धं दैर्घ्यं भवेत्

**१४. मध्यमं गृहं कति हस्तपरिमितं भवेत्?**
(अ) शतहस्तपरिमितम् (स) सपादशतहस्तपरिमितम्
(ब) पादोनशतहस्तपरिमितम् (द) द्विशतहस्तपरिमितम्

**१५. तृतीयगृहस्य विस्तारः कति हस्तपरिमितं स्यात्?**
(अ) द्विनवतिहस्तपरिमितम् (स) अशीतिहस्तपरिमितम्
(ब) नवतिहस्तपरिमितम् (द) पञ्चनवतिहस्तपरिमितम्

**१६. चतुर्थगृहस्य विस्तारः कति हस्तपरिमितं भवेत्?**
(अ) चतुरशीतिहस्तपरिमितम् (स) सप्ततिहस्तपरिमितम्
(ब) अशीतिहस्तपरिमितम् (द) नवतिहस्तपरिमितम्

**१७. चतुर्थगृहस्य दैर्घ्यं कति हस्तपरिमितं भवेत्?**

(अ) पञ्चदशाधिकशतम्　(स) सार्द्धशतम्
(ब) सपादशतम्　(द) पादोनद्विशतम्

**१८. अष्टोत्तरं हस्तशतं विस्तारान्नृपमन्दिरम् ।**
**कार्यं प्रधानमन्यानि तथाष्टाष्टोनितानि तु ॥**
**विस्तारं पादसंयुक्तं दैर्घ्यं तेषां प्रकल्पयेत् ।**
**एवं पञ्च नृपः कुर्याद् गृहाणाञ्च पृथक्पृथक् ॥**
**इति केनोक्तम्?**

(अ) कश्यपेन　(स) शौनकेन
(ब) वसिष्ठेन　(द) नारदेन

**१९. पञ्चमं गृहं कति हस्तविस्तृतं भवेत्?**

(अ) षट्सप्ततिहस्तपरिमितम्　(स) षष्टिहस्तपरिमितम्
(ब) सप्ततिहस्तपरिमितम्　(द) अशीतिहस्तपरिमितम्

**२०. सेनापतेः प्रथमगृहस्य विस्तारः कति हस्तपरिमितः भवेत्?**

(अ) चतु:षष्टिहस्तपरिमितम्　(स) पञ्चषष्टिहस्तपरिमितम्
(ब) पञ्चाशद्धस्तपरिमितम्　(द) पञ्चपञ्चाशद्धस्तपरिमितम्

**२१. सेनापतेः प्रथमगृहस्य दैर्घ्यं कियद्धस्तपरिमितं भवेत्?**

(अ) षोडशाङ्गुलोत्तरं चतु:सप्ततिहस्तपरिमितम्
(ब) पञ्चदशाङ्गुलाधिकं सप्ततिहस्तपरिमितम्
(स) पञ्चाङ्गुलोत्तरं पञ्चाशद्धस्तपरिमितम्
(ब) सप्तदशाङ्गुलोत्तरं द्विसप्ततिहस्तपरिमितम्

**२२. सेनापतेः द्वितीयगृहस्य विस्तारः कति हस्तपरिमितः स्यात्?**

(अ) अष्टपञ्चाशद्धस्तपरिमित:　(स) चत्वारिंशद्धस्तपरिमित:
(ब) पञ्चपञ्चाशद्धस्तपरिमित:　(द) पञ्चचत्वारिंशद्धस्तपरिमित:

**२३. सेनापतेः तृतीयगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) द्विपञ्चाशद्धस्तपरिमित:　(स) अष्टाचत्वारिंशद्धस्तपरिमित:
(ब) पञ्चाशद्धस्तपरिमित:　(द) सप्तचत्वारिंशद्धस्तपरिमित:

**२४. सेनापतेः चतुर्थगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) षट्चत्वारिंशद्धस्तपरिमित:　(स) पञ्चचत्वारिंशद्धस्तपरिमित:
(ब) चत्वारिंशद्धस्तपरिमित:　(द) चतुश्चत्वारिंशद्धस्तपरिमित:

**२५. सेनापतेः पञ्चमगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) चत्वारिंशद्धस्तपरिमित　(स) पञ्चचत्वारिंशद्धस्तपरिमित:
(ब) द्विचत्वारिंशद्धस्तपरिमित:　(द) अष्टाचत्वारिंशद्धस्तपरिमित:

**२६. सचिवगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) षष्टिहस्तपरिमितः (स) पञ्चपञ्चाशद्धस्तपरिमितः
(ब) द्विषष्टिहस्तपरिमितः (द) सप्तपञ्चाशद्धस्तपरिमितः

**२७. सचिवस्य प्रथमगृहस्य दैर्घ्यं कति हस्तपरिमितं भवेत्?**

(अ) द्वादशाङ्गुलोत्तरं षट्षष्टिहस्तपरिमितम्
(ब) पञ्चषष्टिहस्तपरिमितम्
(स) द्विषष्टिहस्तपरिमितम्
(द) एकषष्टिहस्तपरिमितम्

**२८. सचिवस्य द्वितीयगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) षट्पञ्चाशद्धस्तपरिमितः (स) द्विपञ्चाशद्धस्तपरिमितः
(ब) पञ्चपञ्चाशद्धस्तपरिमितः (द) पञ्चाशद्धस्तपरिमितः

**२९. सचिवस्य तृतीयगृहस्य विस्तारो भवेत्?**

(अ) द्विपञ्चाशद्धस्तपरिमितः (स) पञ्चपञ्चाशद्धस्तपरिमितः
(ब) पञ्चाशद्धस्तपरिमितः (द) एकपञ्चाशद्धस्तपरिमितः

**३०. सचिवस्य चतुर्थगृहस्य विस्तारो भवेत्?**

(अ) अष्टाचत्वारिंशद्धस्तपरिमितः (स) अष्टात्रिंशद्धस्तपरिमितः
(ब) चत्वारिंशद्धस्तपरिमितः (द) एकचत्वारिंशद्धस्तपरिमितः

**३१. सचिवस्य पञ्चमगृहस्य विस्तारो भवेत्—**

(अ) द्वाविंशतिहस्तपरिमितः (स) चतुर्विंशतिहस्तपरिमितः
(ब) त्रयोविंशतिहस्तपरिमितः (द) पञ्चविंशतिहस्तपरिमितः

**३२. युवराजस्य कति गृहाणि भवेयुः?**

(अ) त्रीणि गृहाणि (स) पञ्च गृहाणि
(ब) चत्वारि गृहाणि (द) द्वे गृहे

**३३. युवराजस्य प्रथमगृहस्य विस्तारः कति हस्तपरिमितः?**

(अ) सप्ततिहस्तपरिमितः (स) अशीतिहस्तपरिमितः
(ब) नवतिहस्तपरिमितः (द) शतं हस्तपरिमितः

**३४. राजवैद्यस्य गृहस्य विस्तारो भवेत्—**

(अ) चत्वारिंद्धस्तपरिमितः (स) एकोनचत्वारिंशद्धस्तपरिमितः
(ब) अष्टात्रिंशद्धस्तपरिमितः (द) अष्टाचत्वारिंशद्धस्तपरिमितः

**३५. गृहाणामुच्छ्रायः कति हस्तपरिमितः भवेत्?**

(अ) विस्तारतुल्यम्भवेत् (स) विस्तारादर्धं भवेत्
(ब) विस्ताराद्द्विगुणम्भवेत् (द) विस्तारात्किञ्चिन्न्यूनं भवेत्

३६. हस्तद्वात्रिंशता युक्तो विस्तारः स्याद् द्विजालये।
विस्तारं सदशांशं तु दैर्घ्यं तस्य प्रकल्पयेत्॥
त्रयाणां क्षत्रियादीनां मानं यत् पूर्वचोदितम्।
तच्चतुर्भिः करैस्तार्क्ष्य ह्रासयेदनुपूर्वशः॥
इति वाक्यं कुतः गृहीतम्?

(अ) किरणाख्यतन्त्रात् (स) मेरुतन्त्रात्
(ब) डामरतन्त्रात् (द) शारदातिलकात्

३७. शतहस्तोच्छ्रितं कार्यं चतुःशालगृहं बुधैः।
अपि तत्त्वेकशालं तुं शुभदं तत्प्रकीर्तितम्॥
कस्येदं वाक्यम्?

(अ) गर्गस्य (स) वसिष्ठस्य
(ब) शौनकस्य (द) नारदस्य

३८. यः शालायास्तृतीयांशस्तेन कार्या तु वीथिका।
यद्यग्रतो भवेद्वीथीं सोष्णीषं नाम तद् गृहम्॥
पश्चात्सायाश्रयं नाम सावष्टम्भन्तु पार्श्वयोः।
समन्ताद्यदि जाता सा तदा सुस्थितमुच्यते॥
इति कुतः गृहीतम्?

(अ) किरणाख्यतन्त्रत: (स) रुद्रयामलत:
(ब) डामरतन्त्रत: (द) शारदातिलकत:

३९. यस्य गृहस्य वीथिका पूर्वस्यां दिशि तद् गृहस्य किन्नाम?

(अ) सोष्णीषम् (स) सायाश्रयम्
(ब) सावष्टम्भम् (द) सुस्थितम्

४०. कीदृग्गृहस्य नाम सुस्थितम्?

(अ) यस्योत्तरस्यां दिशि वीथिका (स) यस्य प्रतीच्यां दिशि वीथिका
(ब) यस्य पूर्वस्यां दिशि वीथिका (द) यस्याग्नेयकोणे वीथिका

४१. विस्तारषोडशांशेन गृहभित्तिं प्रकल्पयेत्।
हीनाधिका न कर्तव्या गृहभर्तुर्न शोभना॥
इति कस्योक्तिः?

(अ) व्यासस्य (स) कश्यपस्य
(ब) शौनकस्य (द) गर्गस्य

४२. पक्वेष्टानामयं व्यासो दारुजानां यथेच्छया।
द्विजादेव गृहं कार्यं तत्स्याच्छुभ्रं स्वदिग्गतम्॥
नवत्रयोदशाश्चैव करैर्ज्ञात्वा प्रकल्पयेत्॥

**कुत्रास्ति वचनमिदम्?**

(अ) किरणाख्यतन्त्रे (स) रुद्रयामले

(ब) शारदातिलके (द) तन्त्रालोके

**४३. 'उदुम्बर'शब्दस्य कोऽर्थः?**

(अ) देववृक्षविशेषः (स) शुक्रग्रहस्य समित्

(ब) देहली (द) काष्ठविशेषः

**४४. कतिविधा स्तम्भाः भवन्ति?**

(अ) पञ्चविधाः (स) त्रिविधाः

(ब) चतुर्विधाः (द) सप्तविधाः

**४५. वेदास्रो रुचकः स्तम्भो वज्रोऽष्टास्त्रियुतो मतः ।**
**द्विवज्रः षोडशास्त्रिः स्याद्द्विगुणास्त्रिः प्रलीनकः ।**
**समन्तवृत्तो वृत्ताख्यः स्तम्भः प्रोक्तो द्विजोत्तमैः ॥**
**कुतः गृहीतं वाक्यमिदम्?**

(अ) रुद्रयामलतन्त्रात् (स) शारदातिलकात्

(ब) किरणाख्यतन्त्रात् (द) डामरतन्त्रात्

**४६. विभज्य नवधा स्तम्भं कुर्यादुद्वहनं घटम् ।**
**कमलं चोत्तरोष्ठं तु भागे भागे प्रकल्पयेत् ॥**
**कस्मिन् ग्रन्थेऽस्तीदम्?**

(अ) किरणाख्यतन्त्रे (स) डामरतन्त्रे

(ब) रुद्रयामलतन्त्रे (द) शारदातिलकग्रन्थे

**४७. स्तम्भस्य कति भागाः?**

(अ) नव भागाः (स) सप्त भागाः

(ब) अष्टौ भागाः (द) पञ्च भागाः

**४८. किन्नाम सर्वतोभद्रवास्तु?**

(अ) यस्य चतुर्दिक्ष्वलिन्दः (स) यस्य पूर्वस्यां दिश्यलिन्दः

(ब) यस्य त्रिदिक्ष्वलिन्दः (द) यस्य दक्षिणस्यां दिश्यलिन्दः

**४९. अलिन्दानां व्यवच्छेदो नास्ति यत्र समन्ततः ।**
**तद्वास्तु सर्वतोभद्रं चतुर्द्वारसमायुतम् ॥**
**इति कस्य कथनम्?**

(अ) गर्गस्य (स) शौनकस्य

(ब) वसिष्ठस्य (द) नारदस्य

५०. प्रदक्षिणां गतैः सर्वैः शालाभित्तेरलिन्दकैः।
विना परेण द्वारेण नन्द्यावर्तमिति स्मृतम्॥
इति कस्य वाक्यम्?
(अ) शौनकस्य (स) नारदस्य
(ब) वसिष्ठस्य (द) गर्गस्य

५१. कतिधा वास्तु भवति?
(अ) पञ्चधा (स) चतुर्धा
(ब) द्विधा (द) त्रिधा

५२. द्वारालिन्दोऽन्तगस्तेषां ये त्रयो दक्षिणाङ्गताः।
विहाय दक्षिणं द्वारं वर्धमानमिति स्मृतम्॥
कस्येदं वाक्यम्?
(अ) गर्गस्य (स) शौनकस्य
(ब) कश्यपस्य (द) वसिष्ठस्य

५३. पश्चिमोऽन्तगतोऽलिन्दः प्रागन्तौ द्वौ तदुत्थितौ।
अन्यस्तन्मध्यविवृतः प्राग्द्वारं स्वस्तिकं शुभम्॥
कस्य वाक्यमिदम्?
(अ) गर्गस्य (स) कश्यपस्य
(ब) शौनकस्य (द) नारदस्य

५४. प्राक्पश्चिमावलिन्दौ यावन्तगौ तद्भवौ परौ।
सौम्यं द्वारं विना यत्स्याद्रुचकाख्यं तु तत्स्मृतम्॥
कस्योक्तिरियम्?
(अ) गर्गस्य (स) शौनकस्य
(ब) वसिष्ठस्य (द) नारदस्य

५५. शस्तं हिरण्यनाभाख्यं हीनं चोत्तरशालया।
सुक्षेत्रं पूर्वतो हीनं शालया वृद्धिदं मतम्॥
चुल्ली दक्षिणया हीनं धनार्थप्राणनाशनम्।
यत्स्यादपरया हीनं पक्षघ्नं तत्सुतान्तकृत्॥
इति कस्य मतम्?
(अ) किरणाख्यतन्त्रकारस्य (स) रुद्रयामलतन्त्रकारस्य
(ब) डामरतन्त्रकारस्य (द) शारदातिलकग्रन्थकारस्य

५६. कति कोष्ठस्य वास्तुमण्डलं विधेयम्?
(अ) एकाशीतिकोष्ठस्य (स) नवतिकोष्ठस्य
(ब) सप्ततिकोष्ठस्य (द) चतुरशीतिकोष्ठस्य

**५७. बहिर्गतेषु कोष्ठेषु कतिसङ्ख्याकाः देवताः पूज्यन्ते?**

(अ) द्वात्रिंशत्सङ्ख्याकाः (स) पञ्चविंशतिसङ्ख्याकाः
(ब) त्रिंशच्छङ्ख्याकाः (द) द्वाविंशतिसङ्ख्याकाः

**५८. एकाशीतिपदात्मकं मण्डलं कति रेखाभिर्भवति?**

(अ) प्रागुदिग्गताभिः दक्षिणोत्तरगताभिः दशरेखाभिः
(ब) प्रागुदिग्गताभिः दक्षिणोत्तरगताभिः पञ्चदशरेखाभिः
(स) प्रागुदिग्गताभिः दक्षिणोत्तरगताभिः अष्टादशरेखाभिः
(ब) प्रागुदिग्गताभिः दक्षिणोत्तरगताभिः दशरेखाभिः

**५९. 'तत्र बहिर्देवताः प्राक्पर्जन्यकरग्रहमहेन्द्ररविसत्यभृशान्तरिक्षपवनाः। दक्षिणतः पूषावितथवृहत्क्षतयमभृङ्गगन्धर्वमृगपितरश्चेति।'— कस्योक्तिरियम्?**

(अ) पराशरस्य (स) शौनकस्य
(ब) व्यासस्य (द) गर्गस्य

**६०. वास्तुपुरुषस्य शिरः कस्यां दिशि भवति?**

(अ) ईशानकोणे (स) नैर्ऋत्यकोणे
(ब) वायव्यकोणे (द) आग्नेयकोणे

**६१. कस्मिन् भागे वास्तुपुरुषस्य मुखम्?**

(अ) अधोभागे (स) दक्षिणे भागे
(ब) ऊर्ध्वभागे (द) पश्चिमे भागे

**६२. रुद्रा हुताशनश्चैव पिता चानल एव च।**
**एते कोणगता देवा एकाशीतिपदे स्थिताः॥**
**चतुःषष्टिपदेऽप्येवं पापयक्ष्मात्र न स्थितः।**
**एभ्योऽन्ये सदृशा ज्ञेयाः सुराः सर्वपदाश्रिताः॥**
**इति कस्य वाक्यम्?**

(अ) गर्गस्य (स) शौनकस्य
(ब) पराशरस्य (द) व्यासस्य

**६३. वास्तुपुरुषस्य शिरसि तिष्ठति?**

(अ) शिखि (स) अर्यमा
(ब) इन्द्रः (द) वरुणः

**६४. वास्तुपुरुषस्य मुखे कस्तिष्ठति?**

(अ) आपः (स) आपवत्सः
(ब) अर्यमा (द) पर्जन्यः

**६५. वास्तुपुरुषस्य कर्णे कस्तिष्ठति?**

(अ) जयन्तः (स) सत्यः
(ब) पर्जन्यः (द) भृशः

**६६. वास्तुपुरुषस्य उदरे कस्तिष्ठति?**

(अ) यमः (स) भृङ्गराजः
(ब) विवस्वान् (द) सत्यः

**६७. वास्तुपुरुषस्य वामस्तने कस्तिष्ठति?**

(अ) पृथ्वीधरः (स) अदितिः
(ब) दितिः (द) भल्लाटः

**६८. वास्तुपुरुषस्य कस्मिन्नङ्गे तिष्ठति भुजगः?**

(अ) वक्षसि (स) बाहौ
(ब) ललाटे (द) मूर्ध्नि

**६९. दक्षिणे भुजे कति देवताः तिष्ठन्ति वास्तुपुरुषस्य?**

(अ) पञ्चदेवताः (स) सप्त देवताः
(ब) चत्वारो देवताः (द) अष्टौ देवताः

**७०. सोमः वास्तुपुरुषस्य कस्मिन्नङ्गे वसति?**

(अ) कन्धे (स) कर्णे
(ब) शिरसि (द) उरसि

**७१. पापयक्ष्मा कस्मिन्नङ्गभागे तिष्ठति वास्तुपुरुषस्य?**

(अ) बाहौ (स) चरणे
(ब) नेत्रे (द) वक्षसि

**७२. वास्तुपुरुषस्य हृदि कस्तिष्ठति?**

(अ) ब्रह्मा (स) पर्जन्यः
(ब) अर्यमा (द) इन्द्रः

**७३. रुद्रः वास्तुपुरुषस्य कस्मिन्नङ्गभागे विराजते?**

(अ) हस्ते (स) उरौ
(ब) पादौ (द) जङ्घे

**७४. चतुःषष्टिकोष्ठात्मके वास्तुमण्डले कति रेखा विधातव्या?**

(अ) नव-नवसङ्ख्याका (स) अष्टाऽष्टसङ्ख्याका
(ब) सप्त-सप्तसङ्ख्याका (द) दश-दशसङ्ख्याका

**७५. गन्धर्वः वास्तुपुरुषस्य कस्मिन्नङ्गे विराजते?**

(अ) जानुनि (स) बाहौ
(ब) शिरसि (द) पादयो:

**७६. एकाशीतिपदे क्षेत्रे कर्त्तव्यं वृत्तपञ्चकम्।**
**बाह्ये वृत्तद्वयं यत्तत्पदद्वात्रिंशता युतम्॥**
**तृतीयं द्वादशपदं चतुर्थं तु चतुष्पदम्।**
**केवलं पञ्चमं कार्यं ब्रह्मा पञ्चस्ववस्थितः॥**
**इति कस्य वाक्यम्?**

(अ) वराहमिहिरस्य (स) गर्गस्य
(ब) पराशरस्य (द) कश्यपस्य

**७७. वास्तुमण्डलं कतिविधं भवति?**

(अ) चतुर्विधम् (स) द्विविधम्
(ब) त्रिविधम् (द) एकविधम्

**७८. वृत्तानि चत्वारि समानि कृत्वा वास्तोश्चतुःषष्टिपदस्य सम्यक्।**
**अधस्तदर्धेन च सूर्यवेदैर्विभज्यते वृत्तचतुष्टयञ्च॥**
**इति कस्य वचनम्?**

(अ) वराहमिहिरस्य (स) कमलाकरभट्टस्य
(ब) लल्लाचार्यस्य (द) आर्यभट्टस्य

**७९. रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात्।**
**मुख्याद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम्॥**
**इति कस्य वाक्यम्?**

(अ) गर्गस्य (स) कश्यपस्य
(ब) शौनकस्य (द) गौतमस्य

**८०. रोगाद्वायुं नयेत्सूत्रं पितृतोऽथ हुताशनम्।**
**एतत् सूत्रद्वयं प्रोक्तं मुनिभिर्वंशसंज्ञितम्॥**
**इति कस्य वाक्यम्?**

(अ) महीधरस्य (स) आर्यभट्टस्य
(ब) वराहमिहिरस्य (द) लल्लाचार्यस्य

**८१. काष्ठशल्येन किं भवति?**

(अ) धनहानि: (स) रोगभयम्
(ब) पशुपीडा (द) शस्त्रभयम्

**८२. कस्य शल्येन मृत्युभयं जायते?**

(अ) केशशल्येन (स) काष्ठशल्येन
(ब) लौहशल्येन (द) अस्थिशल्येन

**८३. केन शल्येन चौरभयं जायते?**

(अ) लौहशल्येन (स) अङ्गारशल्येन
(ब) अश्मशल्येन (द) काष्ठशल्येन

**८४. कति वंशसूत्राणि वास्तुमण्डलस्थदेवतान्?**

(अ) षडङ्गानि (स) सप्ताङ्गानि
(ब) पञ्चाङ्गानि (द) चत्वार्यङ्गानि

**८५. षट्सूत्रेषु कियन्ति परस्परसम्पातस्थानानि?**

(अ) अष्टौ (स) दश
(ब) नव (द) सप्त

**८६. एकपदे कतमांशतुल्यं मर्मस्थानं भवति?**

(अ) पञ्चमांशतुल्यम् (स) अष्टमांशतुल्यम्
(ब) षष्टमांशतुल्यम् (द) दशमांशतुल्यम्

**८७. पूर्वककथितानां केषां वंशसंज्ञा?**

(अ) षट्सूत्राणाम् (स) चतुःसूत्राणाम्
(ब) पञ्चसूत्राणाम् (द) सप्तसूत्राणाम्

**८८. दक्षिणभुजाविकलः वास्तु किं करोति?**

(अ) धननाशं करोति (स) स्त्रीदोषं जनयति
(ब) रोगभयं करोति (द) दास्यं करोति

**८९. पुत्रमरणं कीदृग्वास्तुः करोति?**

(अ) चरणहीनम् (स) नेत्रहीनम्
(ब) भुजाहीनम् (द) कर्णहीनम्

**९०. सर्वाङ्गपूर्णवास्तु किं ददाति गृहस्वामिनम्?**

(अ) धनधान्यं सुखं ददाति (स) मानं ददाति
(ब) ऐश्वर्यं ददाति (द) सर्वसौख्यं ददाति

**९१. ब्राह्मणः निवासस्थानं कस्यां दिशि रचयेत्?**

(अ) उत्तरस्यां दिशि (स) पूर्वस्यां दिशि
(ब) पश्चिमस्यां दिशि (द) दक्षिणस्यां दिशि

**९२. पूर्वस्यां दिशि कः निवासस्थानं रचयेत्?**

(अ) वैश्यः (स) शूद्रः
(ब) ब्राह्मणः (द) क्षत्रियः

**९३. शिख्यादयात्समारभ्य अष्टौ देवता कस्यां दिशि?**

(अ) पूर्वस्याम् (स) उत्तरस्याम्
(ब) दक्षिणस्याम् (द) पश्चिमायाम्

**९४. पूर्वस्यां दिशि कियन्तः सन्ति देवताः?**
(अ) अष्टौ (स) दश
(ब) नव (द) एकादश

**९५. अष्टासु देवासु कस्योपरि कृते द्वारे शुभं भवति?**
(अ) इन्द्रस्योपरि (स) पर्जन्यस्योपरि
(ब) अन्तरिक्षस्योपरि (द) सूर्यस्योपरि

**९६. अल्पसुतत्वं कस्यां दिशि गतस्य द्वारफलम्?**
(अ) दक्षिणस्यां दिशि (स) उत्तरस्यां दिशि
(ब) पूर्वस्यां दिशि (द) पश्चिमायां दिशि

**९७. रिपुवृद्धिः कस्यां दिशि गतस्य द्वारस्य फलम्?**
(अ) पश्चिमस्यां दिशि (स) उत्तरस्यां दिशि
(ब) पितुरुपरि (द) दक्षिणस्यां दिशि

**९८. स्तम्भतरुभ्रमकोणैर्विद्धं वेधश्च न शुभकरद्वारम्।**
**वेधोच्छायाद् द्विगुणां भूमिं त्यक्त्वा न दोषाय॥**
**इति कस्य वाक्यम्?**
(अ) समाससंहिताकारस्य (स) गर्गसंहिताकारस्य
(ब) बृहत्संहिताकारस्य (द) सनत्कुमारसंहिताकारस्य

**९९. द्वारोच्छ्रायद्विगुणितां त्वक्त्वाभूमिं बहिःस्थितः।**
**न दोषाय भवेद्वेधो गृहस्य गृहिणोऽथ वा॥**
**इति कस्य वचनम्?**
(अ) गर्गस्य (स) पराशरस्य
(ब) कश्यपस्य (द) वसिष्ठस्य

**१००. केन वेधेन गृहस्वामिनो मृत्युर्भवति?**
(अ) मार्गेण (स) पङ्केन
(ब) वृक्षेण (द) कूपेन

**१०१. कूपेन विद्धं द्वारं किं करोति?**
(अ) अपस्मारं रचयति (स) चौरभयं करोति
(ब) शोकं करोति (द) राजभयं करोति

**१०२. पृच्छाकाले गृहस्वामी यदङ्गं स्पृशति स्वकम्।**
**भुवो हस्तप्रमाणेन शल्यं ब्रूयात्तदङ्गजम्॥**

कुत्र लिखितमस्ति पद्यमिदम्?

(अ) समाससंहितायाम् (स) गर्गसंहितायाम्

(ब) बृहत्संहितायाम् (द) आगमान्तरे

१०३. प्रश्नकाले गृहपतिः कस्मिन्नङ्गे समास्थितः ।
किमङ्गं संस्पृशेद्वापि व्याहरेद्वा शुभाशुभम् ॥
कस्य वाक्यमिदम्?

(अ) कश्यपस्य (स) शौनकस्य

(ब) वसिष्ठस्य (द) गर्गस्य

१०४. प्रथमं कुत्र पूजां विधाय शिलान्यासं कुर्यात्?

(अ) पूर्वे (स) पश्चिमायां

(ब) उत्तरे (द) ईशानकोणे

१०५. स्निग्धादिभूभागसमुत्थितानां न्यग्रोधबिल्वद्रुमखादिराणाम् ।
शमीवटोदुम्बरदेवदारुक्षीरिस्वदेशोत्थफलद्रुमाणाम् ॥
उपोषितं शिल्पिजनस्त्वथैषां मध्यात्तु तीक्ष्णेन कुठारकेण ।
मीत्वा ततो दिक्पतिनोत्तरस्यां शुभे च लग्ने परिगृह्य शङ्कुम् ॥
इति कस्य वाक्यम्?

(अ) गर्गस्य (स) वसिष्ठस्य

(ब) शौनकस्य (द) नारदस्य

१०६. प्रागुत्तरे समुन्नतायां वास्तुभूमौ किं भवति?

(अ) धनक्षयः (स) धनसुतक्षयः

(ब) सुतक्षयः (द) बन्धुनाशः

१०७. चतुःशालगृहे देवस्थानं कस्यां दिशि भवेत्?

(अ) पूर्वस्याम् (स) पश्चिमायाम्

(ब) उत्तरस्याम् (द) ईशानकोणे

१०८. पूर्वस्यां श्रीगृहं प्रोक्तमाग्नेय्यां स्यान्महानसम् ।
शयनं दक्षिणायाञ्च नैर्ऋत्यामायुधाश्रयम् ॥
भोजनं पश्चिमायां च वायव्यां धनसञ्चयम् ।
उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् ॥
कुत्रास्ति वाक्यमिदम्?

(अ) शास्त्रान्तरे (स) बृहत्संहितायाम्

(ब) वसिष्ठसंहितायाम् (द) शारदातिलके

१०९. वास्तोरुत्तरस्यां दिशि सति जलाशये किम्फलम्?

(अ) धनवृद्धिः (स) शत्रुवृद्धिः
(ब) सन्तावृद्धिः (द) अग्निभयम्

**११०. शय्यानुवंशविन्यस्ता तुला हन्यात् कुटुम्बिनः ।**
**कर्तुः शय्या स्वतानस्था नागदन्ताः क्षयावहाः ॥**
**इति कस्य वचनम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) अगस्त्यस्य (द) विश्वकर्मणः

**१११. ज्येष्ठस्य कर्मसिद्ध्यर्थं नव पञ्चगुणाः सुराः ।**
**यतस्तत्र वसन्त्येते मूर्धाद्यङ्गेषु कृत्स्नशः ॥**
**वाक्यमिदं कुत्रास्ति?**

(अ) वसिष्ठसंहितायाम् (स) भृगुसंहितायाम्
(ब) कुमारसंहितायाम् (द) तन्त्रान्तरे

**११२. द्वारदेशे कं देवं स्थापयेत्?**

(अ) उमापतिम् (स) धर्मराजम्
(ब) प्रजापतिम् (द) गणेशम्

**११३. बलदेवः कुत्र भवेत्?**

(अ) दक्षिणस्यां दिशि (स) पश्चिमे दले
(ब) उत्तरे दले (द) पूर्वे दले

**११४. बाह्याभ्यन्तरदेवांस्तु वास्तुमध्ये यथास्थिताम् ।**
**तथा च सर्वान् सम्पूज्य विधिनैव पुरोहितः ॥**
**इति वाक्यं कुत्राऽस्ति?**

(अ) अन्यतन्त्रे (स) रुद्रयामलतन्त्रे
(ब) डामरतन्त्रे (द) शारदातिलके

**११५. वेतसः वृक्षस्य कस्यां दिशि जलं लभ्यते?**

(अ) पश्चिमायां दिशि (स) दक्षिणस्यां दिशि
(ब) पूर्वस्यां दिशि (द) उत्तरस्यां दिशि

**११६. पश्चिमायां दिशि कियन्नीचैः लभ्यते जलम्?**

(अ) सार्धपुरुषप्रमाणैर्नीचैः (स) त्रिहस्तनीचैः
(ब) द्विहस्तनीचैः (द) चतुर्हस्तनीचैः

**११७. कियदङ्गुलपरिमितं पुरुषप्रमाणम्?**

(अ) विंशत्यधिकशताङ्गुलप्रमाणम् (स) सपादशताङ्गुलप्रमाणम्
(ब) सार्द्धशताङ्गुलप्रमाणम् (द) पादोनशताङ्गुलप्रमाणम्

११८. निर्जले वेतसं दृष्ट्वा तस्माद् वृक्षादपि त्रयम्।
पश्चिमायां दिशि ज्ञेयमधः सार्धेन वै जलम्॥
नरोऽत्र षष्टिर्द्विगुणा चाङ्गुलानां प्रकीर्तितः।
तत्र खात्वाऽर्धपुरुषमेकः पाण्डुरवर्णकः॥
मृत्पीता पुटभेदश्च पाषाणोऽधस्ततो जलम्।
शिरा पश्चिमदिक्स्थाऽत्र वहतीति विनिर्दिशेत्॥
इति कस्य वचनम्?

(अ) सारस्वतस्य (स) वसिष्ठस्य
(ब) शौनकस्य (द) गर्गस्य

११९. जम्बूवृक्षस्य कस्यां दिशि भवति जलम्?

(अ) उत्तरस्यां दिशि (स) पश्चिमायां दिशि
(ब) दक्षिणस्यां दिशि (द) पूर्वस्यां दिशि

१२०. वृक्षात् कियद्धस्तपरिमितं दूरं भवति जलस्रोतः?

(अ) त्रिहस्तपरिमितं दूरं (स) चतुर्हस्तपरिमितं दूरम्
(ब) द्विहस्तपरिमितं दूरं (द) पञ्चहस्तपरिमितं दूरम्

१२१. जम्बूवृक्षस्य कस्यां दिशि सति वल्मीके जलं भवति?

(अ) पूर्वस्याम् (स) उत्तरस्याम्
(ब) दक्षिणस्याम् (द) पश्चिमायाम्

१२२. वल्मीकात् कस्यां दिशि कियद् दूरं भवति जलम्?

(अ) वल्मीकात् दक्षिणस्यां दिशि त्रिहस्तपरिमिते दूरे
(ब) वल्मीकात् पूर्वस्यां दिशि द्विहस्तपरिमिते दूरे
(स) वल्मीकात् पश्चिमायामेकहस्तपरिमिते दूरे
(द) वल्मीकाच्चतुर्हस्तपरिमिते दूरे ईशाने

१२३. उदुम्बरवृक्षस्य कस्यां दिशे जलं लभ्यते?

(अ) पश्चिमायां दिशि (स) पूर्वस्यां दिशि
(ब) उत्तरस्यां दिशि (द) दक्षिणस्यां दिशि

१२४. अर्जुनवृक्षस्य कियद् दूरं भवेत् वल्मीकः?

(अ) उत्तरस्यां दिशि त्रिहस्तपरिमितं दूरम्
(ब) पश्चिमायां द्विहस्तपरिमितं दूरम्
(स) पूर्वस्यामेकहस्तपरिमितं दूरम्
(द) ईशानकोणे चतुर्हस्तपरिमितं दूरम्

१२५. निर्गुण्डीवृक्षस्य कस्यां दिशि जलं लभ्यते?

(अ) दक्षिणस्याम् (स) पूर्वस्याम्
(ब) उत्तरस्याम् (द) पश्चिमायाम्

**१२६. बदर्या कस्यां दिशि वल्मीको भवेत्तदा जलं लभ्यते?**

(अ) पूर्वस्यां दिशि (स) प्रतीच्यां दिशि
(ब) दक्षिणस्यां दिशि (द) उदीच्यां दिशि

**१२७. पूर्वभागं बदर्याश्चेद्वल्मीको दृश्यते जलम्।**
**पश्चाद्धस्तत्रये वाच्यं खाते तु पुरुषत्रये॥**
**कस्य वाक्यमिदम्?**

(अ) सारस्वतस्य (स) वसिष्ठस्य
(ब) शौनकस्य (द) गर्गस्य

**१२८. पलाशयुक्ता वदरी यत्र दृश्या ततोऽपरे।**
**हस्तत्रयादधस्तोयं सपादे पुरुषत्रये॥**
**नरे तु डुण्डुभः सर्पो निर्विषश्चिह्नमेव च।**
**अधस्तोयं च सुस्वादु दीर्घकालं प्रवाहितम्॥**
**इति कस्य वाक्यम्?**

(अ) सारस्वतस्य (स) गर्गस्य
(ब) शौनकस्य (द) वसिष्ठस्य

**१२९. बिल्वोदुम्बरयोगे कस्यां दिशि जलं भवति?**

(अ) दक्षिणस्यां दिशि (स) पश्चिमायां दिशि
(ब) उत्तरस्यां दिशि (द) पूर्वस्यां दिशि

**१३०. निर्मले यत्र कम्पिल्लो दृश्यस्तस्मात् करत्रये।**
**प्राच्यां त्रिभिर्नरैर्वारि सा भवेद्दक्षिणा शिरा॥**
**अधो नीलोत्पलाभासा मृत्कापोतप्रभा क्रमात्।**
**हस्तेऽजगन्धको मत्स्यो जलमल्पमशोभनम्॥**
**इति कस्य वचनम्?**

(अ) सारस्वतवचनम् (स) अत्रिवचनम्
(ब) कश्यपवचनम् (द) शौनकवचनम्

**१३१. विभीतकस्य याम्यायां वल्मीको यदि दृश्यते।**
**करद्वयान्तरे पूर्वे सार्धे च पुरुषे जलम्॥**
**इति वाक्यं कस्य?**

(अ) वसिष्ठस्य (स) सारस्वतस्य
(ब) शौनकस्य (द) नारदस्य

१३२. भुजङ्गगृहसंयुक्तो यत्र स्यात्सप्तपर्णकः।
ततः सौम्ये हस्तमात्रात्पञ्चभिः पुरुषैरधः॥
वाच्यं जलं नरार्धे तु मण्डूको हरितो भवेत्।
हरितालनिभा भूश्च मेघाभोऽश्मा ततः शिरा॥
उत्तरा सुजला ज्ञेया दीर्घा मृष्टाम्बुवाहिनी॥
इति कस्य वाक्यम्?

(अ) शौनकस्य (स) कश्यपस्य
(ब) पराशरस्य (द) सारस्वतस्य

१३३. तरूणां यत्र सर्वेषामधःस्थो दर्दुरो भवेत्।
वृक्षादुदग्दिशि जलं हस्तात् सार्धैर्नरैरधः॥
चतुर्भिः पुरुषे खाते नकुलो नीलमृत्तिका।
पीतश्वेता ततो भेकसदृशोऽश्मा प्रदृश्यते॥
इति कस्य वचनम्?

(अ) शौनकस्य (स) गर्गस्य
(ब) गालवस्य (द) सारस्वतस्य

१३४. कस्य वृक्षस्य कस्यां दिशि जलं भवति?

(अ) पश्चिमायाम् (स) पूर्वस्याम्
(ब) उत्तरस्याम् (द) दक्षिणस्याम्

१३५. मधूकवृक्षस्य कस्यां दिशि तोयं भवति?

(अ) पश्चिमायाम् (स) पूर्वस्याम्
(ब) दक्षिणस्याम् (द) उत्तरस्याम्

१३६. तिलकाद्दक्षिणे स्निग्धः कुशदूर्वासमायुतः।
वल्मीकाच्चोत्तरे पञ्चहस्तान् सन्त्यज्य पश्चिमे॥
नरैः पञ्चभिरम्भोधः शिरा पूर्वात्र विद्यते॥
कस्य वाक्यानीमानि?

(अ) वसिष्ठस्य (स) कश्यपस्य
(ब) पराशरस्य (द) सारस्वतस्य

१३७. कपित्थस्य कस्यां दिशि तोयं भवति?

(अ) दक्षिणस्याम् (स) उत्तरस्याम्
(ब) पूर्वस्याम् (द) पश्चिमायाम्

१३८. हरिद्रतरोः कस्यां दिशि जलम्?

(अ) पूर्वस्याम् (स) उत्तरस्याम्
(ब) दक्षिणस्याम् (द) पश्चिमायाम्

**१३९. अश्मन्तकवृक्षस्य कस्मिन् भागे जलं लभ्यते?**

(अ) वामभागे (स) उत्तरभागे
(ब) दक्षिणभागे (द) पश्चिमभागे

**१४०. खर्जूरी द्विशिरस्का स्यान्निर्जले चेत् करद्वये।**
**निर्देश्यं पश्चिमे वारि खात्वाऽधः पुरुषत्रयम्॥**
**कस्येदं वाक्यम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) कश्यपस्य (द) सारस्वतस्य

**१४१. खर्जूरवृक्षस्य कस्यां दिशि जलं लभ्यते?**

(अ) पश्चिमायां दिशि (स) उत्तरस्यां दिशि
(ब) दक्षिणस्यां दिशि (द) पूर्वस्यां दिशि

**१४२. पीलुवृक्षस्य कस्मिन् कोणे जलं भवति?**

(अ) ईशानकोण (स) अग्निकोणे
(ब) वायव्यकोणे (द) नैर्ऋत्यकोणे

**१४३. कस्य वृक्षस्य दक्षिणे जलं भवति?**

(अ) पीलुवृक्षस्य (स) वटवृक्षस्य
(ब) बिल्ववृक्षस्य (द) करीरवृक्षस्य

**१४४. उदक्करीराद्वल्मीको दृश्यते चेज्जलं वदेत्।**
**चतुर्भिर्दक्षिणैः हस्तैः सार्धैर्दशनरादतः॥**
**नरे भेकः पीतवर्णो दृश्यते चिह्नमत्र हि॥**
**इति कस्य वाक्यम्?**

(अ) शौनकस्य (स) गर्गस्य
(ब) वसिष्ठस्य (द) सारस्वतस्य

**१४५. कस्य वृक्षस्योत्तरेण वल्मीके सति जलं भवति?**

(अ) शमीवृक्षस्य (स) पीलुवृक्षस्य
(ब) बिल्ववृक्षस्य (द) न्यग्रोधवृक्षस्य

**१४६. शमीपलाशसंयुक्ता यत्र स्यात्तत्र पश्चिमे।**
**पञ्चहस्ताज्जलं वाच्यं षष्ठ्यात्र पुरुषैरधः॥**
**इति वचनं केनोक्तम्?**

(अ) सारस्वतेन (स) गर्गेण
(ब) शौनकेन (द) हारितेन

**१४७. अग्निकोणस्थः कूपः किं करोति?**

(अ) भयं करोति (स) भयं दाहञ्च करोति
(ब) दाहं करोति (द) बालक्षयं करोति

**१४८. वल्मीकपंक्त्यां यद्येकोऽभ्युच्छ्रितस्तदधो जलम्।**
**न रोहते शुष्यते वा यत्र सस्यं चतुष्करात्।**
**जलं तत्रैव निर्देश्यं भूमौ निःसंशयं तदा॥**
**इति कस्योक्तिः?**

(अ) सारस्वतस्य (स) गर्गस्य
(ब) शौनकस्य (द) कश्यपस्य

**१४९. अशोकचम्पकारिष्टपुन्नागाश्च प्रियङ्गवः।**
**शिरीषोदुम्बराः श्रेष्ठाः पारिजातकमेव च॥**
**एते वृक्षाः शुभा ज्ञेयाः प्रथमं तांश्च रोपयेत्।**
**देवालये तथोद्याने गृहेषूपवनेषु च इति॥**
**कस्य वचनमिदम्?**

(अ) कश्यपस्य (स) शौनकस्य
(ब) गर्गस्य (द) वसिष्ठस्य

**१५०. अजातशाखा ये वृक्षाः शिशिरे तांश्च रोपयेत्।**
**जातशाखाश्च हेमन्ते रोपणीया विधानतः।**
**सुस्कन्धा साखिनो ये तान् प्रावृट्काले तु रोपयेत्॥**
**कस्येदं वाक्यम्?**

(अ) कश्यपस्य (स) गर्गस्य
(ब) शौनकस्य (द) गालवस्य

**१५१. ग्रीष्मर्तौ कदा सेक्तव्याः वृक्षाः?**

(अ) सायं-प्रातः (स) प्रातः
(ब) सायं (द) रात्रौ

**१५२. अन्तरं विंशतिर्हस्ताः वृक्षाणामुत्तमं स्मृतम्।**
**मध्यमं षोडशं ज्ञेयमधमं द्वादशं स्मृतम्॥**
**कस्योक्तिरियम्?**

(अ) कश्यपस्य (स) गर्गस्य
(ब) शौनकस्य (द) पराशरस्य

**१५३. इष्टापूर्तादिभिर्यज्ञैर्यावत् कुर्वन्ति मानवाः।**
**अग्निष्टोमादिपशुभिरिष्टं यज्ञं प्रकीर्तितम्॥**
**इति कस्य वचनम्?**

(अ) कश्यपस्य (स) गर्गस्य
(ब) भरद्वाजस्य (द) बृहस्पतेः

**१५४. देवता कुत्र विहरन्ति?**
(अ) उपवनेषु (स) वापीषु
(ब) वनेषु (द) तडागेषु

**१५५. हरितोज्वलतोयाढ्या वाप्या पक्षिभिरावृताः ।
वनोपवनमालिन्यो नित्यमुत्फुल्लितद्रुमाः ॥
इति कस्य वाक्यम्?**
(अ) वसिष्ठस्य (स) गालवस्य
(ब) पराशरस्य (द) कश्यपस्य

**१५६. कतिविधा प्रासादाः?**
(अ) दशविधा (स) अष्टादशधा
(ब) एकादशविधा (द) विंशतिप्रकाराः

**१५७. प्रासादानां विंशतिनामानि केन प्रतिपादितानि?**
(अ) वसिष्ठेन (स) आर्यभट्टेन
(ब) वराहमिहिरेण (द) भास्करेण

**१५८. द्वात्रिंशद्धस्तविस्तीर्ण चतुर्द्वारं षडश्रिकम् ।
भूमिकास्तत्र कर्तव्या विचित्रकुहरान्विता ॥
किन्नाम्नः प्रासादलक्षणमिदम्?**
(अ) मेरोः (स) कैलाशस्य
(ब) मन्दरस्य (द) विमानस्य

**१५९. अष्टोत्तरशताङ्गुलप्रमाणा भूमि कस्य मतानुसारम्?**
(अ) मयस्य (स) पराशरस्य
(ब) कश्यपस्य (द) शौनकस्य

**१६०. 'चतुर्भिरधिकाशीतिरङ्गुलानान्तु भूमिका' इति कस्योक्तिः?**
(अ) कश्यपस्य (स) पराशरस्य
(ब) मयस्य (द) विश्वकर्मणः

**१६१. कपोतपालिरहितं मानं चतुरशीतिकम् ।
भूमिकानां सह तया शतमष्टोत्तरं स्मृतम् ॥
कुतः गृहीतमेतत्?**
(अ) तन्त्रसारतः (स) सनत्कुमारसंहितातः
(ब) शारदातिलकतः (द) वसिष्ठसंहितातः

१६२. संगृह्याष्टौ सीसभागान् कांसस्य द्वौ तथांशकम्।
रीतिकायास्तु सन्तप्तो वज्राख्यः परिकीर्तितः॥
इति कस्य वाक्यम्?

(अ) शौनकस्य (स) गर्गस्य
(ब) विश्वकर्मणः (द) मयस्य

१६३. कति परमाणुरजः परिमाणं बालाग्रः कथ्यते?

(अ) अष्टपरमाणूनाम् (स) नवपरमाणूनाम्
(ब) दशपरमाणूनाम् (द) पञ्चपरमाणूनाम्

१६४. कतीनां बालाग्राणां लिक्षा भवति?

(अ) अष्टानाम् (स) नवानाम्
(ब) सप्तानाम् (द) द्वादशानाम्

१६५. कति लिक्षानां यूका जायते?

(अ) पञ्चानाम् (स) सप्तानाम्
(ब) षण्णाम् (द) अष्टानाम्

१६६. यूकानां यवपरिमाणं भवति—

(अ) सप्तानाम् (स) नवानाम्
(ब) अष्टानाम् (द) पञ्चानाम्

१६७. अङ्गुलपरिमाणं कतीनां यवानां जायते?

(अ) अष्टानाम् (स) पञ्चानाम्
(ब) नवानाम् (द) षण्णाम्

१६८. श्रीरामस्य प्रतिमा कियदङ्गुलपरिमितं दीर्घं भवेत्?

(अ) विंशदुत्तरशताङ्गुलम् (स) अशीत्यङ्गुलम्
(ब) नवत्यङ्गुलम् (द) चतुरशीत्यङ्गुलपरिमितम्

१६९. अन्येषां समेषां मूर्तीनां दैर्घ्यं कियदङ्गुलात्मकं भवेत्?

(अ) अष्टोत्तरशताङ्गुलात्मकम् (स) षण्णवत्यङ्गुलात्मकम्
(ब) पञ्चनवत्यङ्गुलात्मकम् (द) षण्णवत्यङ्गुलात्मकम्

१७०. छिन्नवृक्षस्य पतनं शुभं भवति—

(अ) पूर्वे (स) वायव्यकोणे
(ब) ईशानकोणे (द) अग्निकोणे

१७१. मण्डपस्य कस्मिन् भागे पुष्पमाला कुर्यात्?

(अ) पूर्वभागे (स) पश्चिमभागे
(ब) दक्षिणभागे (द) उत्तरभागे

**१७२. पीता पताका कस्यां दिशि भवेत्?**

(अ) पूर्वे (स) उत्तरे
(ब) ईशानकोणे (द) पश्चिमभागे

**१७३. यार्चा शङ्कूपहता सा तु प्रधानकुलनाशिनी।**
**छिद्रेणोपहता या तु बहुदोषकरी मता॥**
**कस्येदं पद्यम्?**

(अ) कश्यपस्य (स) गर्गस्य
(ब) शौनकस्य (द) नारदस्य

**१७४. पूर्वस्यां दिशि कस्य कृते मन्त्रो जाप्यते?**

(अ) वरुणस्य कृते (स) इन्द्रस्य कृते
(ब) यमस्य कृते (द) कुवेरस्य कृते

**१७५. मन्त्रान् के जपन्ति?**

(अ) क्षत्रियाः (स) शूद्राः
(ब) वैश्याः (द) ब्राह्मणाः

**१७६. ब्राह्मणाः कस्य कृते मन्त्रान् जपन्ति?**

(अ) स्वस्य कृते (स) अन्यस्य कृते
(ब) यजमानस्य कृते (द) समेषां कृते

**१७७. कदा प्रतिष्ठा कर्तव्या?**

(अ) उत्तरायणे (स) वसन्ततौं
(ब) दक्षिणायने (द) माघे

**१७८. कति दन्त्याः गावः शुभाः भवन्ति?**

(अ) दश दन्त्याः (स) पञ्च दन्त्याः
(ब) सप्त दन्त्याः (द) चतुर्दन्त्याः

**१७९. आपादक्षारकपिलाः कृष्णपुष्पचिताश्च ये।**
**मार्जारकपिलाक्षाश्च दुर्बला यूथघातिनः॥**
**पङ्कादिवार्त्ताः पादानुद्धरन्तो व्रजन्ति ये।**
**अधूर्वहा भवन्त्येते भाराध्वनि विगर्हिताः॥**
**इति कस्योक्तिः?**

(अ) कश्यपस्य (स) शौनकस्य
(ब) गौतमस्य (द) पराशरस्य

**१८०. शुक्लराजिपरीक्षिप्ते यस्यान्तर्लोचने शुभे।**
**मल्लिकाक्षो महाधन्यः स महाकृष्णतारकः॥**

इति कस्य वचनम्?

(अ) शलिहोत्रस्य (स) कश्यपस्य

(ब) पराशरस्य (द) शौनकस्य

१८१. विस्तीर्णवक्षो जघनो भारे याने च पूजितः ।
स्निग्धपिङ्गेक्षणश्वेतस्ताम्रशृङ्गो महानसः ।
स तु गौः पद्मको नाम गोसहस्रप्रवर्धनः ॥
इति कस्य वाक्यम्?

(अ) शौनकस्य (स) गर्गस्य

(ब) कश्यपस्य (द) पराशरस्य

१८२. त्रयः पादाः पञ्च नखा अग्रगो दक्षिणस्तथा ।
षण्णखस्ताम्रनासो यस्ताम्रोष्ठः सिंहविक्रमः ॥
इति कस्य लक्षणम्?

(अ) गोर्लक्षणम् (स) गर्दभलक्षणम्

(ब) धेनोर्लक्षणम् (द) शुनो लक्षणम्

१८३. अखञ्जास्ताम्रवक्त्राश्च स्निग्धवर्णाश्च पूजिताः ।
दीनाश्चैव विवर्णाश्च विस्वराश्च विगर्हिताः ॥
कस्येदं लक्षणम्?

(अ) कपोतस्य (स) काकस्य

(ब) कुक्कुटस्य (द) दिवान्धस्य

१८४. कोमला सुस्वरा च कुक्कुटी किं ददाति?

(अ) लक्ष्मीम् (स) विजयम्

(ब) यशः (द) बलम्

१८५. शङ्खदर्भप्रतीकाशश्छत्राभो रजतप्रभः ।
तथा वैदूर्यवर्णाभो यो भवेदष्टसर्षपः ॥
इति कस्य वाक्यम्?

(अ) गर्गस्य (स) नारदस्य

(ब) शौनकस्य (द) कश्यपस्य

१८६. गोधामुखं त्रिकोणं च तथा मण्डलवर्धनम् ।
स्त्रीपुत्रमतिदं विन्द्यात्कूर्मं राष्ट्रविवर्धनम् ॥
इति कस्य लक्षणम्?

(अ) शूनः (स) कच्छपस्य

(ब) गोः (द) कपोतस्य

**१८७. कति दन्ताः छागाः शुभदाः?**

(अ) नवदन्ताः (स) अष्टदन्ताः

(ब) दशदन्ताः (द) सप्तदन्ताः

**१८८. कति दन्तयुक्ताः छात्राः गृहे त्याज्याः?**

(अ) सप्तदन्ताः (स) पञ्चदन्ताः

(ब) एकादशदन्ताः (द) चतुर्दन्ताः

**१८९. किंवर्णकाः छागाः शुभाः भवन्ति?**

(अ) कृष्णाः (स) अर्धकृष्णाः

(ब) श्वेताः (द) अर्धपीताः

**१९०. मन्दं सशब्दं चरति श्वेतः कृष्णाण्डसंयुतः।**
**मध्ये कृष्णेन पट्टेन युक्तो यः सोऽपि वृद्धिदः॥**
**कस्येदं वचनम्?**

(अ) शौनकस्य (स) कश्यपस्य

(ब) पराशरस्य (द) गर्गस्य

**१९१. ऋष्यमूर्धा नीलपादः प्राग्भागे यश्च पाण्डुरः।**
**पश्चिमे नीलवर्णः स्यात्सोऽपि भर्तुर्विवृद्धिदः॥**
**कस्येदं लक्षणम्?**

(अ) कुक्कुटस्य (स) छागस्य

(ब) कुक्कुरस्य (द) कपोतस्य

**१९२. कति छागाः लक्ष्मीसुताः?**

(अ) चत्वारः (स) पञ्च

(ब) त्रयः (द) सप्त

**१९३. तथा च वर्णैकेन स्निग्धवर्णो भवेद्यदि।**
**स हन्याद्वर्णजान् दोषान् देहः सर्वत्र शस्यते॥**
**कस्येदं वाक्यम्?**

(अ) गर्गस्य (स) कश्यपस्य

(ब) शौनकस्य (द) पराशरस्य

**१९४. अश्वस्य कति ध्रुवावर्ताः भवन्ति?**

(अ) दश (स) अष्टौ

(ब) नव (द) द्वादश

**१९५. सन्दंशं मध्यमन्त्यं दशनयुगमधः सोत्तरं वर्षजाते**
**स्फीतं द्व्यब्दे कषायं पतितसमुदितं त्रिचतुष्पञ्चकेषु।**

त्रींस्त्रीनेवैकमब्दानसितहरिसिताकाचमाक्षीकशङ्खा
छिद्रं चालच्युतिश्च प्रभवति तुरगे लक्षणं वर्षजानाम् ॥
इति कस्य वाक्यम्?

(अ) कश्यपस्य (स) गर्गस्य
(ब) शौनकस्य (द) वररुचेः

१९६. कति जातयो भवन्ति गजस्य?

(अ) त्रयः (स) पञ्च
(ब) चत्वारः (द) षट्

१९७. ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः।
चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचितकूर्मसमानकुम्भाः ॥
इति कस्य लक्षणम्?

(अ) अश्वस्य (स) गर्दभस्य
(ब) गोः (द) गजस्य

१९८. अन्त्याभ्यधिकं यस्य विस्तारेण स्तनान्तरम्।
विकटः स च निर्दिष्टो दुर्गार्तिर्निन्दितो गजः ॥
इति किदृग्गजस्य लक्षणम्?

(अ) विकटगजस्य (स) मत्कुणगजस्य
(ब) षण्डगजस्य (द) वामनगजस्य

१९९. पादैः समासैः सुस्निग्धैः सोष्णैः श्लिष्टैः सुशोभनैः।
उन्नतैः स्वेदरहितैः शिराहीनैश्च पार्थिवः ॥
इति कुतः गृहीतम्?

(अ) रुद्रयामलात् (स) गर्गसंहितातः
(ब) डामरतन्त्रात् (द) समुद्रात्

२००. पद्मरक्तोत्पलनिभैः तथा क्षतजसन्निभैः।
नृपाः पादतलैर्ज्ञेया ये चान्ये सुखभागिनः ॥
कस्य वाक्यमिदम्?

(अ) गर्गस्य (स) कश्यपस्य
(ब) शौनकस्य (द) पराशरस्य

२०१. 'सिंहतुल्या कटिर्यस्य स नरेन्द्रो न संशयः' इति कस्य वचनम्?

(अ) समुद्रस्य (स) वसिष्ठस्य
(ब) पराशरस्य (द) गर्गस्य

२०२. ग्रीवा च वर्तुला यस्य स नरो धनवान् स्मृतः।
कम्बूग्रीवा नरा ये तु राजानस्ते न संशयः ॥

**सुस्निग्धं मांसलं पृष्टमभग्नं चाप्यरोमशम्।**
**सधनानां विपर्यस्तं निर्धनानां प्रकीर्तितम्॥**
**कस्य कथनमिदम्?**

(अ) शौनकस्य (स) वसिष्ठस्य
(ब) गर्गस्य (द) समुद्रस्य

**२०३. निःस्वेदमांसलाः कक्षाः सुगन्धाः रोमसङ्कुलाः।**
**धनिनां तु विजानीयान्निर्धनानामतोऽन्यथा॥**
**कस्योक्तिरियम्?**

(अ) पराशरस्य (स) गर्गस्य
(ब) वशिष्ठस्य (द) समुद्रस्य

**२०४. दीर्घायुषामङ्गुलयः कीदृशाः भवन्ति?**

(अ) दीर्घाः (स) सूक्ष्माः
(ब) अवलिताः (द) चिपटाः

**२०५. स्थूलाङ्गुलयः केषाम्?**

(अ) सज्जनानाम् (स) सधनानाम्
(ब) निर्धनानाम् (द) पापीनाम्

**२०६. कपिसदृशकराः के?**

(अ) निर्धनाः (स) धनिनः
(ब) पापिनः (द) सधर्माः

**२०७. व्याघ्रपाणयः पुरुषाः के भवन्ति?**

(अ) पापिनः (स) सज्जनाः
(ब) धर्मिणः (द) विद्वांसः

**१०८. निम्नकरतलाः नराः कीदृशाः भवन्ति?**

(अ) निर्भीकाः (स) निर्धनाः
(ब) पितृवित्तेन विहीनाः (द) सदोषाः

**२०९. सेनापतिः को भवति?**

(अ) ताम्रवर्णनखी (स) सुनखी
(ब) कुनखी (द) वर्णहीननखी

**२१०. पुत्रवान् को भवति?**

(अ) दीर्घाङ्गुलिपर्वाणः (स) स्निग्धाङ्गुलयः
(ब) यवयुक्ताङ्गुष्ठः (द) स्थूलाङ्गुलयः

२११. रूक्षाः रेखाः केषां भवन्ति?

(अ) सधनानां
(स) निर्धनानाम्
(ब) विदुषाम्
(द) अल्पबुद्धीनाम्

२१२. नृपतेः मणिबन्धे कीदृशः रेखाः भवन्ति?

(अ) मणिबन्धोत्थितास्तिस्रो रेखा
(स) चतस्रः रेखा
(ब) द्वे रेखे
(द) पञ्च रेखाः

२१३. मीनयुगाङ्कितपाणिः को भवति?

(अ) नित्यं सत्रप्रदः
(स) धनी
(ब) विद्याभाक्
(द) नृपतिः

२१४. ऐश्वर्यशाली को भवति?

(अ) स्वस्तिकरेखायुतः
(स) कमलचिह्नयुतः
(ब) दीर्घरेखायुतः
(द) रज्जुरेखी

२१५. सेनापतिः को भवति?

(अ) खड्गरेखी
(स) धनुःरेखी
(ब) तोमररेखी
(द) कुन्तरेखी

२१६. धार्मिकः को भवति?

(अ) वापीरेखी
(स) सिंहासनरेखी
(ब) मन्दिररेखी
(द) श्रीवृक्षरेखी

२१७. यज्ञयाजी भवेन्नित्यं बहुवित्तश्च मानवः।
श्रीवत्समथवा पद्मं वज्रं चामरमेव च।
यस्य हस्ते तु दृश्येत स भवेत्पृथिवीपतिः॥
कस्य वाक्यमिदम्?

(अ) समुद्रस्य
(स) गर्गस्य
(ब) शौनकस्य
(द) कश्यपस्य

२१८. निर्मांसैश्छिबुकैर्दीर्घैर्निर्द्रव्याश्चाशुवाचिनः।
समांसलैर्धनोपेता बहुपुत्रसमावृताः॥
कस्य वचनमिदम्?

(अ) वराहमिहिरस्य
(स) कश्यपस्य
(ब) पराशरस्य
(द) गर्गस्य

२१९. विम्बाधरोष्ठाः के भवन्ति?

(अ) राजानः
(स) विद्वांसः
(ब) धनिनः
(द) याज्ञिकाः

**२२०. रक्तजिह्वा के भवन्ति?**

(अ) योगिनः (स) भोगिनः
(ब) रोगिणः (द) रागिणः

**२२१. कृष्णतालुर्नरो यस्तु स भवेत् कुलनाशनः।**
**विकृतं स्फुटितं तालुर्यस्य तस्य न शोभनम्॥**
**कस्य वाक्यमिदम्?**

(अ) शौनकस्य (स) गर्गस्य
(ब) वसिष्ठस्य (द) समुद्रस्य

**२२२. सौम्यञ्च संवृतं वक्त्रममलं यस्य देहिनः।**
**महाराजो भवेन्नित्यं विपरीते तु निर्धनः॥**
**इति कस्य वचनम्?**

(अ) समुद्रस्य (स) कश्यपस्य
(ब) शौनकस्य (द) पराशरस्य

**२२३. स्त्रीमुखं निरपत्यानां मण्डलं शाठ्यसेविनाम्।**
**दीर्घं मुखञ्च निःस्वानां भीरुवक्त्रा दुराशयाः॥**
**इति कस्य वाक्यम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) कश्यपस्य (द) समुद्रस्य

**२२४. स्निग्धमस्फुटिताग्रं च सन्नतं श्मश्रु चेष्यते।**
**रक्तैरल्पैस्तथा रूक्षैः श्मश्रुभिस्तस्कराः स्मृताः॥**
**कस्येदं पद्यम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) कश्यपस्य (द) समुद्रस्य

**२२५. ऋज्वी स्वल्पच्छिद्रा नासा केषाम्?**

(अ) दुर्भाग्यानाम् (स) सभाग्यानाम्
(ब) सुखयुक्तानाम् (द) निर्धनानाम्

**२२६. सकृत्क्षुतं भोगवतां द्विर्धनाय चिरायुषे।**
**चतुः स्याद्भोगनाशाय परमस्मात् तदीशजाः॥**
**इति कस्य वचनम्?**

(अ) व्यासस्य (स) पराशरस्य
(ब) कश्यपस्य (द) नारदस्य

**२२७. मन्त्रित्वं स्थूलदृशां श्यावाक्षाणां भवति सौभाग्यम्।**
**दीना दृग्निःस्वानां स्निग्धा विपुलार्थभोगवताम्॥**

**कस्य वाक्यमिदम्?**

(अ) कश्यपस्य (स) पराशरस्य

(ब) गर्गस्य (द) वराहमिहिरस्य

**२२८. समे गोक्षीरवर्णाभे रक्तान्ते कृष्णतारके।**
**प्रसन्ने च विशाले च स्निग्धे चैवायते शुभे॥**
**कस्येदं वाक्यम्?**

(अ) शौनकस्य (स) कश्यपस्य

(ब) गर्गस्य (द) समुद्रस्य

**२२९. कः शतवर्षं जीवति?**

(अ) यस्य ललाटे तिस्रो रेखाः (स) यस्य ललाटे पञ्च रेखाः

(ब) यस्य ललाटे चतस्रो रेखाः (द) यस्य ललाटे द्वि रेखाः

**२३०. रेखा पञ्च ललाटे तु यस्याऽसौ धनवान् स्मृतः।**
**शतं जीवति वर्षाणामैश्वर्यमधिगच्छति॥**
**इति कस्य वाक्यम्?**

(अ) समुद्रस्य (स) पराशरस्य

(ब) कश्यपस्य (द) गर्गस्य

**२३१. नाभी स्वरः सत्त्वमिति प्रशस्तं गम्भीरमेतत्त्रितयं नराणाम्।**
**उरो ललाटं वदनञ्च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम्॥**
**इति कुतः गृहीतम्?**

(अ) वसिष्ठसंहितातः (स) सनत्कुमारसंहितातः

(ब) वाराहीसंहितातः (द) गर्गसंहितातः

**२३२. अग्नेश्छाया कीदृग् भवति?**

(अ) क्रोधशीला (स) कमलसदृशी

(ब) अधृष्या (द) सुवर्णसदृशी

**२३३. कतिसङ्ख्याकाः छायाः भवन्ति?**

(अ) पञ्च (स) नव

(ब) सप्त (द) दश

**२३४. पञ्च छाया कस्य मते?**

(अ) गर्गमते (स) गौतममते

(ब) कश्यपमते (द) वराहमिहिरमते

**२३५. भूम्याऽऽपोऽनलवाय्वभ्रसम्भूताः पञ्च कीर्तिताः।**
**छाया भूविष्णुशक्रार्कचन्द्राणाञ्च तथापराः॥**

**कस्येदं वाक्यम्?**

(अ) गर्गस्य (स) शौनकस्य

(ब) पराशरस्य (द) गौतमस्य

**२३६. के भवन्ति राजानः?**

(अ) करिनिःस्वनाः (स) रथनिःस्वनाः

(ब) वृषभनिःस्वनाः (द) सिंहसदृशनिःस्वनाः

**२३७. मानवदेहे कति सारतत्त्वानि भवन्ति?**

(अ) पञ्च (स) सप्त

(ब) षट् (द) अष्टौ

**२३८. सुखिनः के भवन्ति?**

(अ) रुधिरसाराः (स) अस्थिसाराः

(ब) मांससाराः (द) वीर्यसाराः

**२३९. द्युतिमान् स्निग्धः वर्णः केषां भवति?**

(अ) नृपाणाम् (स) धनिनाम्

(ब) विदुषाम् (द) निर्धनानाम्

**२४०. कियदङ्गुलपरिमितमुन्मानमुत्तमं भवति?**

(अ) नवत्यङ्गुलपरिमितम् (स) षण्णवत्यङ्गुलपरिमितम्

(ब) अष्टोत्तरशताङ्गुलपरिमितम् (द) अशीत्यङ्गुलपरिमितम्

**२४१. चतुरशीत्यङ्गुलपरिमितमुन्मानं कीदृशम्?**

(अ) अधमम् (स) मध्यमम्

(ब) उत्तमम् (द) निकृष्टम्

**२४२. मध्यममुन्मानं कियदङ्गुलपरिमितं भवति?**

(अ) चतुरशीत्यङ्गुलपरिमितम् (स) नवत्यङ्गुलपरिमितम्

(ब) षण्णवत्यङ्गुलपरिमितम् (द) द्विनवत्यङ्गुलपरिमितम्

**२४३. कियत्पलपरिमितं भारमेकं भवति?**

(अ) द्विसहस्रपलपरिमितम् (स) त्रिसहस्रपलपरिमितम्

(ब) सहस्रैकपलपरिमितम् (द) सार्द्धसहस्रपलपरिमितम्

**२४४. कियता मानेन सुखी भवति मनुष्यः?**

(अ) भारमानेन (स) सार्धभारमानेन

(ब) अर्धभारमानेन (द) सपादभारमानेन

**२४५. उन्मानमानयोः पुरुषस्य कदा विचारः कर्तव्यः?**

(अ) विंशतिवर्षे (स) चतुर्विंशतिवर्षे
(ब) द्वाविंशतिवर्षे (द) पञ्चविंशतिवर्षे

**२४६. वनितानां मानोन्मानं कदा विचारणीयम्?**
(अ) अष्टादशतमे वर्षे (स) विंशतितमे वर्षे
(ब) एकोनविंशतितमे वर्षे (द) द्वाविंशतितमे वर्षे

**२४७. पुरुषस्वभावेण कति प्रकृतयः भवन्ति?**
(अ) अष्टौ (स) दश
(ब) नव (द) एकादश

**२४८. क्षुधालुः बहुभोजी च किम्प्रकृतिको मनुष्यः?**
(अ) वायुप्रकृतिकः (स) जलप्रकृतिकः
(ब) अग्निप्रकृतिकः (द) पृथिवीप्रकृतिकः

**२४९. मधुरभाषी पुरुषः किम्प्रकृतिकः?**
(अ) जलप्रकृतिकः (स) भूमिप्रकृतिकः
(ब) अग्निप्रकृतिकः (द) आकाशप्रकृतिकः

**२५०. कार्यकौशलः पुरुषः किम्प्रकृतिकः?**
(अ) वायुप्रकृतिकः (स) आकाशप्रकृतिकः
(ब) जलप्रकृतिकः (द) तेजप्रकृतिकः

**२५१. देवप्रकृतिको मनुजः कीदृशः?**
(अ) दानशीलः (स) स्नेहिलः
(ब) स्वल्पकोपः (द) दयार्द्रहृदयः

**२५२. राक्षसपिशाचप्रकृतिकः कीदृशः पुरुषः?**
(अ) क्रोधी (स) पापी
(ब) दुष्टस्वभावः (द) बहुभाषी

**२५३. मलिनः पुरुषः किम्प्रकृतिकः?**
(अ) पिशाचप्रकृतिकः (स) अग्निप्रकृतिकः
(ब) राक्षसप्रकृतिकः (द) वायुप्रकृतिकः

**२५४. तिर्यक्प्रकृतिकः पुरुषः कीदृशः?**
(अ) भीरुः (स) बहुभुक्
(ब) क्षुधालुः (द) पलायनपरः

**२५५. के मनुष्या राजानः भवन्ति?**
(अ) शार्दूलतुल्यगतिकः (स) हंसगामी
(ब) गजतुल्यगतिकः (द) वृषभगामी

**२५६. शार्दूलहंससमदद्विपगोपतीनां तुल्याः भवन्ति गतिभिः शिखिनाञ्च भूपाः ।**
**येषाञ्च शब्दरहितं स्तिमितञ्च यातं तेऽपीश्वराः द्रुतपरिप्लुतगा दरिद्राः ॥**
**इति कस्य कथनम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) कश्यपस्य (द) वराहमिहिरस्य

**२५७. कः पुरुषः भाग्यशाली कथ्यते?**

(अ) यस्य श्रान्ते यानं भवति (स) यस्य तृषापरिगतस्य पानं भवति
(ब) यस्य बुभुक्षायामशनं भवति (द) यस्य भयकाले रक्षा भवति

**२५८. श्रान्तस्य यानमशनं च बुभुक्षितस्य पानं तृषापरिगतस्य भयेषु रक्षा ।**
**एतानि यस्य पुरुषस्य भवन्ति काले धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥**
**इति कुतः गृहीतम्?**

(अ) सनत्कुमारसंहितातः (स) बृहत्संहितातः
(ब) भृगुसंहितातः (द) वाराहीसंहितातः

**२५९. कति प्रशस्तपुरुषाः?**

(अ) चत्वारः (स) षट्
(ब) पञ्च (द) सप्त

**२६०. हंसयोगो कदा जायते?**

(अ) स्वोच्चे स्वभे केन्द्रगे गुरौ (स) चतुर्थदशमसप्तमलग्नगे देवगुरौ
(ब) स्वक्षेत्रे केन्द्रगे गुरौ (द) कर्कराशिगते बृहस्पतौ

**२६१. केन शशयोगो जायते?**

(अ) सूर्येण (स) सौर्येण
(ब) चन्द्रमसा (द) बुधेन

**२६२. रुचकयोगः कस्माज्जायते?**

(अ) गुरुणा (स) भौमेन
(ब) राहुणा (द) केतुना

**२६३. भद्रयोगः केन ग्रहेण भवति?**

(अ) कुजेन (स) गुरुणा
(ब) बुधेन (द) शनैश्चरेण

**२६४. स्वक्षेत्रे तु चतुष्टयेऽथ वलिभिः स्वोच्चे स्थितैर्वा ग्रहैः**
**शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथापक्रमम् ।**
**मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा**
**सर्वेषामतिविस्तरान्मुनिमतात् सङ्क्ष्यते लक्षणम् ॥**

इदं पद्यं कुत्रास्ति?

(अ) भृगुसंहितायाम् (स) गर्गसंहितायाम्
(ब) वाराहीसंहितायाम् (द) सारावल्याम्

२६५. पूर्णसत्त्ववान् कस्य बलेन भवति नरः?

(अ) सूर्यबलेन (स) भृगुबलेन
(ब) चन्द्रबलेन (द) कुजबलेन

२६६. मनसा बलवान् केन बलेन भवति नरः?

(अ) सूर्यबलेन (स) कुजबलेन
(ब) चन्द्रबलेन (द) गुरुबलेन

२६७. महीसुतात्सत्त्वमुदाहरन्ति गुरुत्वमिन्दोस्तनयाद्गुरोश्च ।
स्वरः सितात्स्नेहमतोऽनुवर्णं बलाबलैः पूर्णलघूनि चैषाम् ॥
इति पद्यं कुत्राऽस्ति?

(अ) वसिष्ठसंहितायाम् (स) वाराहीसंहितायाम्
(ब) भृगुसंहितायाम् (द) सारावल्याम्

२६८. हंसपुरुषस्योन्नतं कियदङ्गुलपरिमितं भवति?

(अ) षण्णवत्यङ्गुलपरिमितम् (स) पञ्चाशीत्यङ्गुपरिमितम्
(ब) नवत्यङ्गुलपरिमितम् (द) चतुरशीत्यङ्गुलपरिमितम्

२६९. उच्छ्रायः परिणाहस्तु यस्य तुल्यं शरीरिणः ।
स नरः पार्थिवो ज्ञेयो न्यग्रोधपरिमण्डलः ॥
इति कस्य वाक्यम्?

(अ) वसिष्ठस्य (स) गर्गस्य
(ब) शौनकस्य (द) पराशरस्य

२७०. कतिविधाः पुरुषाः भवन्ति?

(अ) सप्तविधाः (स) षड्विधाः
(ब) पञ्चविधाः (द) अष्टविधाः

२७१. कति गुणाः भवन्ति?

(अ) त्रयो गुणाः (स) पञ्च गुणाः
(ब) चत्वारो गुणाः (द) सप्त गुणाः

२७२. कीदृशः मालव्यपुरुषः?

(अ) नागनासः (स) जानुसम्प्राप्तहस्तः
(ब) समभुजयुगलः (द) कृशकटिभागः

२७३. **मालव्यपुरुषस्यायुः कति वर्षाणि?**

(अ) पञ्चाशद्वर्षाणि (स) सप्ततिवर्षाणि

(ब) अशीतिवर्षाणि (द) पञ्चाशीतिवर्षाणि

२७४. **वक्त्रं त्रयोदशमितानि तथाङ्गुलानि दैर्घ्येण कर्णविवराद्दश विस्तरेण।**
**मालव्यसंज्ञमनुजः स भुनक्ति नूनं लाटं समालवससिन्धुसपारियात्रम्॥**
**कुतः गृहीतमिदं पद्यम्?**

(अ) भृगुसंहितातः (स) वाराहीसंहितातः

(ब) सारावलीतः (द) नारदसंहितातः

२७५. **त्वक्शुक्रसारः पृथुपीनवक्षाः सत्त्वाधिको व्याघ्रमुखः स्थिरश्च।**
**क्षमान्वितो धर्मपरः कृतज्ञो गजेन्द्रगामी बहुशास्त्रवेत्ता॥**
**कस्य पुरुषस्य लक्षणमिदम्?**

(अ) भद्रपुरुषस्य (स) हंसपुरुषस्य

(ब) मालव्यपुरुषस्य (द) शशपुरुषस्य

२७६. **कति वर्षपरिमिता आयुर्भद्रपुरुषस्य?**

(अ) नवतिवर्षाणि (स) द्विनवतिवर्षाणि

(ब) पञ्चनवतिवर्षाणि (द) अशीतिवर्षाणि

२७७. **स्वतन्त्रः सर्वकार्येषु स्वजनं प्रति न क्षमः।**
**भुज्यते विभवश्चास्य नित्यं बन्धुजनैः परैः॥**
**इति कुतः गृहीतम्?**

(अ) भृगुसंहितातः (स) गर्गसंहितातः

(ब) सारावलीतः (द) शौनकस्मृतितः

२७८. **उन्नतदन्तः कः भवति?**

(अ) हंसपुरुषः (स) शशपुरुषः

(ब) मालव्यपुरुषः (द) भद्रपुरुषः

२७९. **कियदङ्गुलपरिमितमुन्नतं भवति शशसंज्ञक पुरुषस्य?**

(अ) नवत्यङ्गुलपरिमितम् (स) पञ्चाशीत्यङ्गुलपरिमितम्

(ब) अष्टाशीत्यङ्गुलपरिमितम् (द) द्विनवत्यङ्गुलपरिमितम्

२८०. **मध्यमार्गः दुर्बलः कस्य भवति?**

(अ) हंसपुरुषस्य (स) शशपुरुषस्य

(ब) भद्रपुरुषस्य (द) अन्यपुरुषस्य

२८१. **तनुद्विजः शीघ्रगतिः शशोऽयं शठोऽतिशूरो निभृतप्रचारः।**
**वनाद्रिदुर्गेषु नदीषु सक्तः क्षयोदयी नातिलघुः प्रसिद्धः॥**

कुत्रास्तीदम्?

(अ) सारावल्याम्
(स) सनत्कुमारसंहितायाम्
(ब) भृगुसंहितायाम्
(द) गर्गसंहितायाम्

२८२. रक्तं पीनकपोलमुन्नतनसं वक्त्रं सुवर्णोपमं
वृत्तं चास्य शिरोऽक्षिणी मधुनिभे सर्वे च रक्ता नखाः।
स्रग्दामाङ्कुशशङ्खमत्स्ययुगलक्रत्वङ्गकुम्भाम्बुजै-
श्चिह्नैर्हंसकलस्वनः सुचरणो हंसः प्रसन्नेन्द्रियः॥
कस्य पुरुषस्य लक्षणमिदम्?

(अ) रुचकपुरुषस्य
(स) मालव्यपुरुषस्य
(ब) हंसपुरुषस्य
(द) शशपुरुषस्य

२८३. हंसपुरुषः कियदङ्गुलपरिमितमुन्नतं धारयति?

(अ) षण्णवत्यङ्गुलपरिमितम्
(स) पञ्चनवत्यङ्गुलपरिमितम्
(ब) नवत्यङ्गुलपरिमितम्
(द) शताङ्गुलपरिमितम्

२८४. हंसपुरुषः कियति वर्षाणि जीवति?

(अ) नवतिवर्षाणि
(स) चतुर्नवतिवर्षाणि
(ब) पञ्चनवतिवर्षाणि
(द) शतं वर्षाणि

२८५. पातीहदेशांश्च स शूरसेनान् गान्धारगङ्गायमुनान्तरालम्।
जीवेन्नवघ्नीं दशवर्षसङ्ख्यां पश्चाद्वनान्ते समुपैति नाशम्॥
कुत्रेदं गृहीतं पद्यम्?

(अ) भृगुसंहितायाम्
(स) गर्गसंहितायाम्
(ब) सारावल्याम्
(द) सनत्कुमारसंहितायाम्

२८६. सुभ्रूकेशो रक्तश्यामः कम्बुग्रीवो व्यादीर्घास्यः।
शूरः क्रूरः श्रेष्ठो मन्त्री चौरस्वामी व्यायामी च॥
इति कस्य पुरुषस्य लक्षणम्?

(अ) हंसपुरुषस्य
(स) भद्रपुरुषस्य
(ब) रुचकपुरुषस्य
(द) शशपुरुषस्य

२८७. उज्जयिन्यां कः पुरुषः राज्यं करोति?

(अ) हंसपुरुषः
(स) रुचकपुरुषः
(ब) शशपुरुषः
(द) भद्रपुरुषः

२८८. विन्ध्याचलं कः शास्ति?

(अ) रुचकपुरुषः
(स) शशपुरुषः
(ब) हंसपुरुषः
(द) भद्रपुरुषः

**२८९. सम्पूर्णाङ्गो वामनो भग्नपृष्ठः किञ्चिच्चोरुर्मध्यकक्ष्यान्तरेषु।**
**ख्यातो राज्ञां ह्येष भद्रानुजीवी स्फीतो राजा वासुदेवस्य भक्तः॥**
**इति कस्य लक्षणम्?**

(अ) सङ्कीर्णपुरुषस्य (स) वामनपुरुषस्य
(ब) शशपुरुषस्य (द) भद्रानुचरस्य

**२९०. जघन्यपुरुषः कस्य राज्ञः सेवकः?**

(अ) हंसराज्ञः (स) भद्रराज्ञः
(ब) शशराज्ञः (द) मालव्यराज्ञः

**२९१. कुब्जपुरुषः कीदृशो भवति?**

(अ) कलहप्रियः (स) कृतज्ञः
(ब) क्रूरः (द) कलाविद्

**२९२. मण्डलकः कस्य सेवको भवति?**

(अ) रुचकराज्ञः (स) मालव्यराज्ञः
(ब) हंसराज्ञः (द) धनिकस्य

**२९३. किं जानाति मण्डलकः?**

(अ) अभिचारं विजानाति (स) वैतालिकः
(ब) तन्त्रज्ञः (द) देवेष्वासक्तबुद्धिः

**२९४. कुमार्याः किंवर्णकाः नखाः भवेयुः?**

(अ) ताम्रवर्णकाः (स) धूम्रवर्णकाः
(ब) कृष्णवर्णकाः (द) पीतवर्णकाः

**२९५. स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः**
**पादौ समोपचितचारुनिगूढगुल्फौ।**
**श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या-**
**स्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्॥**
**कुत इदं पद्यं गृहीतम्?**

(अ) वसिष्ठसंहितातः (स) भृगुसंहितातः
(ब) गर्गसंहितातः (द) वाराहीसंहितातः

**२९६. स्निग्धौ ताम्रनखौ धन्यौ कूर्मपृष्ठौ सुलोहितौ।**
**निगूढगुल्फौ सुश्लिष्टौ घनाङ्गुलिसमन्वितौ॥**
**मत्स्याङ्कुशयवाब्जेषु हलवज्रासिचिह्नितौ।**
**सुस्पृशौ रोमरहितौ कुमार्याश्चरणौ शुभौ॥**
**कस्येदं पद्यम्?**

(अ) शौनकस्य (स) पराशरस्य
(ब) वसिष्ठस्य (द) समुद्रस्य

**२९७. विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रसनाकलापम्।
नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्त्तगता च शस्ता॥
कस्यायं श्लोकः?**

(अ) वसिष्ठस्य (स) गौतमस्य
(ब) पराशरस्य (द) वराहमिहिरस्य

**२९८. स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता।
न चातिदीर्घा चतुराङ्गुला च ग्रीवा च दीर्घा भवतीह धन्या॥
कस्याचार्यस्य वचनमिदम्?**

(अ) गर्गाचार्यस्य (स) गौतमस्य
(ब) पराशरस्य (द) समुद्रस्य

**२९९. जघनं विपुलं यस्या सुस्पर्शं रोमवर्जितम्।
सुवर्णाभरणैर्युक्ता सा भवेद्राज्यभागिनी॥
गम्भीरा विपुला नाभी दक्षिणावर्त्तमाश्रिता।
शस्ता विपर्यये नेष्टा वामावर्त्ता विशेषतः॥
कस्य वचनमिदम्?**

(अ) समुद्रस्य (स) पराशरस्य
(ब) गर्गस्य (द) कश्यपस्य

**३००. अधरो विम्बसदृशो मांसलो स्फुटितस्तथा।
यस्याः सा राजमहिषी कुमारी नात्र संशयः॥
कस्येदं कथनम्?**

(अ) गर्गस्य (स) पराशरस्य
(ब) वसिष्ठस्य (द) शौनकस्य

**३०१. द्वात्रिंशद्दशना यस्याः सर्वे गोक्षीरपाण्डुराः।
सर्वे शिखरिणः स्निग्धा राजभार्या च सा भवेत्॥
वाक्यमिदं कस्य?**

(अ) शौनकस्य (स) गर्गस्य
(ब) कश्यपस्य (द) समुद्रस्य

**३०२. कति दन्ताः शुभाः भवन्ति कुमारीणाम्?**

(अ) त्रिंशत् (स) द्वात्रिंशत्
(ब) एकत्रिंशत् (द) अष्टाविंशतिः

**३०३. किंवर्णकाः दन्ताः शुभाः भवन्ति कन्यानाम्?**

(अ) धवला: (स) रक्ता:

(ब) मलिना: (द) कर्वुरा:

**३०४. कीदृक् स्वना शुभा कन्या?**

(अ) हंसस्वना (स) काकस्वना

(ब) पिकस्वना (द) दुन्दुभिनेमिस्वना

**३०५. हंसस्वना दुन्दुभिनेमिघोषा मेघस्वनाः शङ्खनिनादघोषाः।**
**मयूरचक्रप्रतिमस्वनाश्च स्त्रियस्तथा कोकिलतुल्यशब्दाः ॥**
**कस्येदं वाक्यम्?**

(अ) गर्गस्य (स) शौनकस्य

(ब) वसिष्ठस्य (द) कश्यपस्य

**३०६. नीलनीरजपत्राभा दृष्टिर्यस्याः भवेत्सदा।**
**सा राजमहिषी ज्ञेया ज्योतिःशास्त्रविशारदैः ॥**
**केनोक्तं वाक्यम्?**

(अ) वसिष्ठेन (स) कश्ययेन

(ब) पराशरेण (द) गर्गेण

**३०७. नो सङ्गते नाति पृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे।**
**अर्धेन्दुसंस्थानमरोमशञ्च शस्तं ललाटं न नतं न तुङ्गम् ॥**
**कुत्रास्ति पद्यमिदम्?**

(अ) मदनपारिजाते (स) वाराहीसंहितायाम्

(ब) सनत्कुमारसंहितायाम् (द) भृगुसंहितायाम्

**३०८. नातिलम्बौ मृदू तुल्यौ संलग्नौ युक्तमांसलौ।**
**कर्णौ यस्याः स्मृता सा तु राजभार्या न संशयः ॥**
**कस्य वाक्यमिदम्?**

(अ) आर्यभट्टस्य (स) गर्गस्य

(ब) वराहमिहिरस्य (द) कश्यपस्य

**३०९. सौभाग्यवत्याः करतले किं चिह्नं शुभम्?**

(अ) मत्स्यस्य (स) कमलस्य

(ब) कच्छपस्य (द) चामरस्य

**३१०. मत्स्यः पाणितले छत्रं कच्छपो वा ध्वजोऽपि वा।**
**श्रीवत्सं कमलं शङ्खमासनं चामरं तथा ॥**
**अङ्कुशश्चैव माला च यस्याः हस्ते तु दृश्यते।**
**एकं सा जनयेत्पुत्रं राजानं पृथिवीपतिम् ॥**

कस्य वाक्यमिदम्?

(अ) समुद्रस्य (स) पराशरस्य

(ब) कश्यपस्य (द) शौनकस्य

३११. निगूढमणिबन्धौ तु पद्मगर्भसमप्रभौ।
विकृष्टाङ्गुलिपर्वाणौ करौ नृपतियोषितः॥
कस्येदं वचनम्?

(अ) वराहमिहिरस्य (स) शौनकस्य

(ब) वसिष्ठस्य (द) कश्यपस्य

३१२. मणिबन्धनसम्भूता मध्याङ्गुलिसमाश्रिता।
रेखा पाणितले यस्याः सा कन्या राजभागिनी॥
कस्य वाक्यमिदम्?

(अ) समुद्रस्य (स) कश्यपस्य

(ब) शौनकस्य (द) पराशरस्य

३१३. कनिष्ठामूलसम्भूता गता मध्यमिकान्तरम्।
प्रदेशिन्याश्च सा रेखा यस्याः सा दीर्घजीविनी॥
कस्य कथनमिदम्?

(अ) वसिष्ठस्य (स) कश्यपस्य

(ब) गर्गस्य (द) समुद्रस्य

३१४. कनिष्ठिकामूलभवा गता या प्रदेशिनीमध्यमिकान्तरालम्।
करोति रेखा परमायुषः सा प्रमाणमूना तु तदूनमायुः॥
कुतः संगृहीतमिदं पद्यम्?

(अ) बृहत्संहितातः (स) कश्यपसंहितातः

(ब) गर्गसंहितातः (द) गर्गसंहितातः

३१५. कनिष्ठा पादयोर्यस्याः भूमिं स्पृशति नाङ्गुलिः।
न सा तिष्ठति कौमारी बन्धकीं तां विनिर्दिशेत्॥
कस्य वाक्यमिदम्?

(अ) समुद्रस्य (स) पराशरस्य

(ब) कश्यपस्य (द) शौनकस्य

३१६. कुम्भाकारमुदरं कासां कन्यकानाम्?

(अ) दुःखितानाम् (स) पुण्यवतीनाम्

(ब) सुखितानाम् (द) साध्वीनाम्

३१७. लम्बोदरी च या कन्या दीर्घोदरसमन्विता।
भग्नोदरा च दुःखान्ता दासीभावमवाप्नुयात्॥

**कस्योक्तिरियम्?**

(अ) वसिष्ठस्य (स) गर्गस्य
(ब) शौनकस्य (द) समुद्रस्य

**३१८. दीर्घग्रीवा कुमारी भवति—**

(अ) कुलक्षयकरी (स) क्रूरप्रकृतिका
(ब) निर्धना (द) कुटिला

**३१९. कुलक्षयकरी दीर्घा ग्रीवा ह्रस्वा च निर्धना।
पृथूत्थया प्रचण्डत्वं ग्रीवया योषितो वदेत्॥
कस्येदं पद्यम्?**

(अ) शौनकस्य (स) कश्यपस्य
(ब) वसिष्ठस्य (द) समुद्रस्य

**३२०. पारावताक्षी या कन्या कातराक्षी तथापि या।
उद्भ्रान्तचपलाक्षी च तां कन्यां वर्जयेद्बुधः॥
यस्यास्तु हसमानाया जायन्ते गण्डकूपकाः।
भर्तारं हन्ति सा क्षिप्रं नैकत्र रमते चिरम्॥
कस्य वाक्यमिदं स्पष्टयत?**

(अ) पराशरस्य (स) गौतमस्य
(ब) कश्यपस्य (द) समुद्रस्य

**३२१. लम्बललाटा कं हन्ति?**

(अ) श्वसुरम् (स) देवरम्
(ब) पतिंम् (द) ज्येष्ठपतिम्

**३२२. लम्बोदरी कं हन्ति?**

(अ) श्वसुरम् (स) पतिम्
(ब) देवरम् (द) ज्येष्ठपतिम्

**३२३. स्तनरोमा कीदृशी भवति?**

(अ) चौरा (स) क्रूरा
(ब) कुटिला (द) परवेश्मरता

**३२४. कीदृशाः दन्ताः कुमारीणां वैधव्यकारकाः?**

(अ) स्थूलाः (स) बहिर्गताः
(ब) दीर्घाः (द) कृष्णमांसाः

**३२५. का स्त्री भर्तुर्निधनकारिणी भवति?**

(अ) उच्चोत्तरोष्ठा (स) दीर्घदन्ता
(ब) रूक्षकेशाः (द) विषमदन्ता

**३२६. कुमारीणां शुभाशुभज्ञानाय कतिभागेषु विभक्तं शरीरम्?**

(अ) सप्तभागेषु (स) नवभागेषु

(ब) अष्टभागेषु (द) दशभागेषु

**३२७. नूतनवस्त्रधारणे कानि नक्षत्राणि शुभानि?**

(अ) अश्विनी (स) कृत्तिका

(ब) भरणी (द) रोहिणी

**३२८. कस्मिन्नक्षत्रे परिधाने धनप्राप्तिः?**

(अ) रोहिण्याम् (स) कृत्तिकायाम्

(ब) मृगशिरसि (द) आर्द्रायाम्

**३२९. कस्मिन्नक्षत्रे परिधाने मरणम्?**

(अ) आर्द्रायाम् (स) पुष्ये

(ब) पुनर्वसौ (द) आश्लेषायाम्

**३३०. कस्मिन्नक्षत्रे धारणे सर्वसुखं भवति?**

(अ) हस्तनक्षत्रे (स) स्वात्याम्

(ब) चित्रायाम् (द) विशाखायाम्

**३३१. कदा परिधाने मिष्ठान्नभोजनं लभते?**

(अ) पूर्वाषाढायाम् (स) अनुराधायाम्

(ब) उत्तराषाढायाम् (द) ज्येष्ठायाम्

**३३२. कदा परिधाने मित्रसमागमो भवति?**

(अ) अनुराधायाम् (स) मूले

(ब) ज्येष्ठायाम् (द) पूर्वाषाढायाम्

**३३३. कार्यसिद्ध्यै कस्मिन्नक्षत्रे परिधानीयं नूतनं वस्त्रम्?**

(अ) हस्तनक्षत्रे (स) पूर्वाषाढानक्षत्रे

(ब) मूलनक्षत्रे (द) उत्तराषाढानक्षत्रे

**३३४. कस्मिन्नक्षत्रे परिधाने जलाद्भयं जायते?**

(अ) रोहिण्याम् (स) पुष्ये

(ब) आर्द्रायाम् (द) पूर्वभाद्रपदि

**३३५. कदा परिधाने पुत्रलाभो जायते?**

(अ) उत्तरभाद्रपदि (स) श्रवणे

(ब) मूले (द) धनिष्ठायाम्

**३३६. कदा परिधाने विषभयं जायते?**

(अ) शतभिषजि (ब) रेवत्याम्
(ब) पूर्वभाद्रपदि (द) अश्विन्याम्

**३३७. कस्मिन्नक्षत्रे नववस्त्रधारणे रत्नलाभो भवति?**
(अ) रेवत्याम् (स) मृगशिरसि
(ब) अश्विन्याम् (द) पुनर्वसौ

**३३८. अविहितनक्षत्रे कदा नूतनवस्त्रपरिधानं शुभं भवति?**
(अ) विवाहकाले (स) यात्राकाले
(ब) राजसम्माने (द) मित्रसमागमकाले

**३३९. वस्त्रं कतिधा विभक्तं भवति?**
(अ) अष्टधा (स) दशधा
(ब) नवधा (द) सप्तधा

**३४०. कति कोणेषु वस्त्रस्य देवता निवसन्ति?**
(अ) त्रिकोणेषु (स) षट्कोणेषु
(ब) पञ्चकोणेषु (द) चतुष्कोणेषु

**३४१. वस्त्रमूले के वसन्ति?**
(अ) राक्षसा: (स) मानवा:
(ब) देवता: (द) गन्धर्वा:

**३४२. वस्त्रस्य शेषभागे के निवसन्ति?**
(अ) मनुजा: (स) पशव:
(ब) देवा: (द) राक्षसा:

**३४३. 'चतुर्षु कोणेषु सुराः पाशान्ते मध्यमे नराः मध्यभागे निशाचराः' इति कस्य मतम्?**
(अ) वसिष्ठस्य (स) गर्गस्य
(ब) कश्यपस्य (द) पराशरस्य

**३४४. पीतवर्णः चामरदण्डः केषां कृते शोभनम्?**
(अ) विप्राणाम् (स) वैश्यानाम्
(ब) क्षत्रियाणाम् (द) शूद्राणाम्

**३४५. रक्तवर्णकः दण्डः केषां कृते शोभनम्?**
(अ) शूद्राणाम् (द) क्षत्रियाणाम्
(ब) वैश्यानाम् (द) विप्राणाम्

**३४६. कृष्णवर्णकः चामरदण्डः केषां कृते शुभदः?**

(अ) शूद्राणां कृते (स) वैश्यानां कृते
(ब) क्षत्रियाणां कृते (द) विप्राणां कृते

**३४७. कतिपर्वयुतो दण्ड: यात्रायां विजयप्रद:?**
(अ) द्विपर्वयुत: (स) चतु:पर्वयुत:
(ब) त्रिपर्वयुत: (द) पञ्चपर्वयुत:

**३४८. कति पर्वयुतो दण्ड: भूमिलाभं करोति?**
(अ) सप्तपर्वयुत: (स) नवपर्वयुत:
(ब) अष्टपर्वयुत: (द) पञ्चपर्वयुत:

**३४९. पशून् वृद्धिं कतिपर्वको दण्ड: करोति?**
(अ) दशपर्वक: (स) सप्तपर्वक:
(ब) एकादशपर्वक: (द) नवपर्वक:

**३५०. कतिपर्वको दण्ड: स्वामीनामभीष्टद:?**
(अ) एकादशपर्वक: (स) त्रयोदशपर्वक:
(ब) द्वादशपर्वक: (द) पञ्चदशपर्वक:

**३५१. शत्रुनाशं करोति—**
(अ) द्विपर्वक: दण्ड: (स) चतु:पर्वक: दण्ड:
(ब) त्रिपर्वक: दण्ड: (द) पञ्चपर्वक: दण्ड:

**३५२. दशपर्वको दण्ड: किं करोति?**
(अ) रोगं करोति (स) धनं वर्द्धयति
(ब) आरोग्यं करोति (द) सर्वसिद्धिं करोति

**३५३. केन वस्तुना छत्रं रचयेत्?**
(अ) खगपक्षै: (स) पट्टवस्त्रै:
(ब) वस्त्रै: (द) ऊर्णवस्त्रै:

**३५४. छत्रे केन वस्तुना समाच्छादनीयम्?**
(अ) नूतनपटै: (ब) कार्पासपटै:
(ब) पाटाम्बरै: (द) अन्यै: वस्त्रै:

**३५५. छत्रदण्डं कति हस्तपरिमितम्?**
(अ) त्रिहस्तपरिमितम् (स) पञ्चहस्तपरिमितम्
(ब) चतुर्हस्तपरिमितम् (द) षड्हस्तपरिमितम्

**३५६. केनं सच्छत्रं छत्रदण्डं भवेत्?**
(अ) रजतसच्छन्नम् (स) हेमसच्छन्नम्
(ब) तामसच्छन्नम् दत्र. लौहसच्छन्नम्

**३५७. कति पर्वान्वितं छत्रदण्डं भवेत्?**

(अ) सप्तपर्वान्वितम् (स) नवपर्वान्वितम्
(ब) अष्टौ पर्वान्वितम् (द) दशपर्वान्वितम्

**३५८. किंवस्तुमूलं छत्रदण्डं भवेत्?**

(अ) स्फटिकमूलम् (स) ताम्रमूलम्
(ब) रजतमूलम् (द) लौहमूलम्

**३५९. कति हस्तविस्तीर्णं भवेद्दण्डम्?**

(अ) द्विहस्तविस्तीर्णम् (स) चतुर्हस्तविस्तीर्णम्
(ब) त्रिहस्तविस्तीर्णम् (द) पञ्चहस्तविस्तीर्णम्

**३६०. युवराजादीनां दण्डानि कति हस्तपरिमितानि?**

(अ) त्रिहस्तपरिमितानि (स) पञ्चहस्तपरिमितानि
(ब) सार्धचतुर्हस्तपरिमितानि (द) षड्हस्तपरिमितानि

**३६१. सेनानायकस्य दण्डं कति हस्तपरिमितं भवति?**

(अ) द्विहस्तपरिमितम् (स) चतुर्हस्तपरिमितम्
(ब) त्रिहस्तपरिमितम् (द) सार्धचतुर्हस्तपरिमितम्

**३६२. महिष्याः दण्डं कियत् परिमितम्?**

(अ) चतुर्हस्तपरिमितम् (स) पञ्चहस्तपरिमितम्
(ब) सार्द्धचतुर्हस्तपरिमितम् (द) त्रिहस्तपरिमितम्

**३६३. अन्येषां कृते कति हस्तपरिमितं छत्रदण्डमपेक्षते?**

(अ) त्रिहस्तपरिमितम् (स) चतुर्हस्तपरिमितम्
(ब) पञ्चहस्तपरिमितम् (द) द्विहस्तपरिमितम्

**३६४. समवृत्तदण्डयुक्तं छत्रं कस्य कृते भवति?**

(अ) विप्रस्य कृते (स) वैश्यस्य कृते
(ब) क्षत्रियस्य कृते (द) शूद्रस्य कृते

**३६५. राज्यसुखस्य सारं किम्?**

(अ) स्वपुरम् (स) शय्या
(ब) स्वगृहम् (द) रत्नविभूषिता स्त्री

**३६६. कः कं विभूषयति?**

(अ) स्त्री रत्नं विभूषयति (स) स्त्री रत्नानि च गृहं भूषयतः
(ब) रत्नं स्त्रियं भूषयति (द) स्नेहः सर्वं भूषयति

**२६७. नृपाणां किं वस्तु सुखं करोति?**

(अ) राज्यम् (स) पुत्राः
(ब) प्रजाः (द) महिषी

**३६८. वनिता सर्वेषां भवति—**
(अ) लक्ष्मी (स) सुखदा
(ब) पुत्रदा (द) आनन्ददा

**३६९. 'गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैरि'यं सूक्तिः कुतः गृहीतः?**
(अ) वाराहीसंहितातः (स) अगस्त्यसंहितातः
(ब) भृगुसंहितातः (द) अत्रिस्मृतितः

**३७०. स्त्रीभ्य तैः गुणाः दत्ताः—**
(अ) सोमेन शौचम् (स) अग्निना सर्वभक्षित्वम्
(ब) गन्धर्वेण वाचम् (द) मनुना निष्कतुल्यत्वम्

**३७१. पादतः के मेध्याः?**
(अ) विप्राः (स) वैश्याः
(ब) क्षत्रियाः (द) शूद्राः

**३७२. पृष्ठतः के मेध्याः?**
(अ) अश्वाः (स) अजाः
(ब) गावः (द) स्त्रियः

**३७३. मुखतः के पूताः?**
(अ) अजाः (स) गावः
(ब) अश्वाः (द) विप्राः

**३७४. सर्वतः के मेध्याः?**
(अ) अश्वाः (स) अजाः
(ब) गावः (द) स्त्रियः

**३७५. मासिकं रजः स्त्रीणां किमपसारयति?**
(अ) पापात् (स) धर्मात्
(ब) गुणात् (द) दुष्कृतात्

**३७६. कानि गृहाणि नश्यन्ति?**
(अ) यानि स्त्रियः शपन्ति (स) यानि स्त्रियः तिरस्कुर्वन्ति
(ब) यानि स्त्रियः परित्यजन्ति (द) यानि स्त्रियः निन्दन्ति

**३७७. कदा शपन्ति कुलस्त्रियः?**
(अ) अपमानिताः (स) पीडिताः
(ब) तिरस्कृताः (द) त्यक्ताः

**३७८. मनुष्याणां समुत्पत्तिः कुतः?**

(अ) ब्रह्मणः (स) पशुतः

(ब) प्रकृतितः (द) स्त्रीतः

**३७९. दम्पत्योर्व्युत्क्रमे दोषः समः शास्त्रे प्रतिष्ठितः।**
**नरा न तमवेक्ष्यन्ते तेनाऽत्र वरमङ्गनाः॥**
**इति कस्य वचनम्?**

(अ) मनोः (स) शौनकस्य

(ब) कश्यपस्य (द) अगस्त्यस्य

**३८०. परस्त्रीगामी कति मासान् भीक्षित्वा शुद्ध्यति?**

(अ) पञ्चमासान् (स) सप्तमासान्

(ब) षण्मासान् (द) चतुर्मासान्

**३८१. मदनाशय नैव गच्छति?**

(अ) दशवर्षेण (स) पञ्चाशद्वर्षेण

(ब) विंशतिवर्षेण (द) शतवर्षेणापि

**३८२. राज्यस्य सारवस्तूनि कियन्ति?**

(अ) त्रीणि (स) पञ्च

(ब) चत्वारि (द) द्वे

**३८३. कियन्ति कर्मेन्द्रियाणि?**

(अ) चत्वारि (स) पञ्च

(ब) त्रीणि (द) षट्

**३८४. कियन्ति ज्ञानेन्द्रियाणि?**

(अ) पञ्च (स) सप्त

(ब) चत्वारि (द) त्रीणि

**३८५. सूक्ष्मतमजीवात्मा कस्य हृदयेऽस्ति?**

(अ) मनुष्याणाम् (स) पशूनाम्

(ब) स्त्रीणाम् (द) परमात्मनः

**३८६. परमात्मा कुत्र निवसति?**

(अ) सर्वभूतानां हृदये (स) पशूनां हृदये

(ब) मनुष्याणां हृदये (द) जन्तूनां हृदये

**३८७. स्त्रियां किमुत्पन्नो भवति?**

(अ) पुत्रः (स) स्वयमात्मा

(ब) पुत्री (द) अन्यः

३८८. **मनसा सह को गच्छति?**

(अ) आत्मा (स) ज्ञानेन्द्रियाणि
(ब) कर्मेन्द्रियाणि (द) बुद्धिः

३८९. **'यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा' कुतः समागता सूक्तिरियम्?**

(अ) वाराहीसंहितातः (स) अगस्त्यसंहितातः
(ब) भृगुसंहितातः (द) गर्गसंहितातः

३९०. **'योऽयं विचिन्तयति याति स तन्मयत्वम्' इयं सूक्तिः कस्मिन् ग्रन्थे?**

(अ) भृगसंहितायाम् (स) गर्गसंहितायाम्
(ब) कश्यपसंहितायाम् (द) बृहत्संहितायाम्

३९१. **स्त्रीणां प्रतिकूलाचरणे जायते—**

(अ) विद्वेषः (स) वैमनस्यम्
(ब) दोषः (द) असन्तोषः

३९२. **किं परित्यक्त्वा मनुष्यः सर्वप्रियो जायते?**

(अ) रागम् (स) पापम्
(ब) द्वेषम् (द) गर्वम्

३९३. **कः पुरुषः विलम्बेन कार्यसिद्धिं करोति?**

(अ) अभिमानी (स) प्रमादी
(ब) क्रोधी (द) आलसी

३९४. **सज्जनः कथं कार्यं साधयति?**

(अ) तल्लीनतया (स) प्रसन्नमनसा
(ब) मधुरभाषणेन (द) धैर्येण

३९५. **कस्तेजवान् भवति?**

(अ) निरभिमानी (स) कर्मठः
(ब) सिद्धकार्यः (द) निरालसः

३९६. **सर्वप्रियत्वं वाञ्छति चेत्—**

(अ) परोक्षे प्रशसां कुर्यात् (स) दोषान् परिहरेत्
(ब) गुणान् गणयेत् (द) वाचं यच्छेत्

३९७. **सर्वे कमुपकुर्वन्ति?**

(अ) यो नित्यमुपकर्तुमुद्यतः (स) यो नित्यं ददाति
(ब) यो नित्यं सेवते (द) यो नित्यं प्रसन्नमना

३९८. **विपत्तौ कस्योपकरणे कीर्तिं लभते?**

(अ) शत्रोः (स) स्वजनस्य
(ब) मित्रस्य (द) सर्वस्य

**३९९. दौर्जन्यं को लभते?**
(अ) यः परगुणान्नाशयितुमिच्छति (स) योऽन्यं तिरस्करोति
(ब) योऽन्यं निन्दति (द) योऽन्यं कुटिलदृष्ट्य पश्यति

**४००. कथं समुत्पत्तिर्जायते कस्य?**
(अ) रक्ताधिक्ये स्त्री (स) समाने नपुसकः
(ब) वीर्याधिक्ये पुरुषः (द) व्यत्यये गर्भपातः

**४०१. कामदेवस्य बन्धनरज्जुः का?**
(अ) प्रासादपृष्ठः (स) नीलोत्पलम्
(ब) चन्द्रः (द) मदालसाप्रिया

**४०२. शुक्रहानिर्भवति—**
(अ) अत्यम्लभोजनात् (स) अतितिक्तभोजनात्
(ब) अतिमधुरभक्षणात् (द) अतिकटुभक्षणात्

**४०३. गन्धार्णवनिर्माणे कियन्ति वस्तूनि समपेक्षन्ते?**
(अ) षोडश (स) चतुर्दश
(ब) पञ्चदश (द) त्रयोदश

**४०४. कतिविधाः केशरगन्धाः?**
(अ) अशीतिप्रकाराः (स) द्व्यशीतिविधाः
(ब) एकाशीतिविधाः (द) चतुरशीतिविधाः

**४०५. कति कोष्ठकः कच्छपुटः?**
(अ) सप्तकोष्ठकः (स) नवकोष्ठकः
(ब) अष्टौ कोष्ठकः (द) दशकोष्ठकः

**४०६. विरक्ताभिः स्त्रीभिः को मृतः?**
(अ) विदूरथः (स) धुन्धुकारी
(ब) काशिराजः (द) अन्यः कश्चित्

**४०७. अनुरागस्थिता रक्ता विरक्ता वेशमानिनी' कस्येदं पद्यम्?**
(अ) कश्यपस्य (स) शौनकस्य
(ब) पराशरस्य (द) गौतमस्य

**४०८. अनुरक्ता किं करोति?**
(अ) प्रियेण प्रियं वदाति (स) समक्षं बालकं समालिङ्गति
(ब) प्रियं वस्तु प्रियं याचते (द) शब्देन सह हसति

४०९. 'अकस्मात् पुरतो भूत्वा कश्चिदालिङ्गति भृशमि'ति कस्य वाक्यम्?
(अ) शौनकस्य (स) पराशरस्य
(ब) गर्गस्य (द) कश्यपस्य

४१०. 'पश्चात् समुत्तिष्ठति पूर्वसुप्ता' कुत्रेयं सूक्तिः?
(अ) शौनकसंहितायाम् (स) गर्गसंहितायाम्
(ब) पराशरसंहितायाम् (द) बृहत्संहितायाम्

४११. 'तीर्थयात्राटनं भेदे परवेश्मसमागमम्' इति कस्य वाक्यम्?
(अ) कश्यपस्य (स) वसिष्ठस्य
(ब) शौनकस्य (द) पराशरस्य

४१२. स्त्रीणां स्वभावजा: प्रमुखा चेष्टा कति?
(अ) पञ्च (स) अष्टौ
(ब) सप्त (द) दश

४१३. 'आत्मगुप्ता भर्तृभक्ता सा श्रीरित्युच्यते बुधै'रिति कस्य वाक्यम्?
(अ) व्यासस्य (स) शौनकस्य
(ब) पराशरस्य (द) कश्यपस्य

४१४. 'सुप्तेऽनुसुप्ता प्रथमं विबुद्धा' इयं सूक्तिः कुत्र?
(अ) गर्गसंहितायाम् (स) शौनकसंहितायाम्
(ब) भृगुसंहितायाम् (द) बृहत्संहितायाम्

४१५. रजस्वलायां स्त्री कदा चाण्डाली कन्या भवति?
(अ) प्रथमेऽहनि (स) तृतीये दिने
(ब) द्वितीये दिने (द) चतुर्थे दिने

४१६. कतिषु दिनेषु रजस्वला स्त्री शुद्ध्यति?
(अ) त्रिषु (स) चतुर्षु
(ब) पञ्चसु (द) सप्तसु

४१७. कतमे दिने रजस्वला स्त्री ब्रह्मघातिनी भवति?
(अ) तृतीये दिने (स) प्रथमे दिने
(ब) चतुर्थे दिने (द) द्वितीये दिने

४१८. कदा भवति रजस्वला स्त्री रजकी?
(अ) प्रथमे दिने (स) तृतीये दिने
(ब) द्वितीये दिने (द) पञ्चमे दिने

४१९. केन दारुणा निर्मितं नृपासनं शुभं भवति?

(अ) देवदारो: (स) शाल्मलीवृक्षस्य
(ब) शिंशपावृक्षस्य (द) काश्मरीवृक्षस्य

**४२०. के वृक्षाः त्याज्याः?**
(अ) कण्टकिन: (स) शीर्णा:
(ब) कुब्जा: (द) श्मशानस्था:

**४२१. कति कर्माङ्गुलतुल्या शय्या नृपस्य शुभा?**
(अ) शतंकर्माङ्गुलयुता (स) अशीतिकर्माङ्गुलयुता
(ब) नवतिकर्माङ्गुलयुता (द) पञ्चाशीतिकर्माङ्गुलयुता

**४२२. सामान्येन कियन्ति रत्नानि भवन्ति?**
(अ) अष्टादश (स) विंशति:
(ब) एकोनविंशति: (द) एकविंशति:

**४२३. कुतः सञ्जातानि रत्नानि?**
(अ) 'वल'नामकाद्दानवात् (स) पृथिवीसकाशात्
(ब) दधीचेरस्थित: (द) निर्मितानि भवन्ति

**४२४. कतिविधाः वज्रमणयः?**
(अ) पञ्चविधा: (स) सप्तविधा:
(ब) षड्विधा: (द) अष्टविधा:

**४२५. विशुद्धं हीरकं कुत्र लभ्यते?**
(अ) वेणानदीतटे (स) सौराष्ट्रे
(ब) कौशलदेशे (द) सूरपारकदेशे

**४२६. कृष्णवर्णं हीरकं कुत्र मिलति?**
(अ) सौराष्ट्रदेशे (स) कौशलदेशे
(ब) मालवदेशे (द) सूरपारकदेशे

**४२७. शिरीषपुष्पतुल्यं हीरकं कुत्र प्राप्यते?**
(अ) वेणातटे (स) सूरपारकदेशे
(ब) सौराष्ट्रे (द) कौशलदेशे

**४२८. पीतं हीरकं कुत्र लभ्यते?**
(अ) कलिङ्गदेशे (स) सौराष्ट्रे
(ब) कौशलदेशे (द) मतङ्गदेशे

**४२९. पौण्डदेशे किंवर्णकं हीरकं जायते?**
(अ) श्यामवर्णकम् (स) कृष्णवर्णकम्
(ब) पीतवर्णकम् (द) रक्तवर्णकम्

**४३०. कलिङ्गदेशे किंवर्णकं हीरकं लभ्यते?**

(अ) पीतवर्णकम् (स) श्यामवर्णकम्

(ब) कृष्णवर्णकम् (द) रक्तवर्णकम्

**४३१. विंशतितण्डुलपरिमितस्य हीरकस्य कियन्मूल्यं भवति?**

(अ) लक्षैकम् (स) पादोनलक्षम्

(ब) पञ्चाशच्छहस्रात्मकम् (द) द्विलक्षपरिमितम्

**४३२. कति पणस्य कार्षपणः भवति?**

(अ) विंशतिपणस्य (स) त्रयोविंशतिपणस्य

(ब) द्वाविंशतिपणस्य (द) चतुर्विंशतिपणस्य

**४३३. शुद्धहीरकस्य का परिभाषा?**

(अ) केनापि नैव त्रुट्यते (स) इद्रधनुषसमानवर्णः

(ब) जलेनैव प्लवते (द) किरणवत्तरति

**४३४. हीरकं का न धारयेत्?**

(अ) पुत्रकामिनी वनिता (स) धान्यफलतुल्यम्

(ब) त्रिपुटयुक्तम् (द) साधारणं हीरकम्

**४३५. 'सुतार्थिनीभिर्धन्याभिर्न धार्यं वज्रसंज्ञकम्' इति कस्य वचनम्?**

(अ) समुद्रस्य (स) कश्यपस्य

(ब) शौनकस्य (द) पराशरस्य

**४३६. मुक्तोत्पत्तिस्थानानि कियन्ति?**

(अ) पञ्च (स) सप्त

(ब) षट् (द) अष्टौ

**४३७. सर्वोत्तमा मुक्ता कुतः समुत्पद्यते?**

(अ) शुक्तितः (स) शङ्खतः

(ब) सर्पतः (द) वंशतः

**४३८. मुक्तायाः कियन्ति आकरस्थानानि?**

(अ) पञ्च (स) सप्त

(ब) षट् (द) अष्टौ

**४३९. धवलवर्णा मुक्ता कस्मिन् देशे भवति?**

(अ) सिंहलदेशे (स) परलोकदेशे

(ब) सौराष्ट्रे (द) पारशवदेशे

**४४०. श्यामलवर्णिकायाः मुक्तायाः देवता भवति—**

(अ) विष्णुः (स) इन्द्रः
(ब) शिवः (द) ब्रह्मा

**४४१. नवनीतनिभाः मुक्ताः कुत्र भवन्ति?**
(अ) सौराष्ट्रे (स) परलोके
(ब) ताम्रपर्णीतटे (द) पारशवदेशे

**४४२. रक्तवर्णिकाः मुक्ताः कुत्र भवन्ति?**
(अ) ताम्रपर्ण्यां (स) परलोकदेशे
(ब) सिंहलदेशे (द) सौराष्ट्रदेशे

**४४३. तेजोयुक्ता मुक्ता कुत्र?**
(अ) पारशवदेशे (स) कौवेरदेशे
(ब) सौराष्ट्रदेशे (द) पाण्ड्यदेशे

**४४४. सूक्ष्मतमा मुक्ता कुत्र भवन्ति?**
(अ) सौराष्ट्रे (स) पाण्ड्यदेशे
(ब) पारशवदेशे (द) विम्बफले

**४४५. जर्जरा मुक्ता कुत्र भवन्ति?**
(अ) हिमदेशे (स) पारशवदेशे
(ब) सुराष्ट्रदेशे (द) सिंहलकदेशे

**४४६. चन्द्रकान्तायाः मुक्तायाः देवता कः?**
(अ) इन्द्रः (स) ब्रह्मा
(ब) विष्णुः (द) महेश्वरः

**४४७. हरितालतुल्यायाः मुक्तायाः देवता कः?**
(अ) वरुणः (स) ब्रह्मा
(ब) विष्णुः (द) इन्द्रः

**४४८. कृष्णवर्णायाः मुक्ताया को देवः?**
(अ) यमः (स) वरुणः
(ब) इन्द्रः (द) अग्निः

**४४९. रक्तवर्णायाः मुक्तायाः को देवः?**
(अ) वायुः (स) इन्द्रः
(ब) यमः (द) वरुणः

**४५०. कमलवर्णायाः मुक्तायाः देवता कः?**
(अ) अग्निः (स) यमः
(ब) इन्द्रः (द) वरुणः

**४५१. धूमरहितवह्निवर्णाया: मुक्ताया को देवता?**

(अ) इन्द्र: (स) वरुण:

(ब) अग्नि: (द) विष्णु:

**४५२. सार्धतिस्रगुञ्जापरिमिताया: मुक्ताया: मूल्यं भवति—**

(अ) सप्ततिकार्षापण: (स) पञ्चाशत्कार्षापण:

(ब) षष्टिकार्षापण: (द) पञ्चपञ्चाशत्कार्षापण:

**४५३. तिस्रगुञ्जापरिमिताया: मुक्ताया: मूल्यं भवति—**

(अ) सप्तति: (स) चत्वारिंशत्

(ब) पञ्चाशत् (द) सप्तपञ्चाशत्

**४५४. त्रयोदशमुक्ताया: मूल्यं भवति—**

(अ) द्विशतं रूप्यकाणि (स) शतं रूप्यकाणि

(ब) सार्धशतं रूप्यकाणि (द) सप्तति रूप्यकाणि

**४५५. विंशतिमुक्ताफलानां मूल्यं कियन्ति रूप्यकाणि?**

(अ) त्रिंशदधिकशतं रूप्यकाणि (स) शतं रूप्यकाणि

(ब) सार्धशतं रूप्यकाणि (द) सपादशतं रूप्यकाणि

**४५६. शत् सङ्ख्यकानां मुक्ताफलानां मूल्यं भवति?**

(अ) चत्वारिंशत् रूप्यकाणि (स) पञ्चाशत् रूप्यकाणि

(ब) त्रिंशत् रूप्यकाणि (द) षष्टि रूप्यकाणि

**४५७. पञ्चचत्वारिंशत् मुक्ताफलानां मूल्यं भवति?**

(अ) चत्वारिंशत् रूप्यकाणि (स) पञ्चाशत् रूप्यकाणि

(ब) पञ्चचत्वारिशत् रूप्यकाणि (द) पञ्चपञ्चाशत् रूप्यकाणि

**४५८. शतं मुक्ताफलानां मूल्यं कियत्?**

(अ) पञ्चविंशति रूप्यकाणि (स) सप्तविंशति रूप्यकाणि

(ब) षड्विंशति रूप्यकाणि (द) विंशद्रूप्यकाणि

**४५९. शतद्वयसङ्ख्यकानां मुक्ताफलानां कियन्मूल्यं भवति?**

(अ) द्वादश रूप्यकाणि (स) षोडश रूप्यकाणि

(ब) पञ्चदश रूप्यकाणि (द) विंशति रूप्यकाणि

**४६०. शतत्रयाणां मुक्ताफलानां मूल्यम्—**

(अ) षड् रूप्यकाणि (स) अष्टौ रूप्यकाणि

(ब) सप्त रूप्यकाणि (द) दश रूप्यकाणि

**४६१. चतुःशतानां मुक्ताफलानां मूल्यं भवति—**

